कथं हरौ मनुष्याणां भक्तिरव्यभिचारिणी ।
केन सिद्ध्येत्तु[१] सकलं कर्म त्रिविधमात्मनः ॥ १० ॥

इत्येवं[२] प्रष्टुमात्मानमुद्यतान्प्रेक्ष्य शौनकः ।
सांजलिर्वाक्यमाह स्म विनयावनतः सुधीः ॥ ११ ॥

### शौनक उवाच

आस्ते सिद्धाश्रमे पुण्ये सूतः पौराणिकोत्तमः ।
स एतदखिलं वेत्ति व्यासशिष्यो यतीश्वरः ॥ १२ ॥

तस्मात्तमेव पृच्छाम इत्येवं शौनको मुनिः[३] ।
अथ ते ऋषयो[४] जग्मुः पुण्यं सिद्धाश्रमं ततः ॥ १३ ॥

पप्रच्छुस्ते सुखासीनं नैमिषारण्यवासिनः ।

### ऋषय ऊचुः

वयं त्वतिथयः प्राप्तास्त्वातिथेयोऽसि सुव्रत ॥ १४ ॥

स्नानदानोपचारेण[५] पूजयित्वा यथाविधि ।
केन विष्णुः प्रसन्नः स्यात्स कथं पूज्यते नरैः ॥ १५ ॥

मुक्तिसाधनभूतं च ब्रूहि तत्त्वविनिर्णयम्[६] ।

### सूत उवाच

श्रृणुध्वमृषयः सर्वे हरिं तत्त्वविनिर्णयम् ॥ १६ ॥

नत्वा विष्णुं श्रियं वायुं भारतीं शेषसंज्ञकम् ।
द्वैपायनं गुरुं कृष्णं प्रवक्ष्यामि यथामति ॥ १७ ॥

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥ १८ ॥

---

१. सिध्यंत। २. आहृदं। ३.मुनीन्। ४. मुनयो। ५. ज्ञानदानोपचारेण। ६. तत्त्वं सुनिश्चितम्।

## शौनक उवाच

किमर्थं नमनं विष्णोर्ग्रन्थादौ मुनिसत्तम ।
कर्तव्यं ब्रूहि मे ब्रह्मन् कृपया[1] मम सुव्रत ॥ १९ ॥

ततः श्रियं ततो वायुं भारतीं च ततः परम् ।
अन्ते व्यासं किमर्थं च त्वं नमस्कृतवानसि[2] ॥
सूत सूत महाभाग ब्रूहि कारणमत्र च[3] ॥ २० ॥

## सूत उवाच

आदौ वन्द्यः सर्ववेदैकवेद्यो वेदे शास्त्रे सेतिहासे पुराणे ।
सत्तां प्रायो विष्णुरेवैक एव प्रकाशतेऽतो नम्य एको हरिर्हि ॥ २१ ॥

सर्वत्र मुख्यस्त्वधिकोऽन्यतोऽपि स एव नम्यो न च शंकराद्याः ।
नमन्ति येऽविनयाच्छंकरं तु विनायकं चण्डिकां रेणुकां च ॥ २२ ॥

तथा सूर्यं भैरवं मातरिश्वं तथा वार्णीं गिरिजां वै श्रियं च ।
सर्वेऽपि ते वैष्णवा नैव लोके न तद्भक्ता वेति चार्या वदन्ति ॥ २३ ॥

न पार्थक्यान्नमनं कार्यमेव प्रीणन्ति नैता देवताः पूजनेन ।
पूजां गृहीत्वा देवताश्चैव सर्वाः किंचिद्दत्वा फलदानेन तांश्च ॥ २४ ॥

सन्तर्प्य तुष्टैः स्वमनोऽनुसारात् तैः कारितां काम्यपूजां तथैव ।
निवेदयित्वा परदेवतायां विष्णौ हरौ श्रीपुरुषादिवन्द्ये ॥ २५ ॥

इहापरत्रापि सुखेतराणि दास्यन्ति पश्चादधरं वै तमश्च ।
अतो ह्येते नैव पूज्या न नम्या मोक्षेच्छुभिर्ब्राह्मणाद्यैर्द्विजेन्द्र ॥ २६ ॥

तथैव सर्वाश्रमिभिश्च नित्यं महाविपत्तावपि विप्रवर्याः ।
श्रीकाम्यया ये तु भजन्ति नित्यं श्रीब्रह्मरुद्रेन्द्रयमादिदेवान् ॥ २७ ॥

---

१. कारणं। २.नमनं कृतवानसि । ३. अत्र हि।

इहैव भुंजन्ति महच्च दुःखं महापदः कुष्ठभगंदरादीन् ।
नमन्ति येऽवैष्णवान्ब्रह्मरुद्रवायुप्रतीकान् नैव ते विष्णुभक्ताः ॥ २८ ॥

अभिप्रायं त्वत्र वक्ष्ये मुनीन्द्राः परं गोप्यं हृदि धार्यं हि तद्धि ।
वायोः प्रतीकं पूज्यमेवेह विप्राः न ब्रह्मरुद्रादिप्रतीकमेव ॥ २९ ॥

पूजाकाले देवदेवस्य विष्णोः वायोः प्रतीकं योग्यभागे निधाय ।
अन्तर्गतं तस्य वायोर्हरिं च लक्ष्मीपतिं पूजयित्वा हि सम्यक् ॥ ३० ॥

पश्चाद्वायोः सुप्रतीकं च सम्यक् निर्माल्यशेषेण हरेः समर्चयेत् ।
पृथक् च स्रग्धूपविलेपनादिपूजां प्रकुर्वन्ति च ये विमूढाः ॥ ३१ ॥

तेषां दुःखमिह लोके परत्र भविष्यते नात्र विचार्यमस्ति
प्रायश्चित्तं स्वस्ति विप्राः कथंचित्तत्कुर्वन्तु स्मरणं नाम विष्णोः ॥ ३२ ॥

पाषण्डरुद्रादिकसंप्रतिष्ठितान् हरेर्वायोः शंकरस्य प्रतीकान् ।
नमन्ति ये फलबुध्द्या विमूढास्तेषां फलं शाश्वतं दुःखमेव ॥ ३३ ॥

वायोः प्रतीकं यदि विप्रवर्यैः प्रतिष्ठितं चेन्नमनं हि कार्यम् ।
नैवेद्यशेषेण हरेश्च विष्णोः पूजा कृता चेन्नहि दोषलेशः ॥ ३४ ॥

गुरुर्हि मुख्यो हनुमज्जनिर्महान् रामाङ्घ्रिभक्तो हनुमान्सदैव ।
एवं विदित्वा परमं हरिं च पुत्रं पुनर्मुख्यदेवस्य वायोः ॥ ३५ ॥

नमस्कारो नान्यथा विप्रवर्या आधीयतां हृदि सर्वैः रहस्यम् ।
ये वैष्णवा वैष्णवदासभृत्याः सर्वेऽपि ते सर्वदा विष्णुमेव ॥ ३६ ॥

नमन्ति ये वै प्रतिपादयन्ति तथैव पुण्यानि च सात्त्विकानि ।
नमन्ति ये वासुदेवं हरिं च सम्यक् स्वशक्त्या प्रतिपादयन्ति ॥ ३७ ॥

प्रवत्तिमार्गेण न पूजयन्ति ह्यापत्काले परदैवं तदन्यम् ।
ते वैष्णवा वैष्णवदासभृत्या अन्ये सर्वेऽवैष्णवमात्रकाः स्मृताः ॥ ३८ ॥

उपक्रमैरुपसंहारस्य लिंगैर्हरिं गुरुं ह्यन्तरेणैव यान्ति ।
तान्येवाहुः सत्पुराणानि विप्राः कलौ युगे नाभ्यसूयन्ति सर्वे ॥ ३९ ॥

यतो हि नान्यं प्रतिपादयन्ति प्रवृत्तिधर्मान् स्वस्ववर्णानुरूपान् ।
अतो ह्यसूयन्ति सदा विमूढा कलौ हि विप्राः प्रचुरा हि तेऽपि ॥ ४० ॥

न चास्ति विष्णोः सदृशं च दैवतं न चास्ति वायोः सदृशो गुरुश्च ।
न चास्ति तीर्थं सदृशं विष्णुपद्याः न विष्णुभक्तेन समोऽस्ति भक्तः॥ ४१ ॥

अन्यानि विष्णोः प्रतिपादकानि सर्वाणि ते सात्त्विकानीति चाहुः ।
श्राव्याणि तान्येव मनुष्यलोके श्राव्याणि नान्यानि च दुःखदानि ॥ ४२ ॥

कलौ युगे सर्वपुराणमध्ये त्रीण्येव मुख्यानि हरिप्रियाणि ।
मुख्यं पुराणं हि कलौ नृणां च श्रेयस्करं भागवतं पुराणम् ॥ ४३ ॥

पूर्वं हि सृष्टिः प्रतिपाद्यतेऽत्र यतो ह्यतो भागवतं परं स्मृतम् ।
यस्मिन् पुराणे कथयन्ति सृष्टिं ह्यादौ विष्णोर्ब्रह्मरुद्रादिकानाम् ॥ ४४ ॥

नानार्थमेवं[1] कथयन्ति विप्र[2] नीचोच्चरूपं ज्ञानमाहुर्महान्तः ।
तेनैव सिद्धं प्रवदन्ति सर्वं ह्यतः परं भागवतं पुराणम् ॥ ४५ ॥

ततः परं विष्णुपुराणमाहुः ततः परं गारुडसंज्ञकं च ।
त्रीण्येव मुख्यानि कलौ नृणां तु तथा विशेषो गारुडे किंचिदस्ति ॥ ४६ ॥

श्रुणुध्वं वै तं विशेषं च विप्रास्त्र्यंशैर्युक्तं गारुडाख्यं पुराणम् ।
आद्यांशं वै कर्मकाण्डं वदन्ति द्वितीयांशं धर्मकाण्डं तमाहुः ॥ ४७ ॥

तृतीयांशं ब्रह्मकाण्डं वदन्ति तेषां मध्ये त्वन्तिमोऽयं वरिष्ठः ।
तृतीयांशश्रवणात्पुण्यमाहुः तुल्यं पुण्यं भागवतस्य विप्राः ॥ ४८ ॥

तृतीयांशे पठिते वेदतुल्यं फलं भवेन्नात्र विचार्यमस्ति ।
तृतीयांशश्रवणादेव विप्राः फलं [3]प्रोक्तं पठतोऽप्यर्थमेवम् ॥ ४९ ॥

---

१. ज्ञानार्थमेवं । २. विप्रा । ३. सिद्धिं पाठतोऽप्यर्थतो वा ।

तृतीयांशश्रवणादर्थतश्च पुण्यं चाहुः पठतो वै दशांशम् ।
ततोऽवरं मत्स्यपुराणमाहुस्ततोऽवरं कूर्मपुराणमाहुः ॥ ५० ॥
तथैव वै वायुपुराणमाहुस्त्रीण्येव चाहुः सात्त्विकानीति लोके ।
तत्रापि किंचिद्वेदितव्यं भवेच्च पुराणषट्के सत्त्वरूपे मुनीन्द्राः ॥ ५१ ॥
सत्त्वाधमे मात्स्यकौर्मे तथाहुः वायुं चाहुः सात्त्विकं मध्यमं च ।
विष्णोः पुराणं भागवतं पुराणं सत्त्वोत्तमं गारुडं चाहुरार्याः ॥ ५२ ॥
स्कान्दं पाद्मं वामनं वै वराहं तथाऽऽग्नेयं भविष्यं पर्वसृष्टौ ।
एतान्याहू राजसानीति विप्रास्तत्रैकदेशः सात्त्विकस्तामसश्च ॥ ५३ ॥
रजः प्राचुर्याद्राजसानीति चाहुः श्राव्याणि नैतानि मुमुक्षुभिः सदा ।
तेषां मध्ये सात्त्विकांशाश्च सन्ति तेषां श्रुतेर्गारुडीयं फलं च ॥ ५४ ॥
ब्रह्माण्डलैंग्ये ब्रह्मवैवर्तकं वै मार्कण्डेयं ब्राह्ममादित्यकं च ।
एतान्याहुस्तामसानीति विप्रास्तत्रैकदेशः सात्त्विको राजसश्च ॥ ५५ ॥
श्राव्याणि नैतानि मनुष्यलोके तत्त्वेच्छुभिस्तामसानीत्यतो हि ।
तेषु स्थिताः सात्त्विकांशा मुनीन्द्रास्तेषां श्रुतिर्गारुडैकांघ्रितुल्यम ॥ ५६ ॥
[१]अल्पान्युपपुराणानि वदन्त्यष्टादशानि च ।
विष्णुधर्मोत्तरं चैव तन्त्रं भागवतं तथा ॥ ५७ ॥
तत्त्वसारं नारसिंहं वायुप्रोक्तं तथैव च ।
तथा हंसपुराणं च षडेतानि मुनीश्वराः ॥ ५८ ॥
सात्त्विकान्येव जानीध्वं प्रायशो नात्र संशयः ।
एतेषां श्रवणादेव गारुडार्धफलं श्रुतम् ॥ ५९ ॥
भविष्योत्तरनामानं बृहन्नारदमेव च ।
यमनारदसंवादं लघुनारदमेव च ॥ ६० ॥

---
१. अन्यान्युपपुराणानि ।

विनायकपुराणं च बृहद्ब्रह्माण्डमेव च ।
एतानि राजसान्याहुः श्रवणाद्भक्तिरुत्तमा ॥ ६१ ॥

गारुडात्पादतुल्यं च फलं चाहुर्मनीषिणः ।
पुराणं भागवतं शैवं नन्दिप्रोक्तं तथैव च ॥ ६२ ॥

पाशुपत्यं रैणुकं च भैरवं च तथैव च ।
एतानि तामसान्याहुर्हरितत्त्वार्थवेदिनः ॥ ६३ ॥

एतेषां श्रवणाद्विप्राः गारुडाङ्घ्र्यर्धमेव च ।
सर्वेष्वपि पुराणेषु श्रेष्ठं भागवतं स्मृतम् ॥ ६५ ॥

वक्तुः स्याद्विगुणं पुण्यं व्याख्यातुश्च तथाधिकम् ।
अनन्तवेदैः साम्यमाहुर्महान्तः भारान्महत्त्वाद्भारतस्यापि विप्राः ।
वेदेभ्योऽस्य त्वर्थतश्चाधिकत्वं वदन्ति वै विष्णुरहस्यवेदिनः ॥ ६७ ॥

तत्र श्रेष्ठां गीतिकामाहुरार्यास्तथैव विष्णोर्नामसहस्रकं च ।
तयोस्तत्र श्रवणाद्भारतस्य दशाधिकं फलमाहुर्महान्तः ॥ ६८ ॥

दैत्याः सर्वे विप्रकुलेषु भूत्वा कृते युगे भारते षट्सहस्राम् ।
निष्कास्य काश्चिन्नवनिर्मितानां निवेशनं तत्र कुर्वन्ति नित्यम् ॥ ६९ ॥

मत्वा हरिं भगवान् व्यासरूपी चक्रे तदा भागवतं पुराणम् ।
तथा समाख्याय च वैष्णवं तत्ततः परं गारुडाख्यं स चक्रे ॥ ७० ॥

अतो हि गारुडं मुख्यं पुराणं शास्त्रसम्मितम् ।
गारुडेन समं नास्ति विष्णुधर्मप्रदर्शने ॥ ७१ ॥

यथा सुराणां प्रवरो जनार्दनो यथाऽऽयुधानां प्रवरं सुदर्शनम् ।
यथाऽश्वमेधः प्रवरः क्रतूनां छिन्नेषु भक्तेषु तथैव रुद्रः ॥ ७२ ॥

नदीषु गंगा जलजेषु पद्ममच्छिन्नभक्तेषु तथैव वायुः ।
तथा पुराणेषु च गारुडं च मुख्यं तदाहुर्हरितत्त्वदर्शने ॥ ७३ ॥

गारुडाख्ये पुराणे तु प्रतिपाद्यो हरिः स्मृतः ।
अतो हरिर्नमस्कार्यो गम्यो योग्यो हरिः स्मृतः ॥ ७४ ॥
भाग्यात्मकत्वात् श्रीदेव्या नमनं तदनु स्मृतम् ।
परो नरोत्तमो वा यः साधकेशोऽपि च स्मृतः ॥ ७५ ॥
अतो नम्यो वायुरपि पुराणादौ द्विजोत्तमाः ।
भारती वाक्यरूपत्वान्नम्या वायोरनन्तरम् ॥ ७६ ॥
उपसाधको नरः प्रोक्तो यतोऽतस्तदनन्तरम् ।
नम्य इत्युच्यते सद्भिस्तारतम्येन सर्वदा ॥ ७७ ॥
अतो व्यासं नमस्कुर्याद् ग्रन्थकर्तृत्वहेतुतः ।

**शौनक उवाच**

व्यासस्य नमनं ह्यन्ते कथं कार्यं महात्मनः ॥ ७८ ॥
अन्ते च वन्दने तस्य कारणं ब्रूहि सुव्रत ।

**सूत उवाच**

विष्णोरनन्तरं व्यासनमनं मुख्यमेव हि ॥ ७९ ॥
हरिरेव यतो व्यासो वाच्यवक्तृस्वरूपकः ।
व्यासो नैव समत्वेन प्रोक्तो भगवतो हरेः ॥ ८० ॥
तत्रापि कारणं वक्ष्ये सादरेण मुनीश्वराः ।
व्यासस्तु कश्चन ऋषिः पुराणे तामसे स्मृतः ॥ ८१ ॥
इति ज्ञानावलम्बेन दैत्या दैत्यानुगैः समाः ।
प्रविशन्ति ह्यन्धतम इति त्वन्ते नमस्कृताः ॥ ८२ ॥
यदिदं परमं गोप्यं हृदि धार्यं न संशयः ।
पराणां नम्यमेवोक्तं प्रतिपाद्यं यतोऽत्र हि ॥ ८३ ॥

समासव्यासभावाद्धि पराणां तत्प्रतीयते ।
वास्तवं तं न जानीयुरुपजीव्यो यतो हरिः ॥ ८४ ॥

हरिर्व्यासस्त्वेक एव व्यासस्तु हरिवत्स्मृतः ।
उपजीव्यतदीशत्वे तयोरेव न संशयः ॥ ८५ ॥

ईशकोटिप्रविष्टत्वात् श्रियः स्वामित्वमीरितम्
त्रयाणामुपजीव्यत्वात् सेव्यत्वात् स्वामिता स्मृता ॥ ८६ ॥

वाय्वादीनां त्रयाणां च सेव्यत्वात्सेव्यता स्मृता ।
भूभारहरणे विष्णोः प्रधानाङ्गं हि मारुतिः ॥ ८७ ॥

वाक्यरूपा भारती तु द्वितीयाङ्गं हि सा स्मृता ।
तृतीयाङ्गं हरेः शेषो न नम्याः साम्यतो हरेः ॥ ८८ ॥

प्रतिपाद्या मुख्यतया नम्या एव समीरिताः ।
अवान्तराश्च वाय्वाद्या न नम्यास्तेन ते स्मृताः ॥ ८९ ॥

भीष्मद्रोणादिनामानि भीष्मादिष्वेव मुख्यतः ।
वाचकानि यतो नित्यं तन्नम्यास्ते मुनीश्वराः ॥ ९० ॥

पराणामेव नम्यत्वं प्रतिपाद्यत्वमेव हि ।
एतत्सर्वं मयाऽऽख्यातं किमन्यच्छ्रोतुमिच्छथ ॥ ९१ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**
**सात्त्विकादिपुराणविभागनम्यानम्यदेवविभागादिविषयनिरूपणं**
**नाम प्रथमोऽध्यायः ॥ १ ॥**

## ।। द्वितीयोऽध्यायः ।।

### श्रीशौनक उवाच

कथं ससर्ज भगवान् तत्तत्तत्त्वाभिमानिनः ।
सृष्टिक्रमं न जानामि देवानां ह्यन्तरं मुने ।। १ ।।

शौनकेनैवमुक्तस्तु सूतो वचनमब्रवीत् ।
सम्यग्व्यवसिता बुद्धिस्तव ब्रह्मर्षिसत्तम ।। २ ।।

एवमेव कृतः प्रश्नो हरौ तु गरुडेन वै[1] ।
यदुक्तवान् हरिस्तस्मै तद्वक्ष्यामि तवानघ ।। ३ ।।

सृष्टौ *ज्ञाते तवोत्कर्षो ज्ञातप्रायो भविष्यति ।
ब्रह्मादीनां तारतम्यज्ञानं मम भविष्यति ।। ४ ।।

मोक्षोपायः स एवोक्त इतरत्तस्य साधनम् ।
गरुडेनैवमुक्तस्तु कृष्णो वचनमब्रवीत् ।। ५ ।।

### श्रीकृष्ण उवाच

[2]मूलरूपो ह्यतो ज्ञेयो पूर्णत्वाद्विष्णुरव्ययः ।
अवतारमिदं प्रोक्तं पूर्णत्वादेव सुव्रत ।। ६ ।।

अनेको ह्येकतां प्राप्य संशेते [3]प्रलयाय वै ।
तत्रापि च विशेषोऽस्ति ज्ञातव्यं तत्त्वमंजसा ।। ७ ।।

भेदेन दर्शनाद्वापि भेदाभेदेन दर्शनात् ।
विष्णोर्गुणानां रूपाणां तदंगानां *सुखादिनाम्[4] ।। ८ ।।

[5]तत्रैव दर्शनाद्वापि क्षिप्रमेव तमो व्रजेत् ।। ९ ।।

---

१. कृतप्रश्नो हरिस्तु गरुडेन वै । *ज्ञातायामित्यर्थः । २. मूलरूपी ह्यजो ।३. प्रलयार्णवे ।
*सुखादीनामित्यर्थः । ४. मुखादिनां । ५. तथा दर्शनको यस्तु

[1]पुरुषान्तरमारभ्य कल्पिता ये द्विजोत्तम ।
हरिरूपास्तु ते ज्ञेया एकीभूता हि तेन ते ॥ १० ॥
प्रलये समनुप्राप्ते जीवाः संयान्ति मामकाः ।
विराड्रूपे हरेः सन्ति तदा ते च ह्यनेकधा ॥ ११ ॥
एकीभावं प्राप्नुवन्ति मूलेन [2]प्रलये द्विज ।
बिंबेन तु स्वयं विष्णुरेकीभावं व्रजेद्यदि ॥ १२ ॥
प्रतिबिम्बः कथं जीवो भवेन्नारायणस्य च ।
तदधीनस्तत्सदृशो हरेर्जीवो न संशयः ॥ १३ ॥
प्रतिबिंबस्य शब्दार्थो ह्ययमेव उदाहृतः ।
तस्माच्च बिंबरूपाणां एकीभावं न चिन्तयेत् ॥ १४ ॥
कृष्णरामादिरूपेषु त्वेकीभावो विवक्षितः ।
बिंबानां मूलरूपस्य भेदो नात्र विवक्षितः ॥ १५ ॥
तत्रापि च विशेषोऽस्ति [3]ज्ञातव्यस्तत्वमिच्छुभिः ।
एकांशेन तु बिम्बैस्तु चैकीभावं व्रजन्ति ते ॥ १६ ॥
एकांशेन तु जीवत्वे संस्थिता नात्र संशयः ।
बिम्बमूलं न जानन्ति ते जना ह्यसुराः स्मृताः ॥ १७ ॥
बिम्बरूपस्य विष्णोश्च बलज्ञानक्रियादिषु
तारतम्यं विजानन्ति ते जना ह्यसुराः स्मृताः ॥ १८ ॥
एक एव हरिः पूर्वं ह्यविद्यावशतः स्वयम् ।
अनेको [4]भवति ह्यारादादर्शप्रतिबिम्बवत् ॥ १९ ॥
एवं वदन्ति ये मूढास्तेऽपि यान्त्यधरं तमः ।
उपाधिर्द्विविधः प्रोक्तः स्वरूपो बाह्य एव च ॥ २० ॥

---

१. पुरुषं तु समारभ्य कल्प्यन्ता ये द्विजोत्तम ।२. प्रलये द्विजाः । ३. ज्ञातव्यं तत्वमिच्छुभिः । ४. ज्ञातव्यं तत्वमिच्छुभिः । ५. भवति ह्यद्धा ह्यादर्शे प्रतिबिम्बवत् ।

बाह्योपाधिर्लये याति मुक्तावन्यस्य संस्थितिः ।
सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ॥ २१ ॥

चिद्रूपाख्यो ह्युपाधिस्तु मोक्षे येऽप्यधिकारिणः ।
दुःखरूपो ह्युपाधिस्तु तमसो येऽधिकारिणः ॥ २२ ॥

मिश्ररूपो ह्युपाधिस्तु नित्यसंसारिणां मतः ।
बाह्योपाधिर्लिंगदेहः सर्वेषां नात्र संशयः ॥ २३ ॥

दैत्यान् दुःखयते यस्मात् तस्माद्दुःखी हरिः [१]स्मृतः ।
तत्तद्दुःखस्वरूपत्वात् दैत्यानां बिंबरूपकः ॥ २४ ॥

दैत्यस्थितानां बिम्बानां मूलरूपस्य वै [२]प्रभो ।
परस्परं तथा भेदं ह्यन्तरं वा न चिन्तयेत् ॥ २५ ॥

श्रीभूदुर्गादिरूपाणां तथा सीतादिरूपिणाम् ।
अन्योन्यं नाणुमात्रं च भेदो [३]बाह्यान्तरेऽपि च ॥ २६ ॥

चिन्तनीयः कथमपि ज्ञात्वा यान्त्यधरं तमः ।
[४]प्रतिबिम्बस्थितो बिम्बः [५]स्त्रीरूपो ह्यस्ति सर्वदा ॥ २७ ॥

प्रलये समनुप्राप्ते [६]लक्ष्म्या सह खगोत्तम ।
एकीभावं नाप्नुवन्ति बिम्बेन सह संस्थिताः ॥ २८ ॥

बिम्बस्थितानां रूपाणां लक्ष्म्याश्च विनतासुत ।
[७]भेदस्तु नाणुमात्रं च शङ्कनीयः कथंचन ॥ २९ ॥

यदा हि शेते[८] प्रलयार्णवे [९]विभुर्जीवाश्च सर्वानुदरे निवेश्य ।
मुक्तांश्च ब्रह्मेन्द्रमरुद्गणादीन् प्राप्तव्यमुक्तींश्च सृतौ च संस्थितान् ॥ ३० ॥

---

१. स्वयं । २. प्रभोः । ३. बाह्यान्तरोऽपि वा । ४. प्रतिबिम्बस्थिते बिम्बे । ५. श्रीरूपो ।
६. लक्ष्म्या । ७. भेदश्च । ८. स शेते । ९. प्रभुः ।

प्राप्तान्धकूपादिसमस्तजीवान् तथैव प्राप्तव्यकलीनथापरान् ।
तथैव नित्यं सृतिसंस्थितान् जनानचेतनान् वृक्षरूपादिजीवान्।। ३१ ।।

एवं जनान् जठरे सन्निधाय सम्यक् शेते ह्यम्भसि [१]वै स कल्पे ।
[२]लक्ष्मीस्तु सा सर्ववेदात्मिका च भक्त्या हरौ नित्यसंवर्धितापि ।। ३२ ।।

अत्यादरं दर्शयतीव[३] सा तु ईडे विष्णुं भक्तिसंवर्धितापि ।
चेष्टादिरूपेण तदा न किंचिद् आसीद्धिना विष्णुमथ श्रियं च ।। ३३ ।।

पर्यङ्करूपेण बभूव देवी [४]वासस्वरूपेण रमा विरेजे ।
सर्वं रमा सैव तदैव चासीत्सैका देवी बहुरूपा बभाषे ।। ३४ ।।

त्वमुत्कृष्टः सर्वदेवोत्तमत्वान्न त्वत्समः कश्चिदेवाधिको वा[५] ।
त्वं ब्रह्म एको न चतुर्मुखश्च नाहं न रुद्रो न बृहस्पतिश्च ।। ३५ ।।

विष्णावेव ब्रह्मशब्दो हि मुख्यो ह्यन्येष्वमुख्यो ब्रह्मरुद्रादिकेषु ।
अनन्तगुणपूर्णत्वात् ब्रह्मेति हरिरुच्यते ।। ३६ ।।

गुणादिपूर्णताभावान्नान्ये ब्रह्मेत्युदीरिताः ।
देशानन्त्यं गुणतः कालतो वा नास्त्यानन्त्यं क्वापि देशे च काले ।। ३७ ।।

ब्रह्मादिदेवे देशतः कालतो वा नेत्यानन्त्यं क्वापि देशे च काले ।
यदानन्त्यं किमु वक्तव्यमत्र गुणानन्त्यं नास्ति ब्रह्मादिकेषु ।
यद्यप्यहं देशतः कालतश्च समस्तदा वासुदेवेन सार्धम् ।। ३८ ।।

तथापि मे गुणतो नास्त्यनन्त्यं ततो धर्मा गुणतोनन्ततश्च ।
सन्ति श्रुतावविरुद्धाश्च देवे चिन्त्या अचिन्त्या बहुधा ह्यनन्ताः ।। ३९ ।।

अतो गुणांस्तव देवस्य विष्णोः स्तोतुं सदा स्मो न हरेः कदापि ।
नाहं न केशौ[६] न च गीर्न रुद्रो न दक्षकन्या न च मेनकासुता ।। ४० ।।

---

१. वै कराले । २. लक्ष्मीस्तदा । ३. दर्शयन्तीव । ४. वायूदरूपेण । ५. कश्चिदतोऽधिको वा । ६. केरौ ।

न वै बिडौजा न च वा पुलोमजा न चेध्मवाहो न यमो न चान्यः ।
न नारदो नापि भृगुर्वसिष्ठो न विघ्नपो नापि बल्यादयश्च ॥ ४१ ॥
न वै विराटो नापि भीमः[१] शनिश्च न पुष्करो न कशेरुस्तथैव ।
न किन्नराः[२] पितरो नैव देवा गन्धर्वमुख्या[३] नापि वा तुष्यसंज्ञाः[४] ॥ ४२ ॥
न वै क्षितीशा न च मानुषाश्च विष्णोर्न जानन्ति किमत्र चान्ये ।
मत्तोऽधमः कोटिगुणेन ब्रह्मा समो हि तस्य ब्रह्मणो मातरिश्वा ॥ ४३ ॥
तौ वै विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे ।
बुद्धौ समानौ संसृतौ मोक्षकाले परस्पराधारसमन्वितौ च ॥ ४४ ॥
अन्नाभिमानं ब्रह्म चाहुर्मुरारिं जीवाभिमानं वायुमाहुर्महान्तः ।
न शक्तोऽसौ ब्रह्मदेवो विवस्तुं वायुं विना संसृतावेव नित्यं ॥ ४५ ॥
*न तं विना मातरिश्वापि वस्तुं अन्योन्यमाप्तिः कालतो न्यूनता च ।
यदा महत्तत्वनियामकोऽभूद्ब्रह्माण्डान्तस्थूलसृष्टौ महात्मा ॥ ४६ ॥
तदा वायुर्नाशकद्वै महात्मा बाह्ये सृष्टौ कालभेदेन चास्ति ।
सरस्वती भारती ब्रह्मणस्तु संवत्सरानन्तरं सम्बभूव ॥ ४७ ॥
यदा दशाब्दा समतीता महात्मा तदा वायुः समभूल्लोकपूज्यः ।
किंचिन्न्यूनत्वं स्थूलसृष्टौ महात्मन्नेतावता वानयोः साम्यहानिः ॥ ४८ ॥
सरस्वती वत्सरात्सम्बभूव ह्यनन्तरं ब्रह्मणो जन्मकालात् ।
गिरः सकाशात्कालतो न्यूनतास्ति वायोस्तदा ह्यधमत्वे क्षतिः का ॥ ४९ ॥
वायोरनन्तरं वाणी ह्यभूत्संवत्सरात्परम् ।
यावत्पश्चाज्जनिस्तावत् पूर्वदेहक्षयो भवेत् ॥ ५० ॥

---

१. नाग्निभार्या । २. न वै चिराः पितरो । ३. देवगन्धर्वमुख्या । ४. मनुष्यसंज्ञाः ।
*न तं विना मातरिश्वापि वस्तुं ह्यतोन्योन्यं सर्वदा चाश्रितौ हि ।
यस्माद्ब्रह्मत्वं नियमेनैव याति वायुस्तस्मात्समता मुक्तिकाले ॥
वायुत्वेऽपि किंचिदूनत्वमस्ति पदाप्राप्तिः कालतो न्यूनता च ॥ -अधिकः पाठः रामतत्त्वप्रकाशने ॥

शेषो वीन्द्रो रुद्र एते त्रयश्च समा ह्येते ज्ञानबलादिकेष्वपि ।
तथापि[1] तेषां कालतो न्यूनतास्ति कालोऽपि तेषां दिव्यसहस्रवर्षः ॥ ५० ॥

अनन्तरुद्रौ ब्रह्मवायू यथा वा[2] तथा ज्ञेयौ नैव हानिः स्वरूपे ।
स्थूलस्य सृष्टौ बाह्यसृष्टौ महात्मन्कालान्न्यूनत्वं स मया नैव चिन्त्यः[3] ॥ ५१ ॥

तेषां सकाशाद्वारुणी पार्वती च सौपर्णिनाम्नी तिस्र एता महात्मन् ।
दशाब्देभ्योऽनन्तरं सम्बभूवुः सरस्वती भारतीवच्च बोध्या ॥ ५२ ॥

इन्द्रोऽवरो रुद्रभार्यादिकेभ्य[4] एवं ज्ञानं सर्वदा देह्यमन्दम्[5] ।
एवं ज्ञानं यस्य भवेच्च लोके स वै ज्ञानी वेदवेद्यः स एव ॥ ५३ ॥

न वै ज्ञानी ह्यन्तरं यो न वेद न वेदवादी न च वेदपाठकः ॥ ५४ ॥

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि प्रियाणि च हरेः सदा ॥ ५५ ॥

मम स्वामी हरिर्नित्यं दासोऽहं सर्वदा हरेः ।
ब्रह्माद्याः देवताः सर्वाः गुरवो मे यथाक्रमम् ॥ ५६ ॥

एतेषां च हरिः स्वामी वेदे सर्वत्र गीयते ।
एवं जानंस्तु यो विद्वान् (वेदान्) संपठेत्स द्विजोत्तमः ॥ ५७ ॥

स वेदपाठको ज्ञेयस्तदन्ये वेदवादिनः ।
वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः ॥ ५८ ॥

ज्ञानाभिमानी वेदमानी उभौ तु परस्परं ह्यूचतुः[6] सर्वदैव ।
अलं ह्यलं यत्र वासो मुरारेराचार्याणां संगदोषाद् द्विजानाम् ॥ ५९ ॥

महापराधाः सन्ति लोके महात्मन् सहस्रशः शतशः कोटिशश्च ।
हरिश्च तान् क्षमते सर्वदैव नामत्रयस्मरणाद्वै कृपालुः ॥ ६० ॥

---

१. अथापि । २. यथावत्तथा । ३. अनयोर्नैव चिन्त्यम् । ४. रुद्रभार्यादिकाभ्यः । ५. देहि मह्यम् । ६. उभौ तौ परस्परं ।

सर्वापराधाद्रहितं दानमानैर्युक्तं सदा तारतम्याच्च हीनम् ।
दृष्ट्वापराधं तस्य विष्णुर्महात्मा हाहाकारं कुरुते क्रोधबुध्द्या ।। ६१ ।।

उत्तिष्ठ गोविन्द सुवेदवेद्य सोऽव्याकृताख्यो मयि सम्यक् प्रसीद ।
भो केशवोत्तिष्ठ सुखस्वरूप सृष्टौ व्यये वर्तयितुं समर्थः ।। ६२ ।।

सृष्ट्वा ब्रह्माणं प्रेरयेत्पूज्यसृष्टौ सृष्ट्वा रुद्रं प्रेरयेत्संहृतौ च ।
प्राप्तव्ययोग्यान् ब्रह्मशेषादिदेवान् दृष्ट्वा दृष्ट्वा देहि मोक्षं च सम्यक् ।। ६३ ।।

हरे मुरारे स्वापहीनाद्य तिष्ठ कल्यादिकानन्तरज्ञानहीनान् ।
सम्यक् दृष्ट्वा कर्मदृष्टया महात्मन् लब्धं तमो देहि दुःखस्वरूपम् ।। ६४ ।।

दैत्यादिकान् दुःखमतीन्ह यस्मात् तमस्यन्धे सर्वदा चित्स्वरूपी ।
तस्मादाहुर्दुःखरूपी हरिस्त्वं दुःखस्वरूपात्त्वं च दुःखी हरे त्वम् ।। ६५ ।।

उत्तिष्ठ नारायण वासुदेव ह्युत्तिष्ठ कृष्णाच्युत माधवेति ।
उत्तिष्ठ चन्द्रेश दयार्द्रमूर्ते उत्तिष्ठ लक्ष्मीश नमो नमस्ते ।। ६६ ।।

उत्तिष्ठ मध्वेश सरस्वतीश उत्तिष्ठ रुद्रेश तथाम्बिकेश ।
उत्तिष्ठ चन्द्रेश तथा शचीश विप्रेश भक्तेश गवेश नित्यम् ।। ६७ ।।

शास्त्रप्रियोत्तिष्ठ ऋचि प्रियस्त्वं यजुःप्रियोत्तिष्ठ निदानमूर्ते ।
सामप्रियस्त्वं च तथा मुरारे अथर्ववेदप्रिय सर्वदा त्वम् ।। ६८ ।।

गद्यप्रियस्त्वं च पुराणमूर्ते स्तुतिप्रियोत्तिष्ठ विचित्रमूर्ते ।
सुगायनप्रीतिकरस्त्वमेव ह्युत्तिष्ठ शीघ्रं कमलापतिस्त्वम् ।। ६९ ।।

एवं स्तुतो विणुरजः पुराणे ह्यतित्वरावानुत्थितो नित्यबुद्धः ।। ७० ।।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**

**ब्रह्मरुद्रादिदेवतातारतम्यनिरूपणं नाम द्वितीयोऽध्यायः ।। २ ।।**

## ॥ तृतीयोऽध्यायः ॥

### श्रीकृष्ण उवाच

बभूवेच्छा मम देवस्य विष्णोः स्रष्टुं सृजन्मोक्ष्ययोग्यांश्च मोक्तुम् ।
इच्छाशक्तिः सर्वदैवास्ति विष्णोस्तथापि तदूव्याहरणं च लौकिकम् ॥ १ ॥

तदा हरिर्जगृहे [1]लौकिकं च तमःपानं तेन रूपेण चक्रे ।
तद्रूपमाहुः प्राकृतं वै तदज्ञा ह्यन्धन्तमः प्रविशन्त्येव सर्वे ॥ २ ॥

अवताराः महाविष्णोः पूर्णाः सर्वे प्रकीर्तिताः ।
पूर्णं च तत्परं रूपं पूर्णात्पूर्णाः प्रकीर्तिताः[2] ॥ ३ ॥

परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ।
न देशकालसामर्थ्यात्पारावर्यं कथंचन ॥ ४ ॥

पूर्वरूपं च पूर्णं च पूर्णं यदवतारगम् ।
रूपं तदात्मन्यादाय पूर्णमेवावशिष्यते ॥ ५ ॥

लौकिकव्यवहारोऽयं भूभारक्षपणादिकः ।
तस्य दृष्टिं विना नान्यो लयः कृष्णादिना क्वचित् ॥ ६ ॥

तत्वे पीडा न कर्तव्या तया दुःखानि विन्दति ।
अत्यन्तपूडनात्तस्य रोगस्तस्य न संशयः ॥ ७ ॥

ज्ञातव्यांशे तु पीडा तु कर्तव्या गुरुणा सह ।
तमन्तेवासिनं चाहुः स एव च गुरुः स्मृतः ॥ ८ ॥

ये कुर्वन्ति हरेस्तत्वविचारं तु परस्परम् ।
तावेव गुरुशिष्यौ तु विनोदानन्दसंयुतौ ॥ ९ ॥

गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना ।
हर्षामर्षयुतः शिष्यो गुरुः कौटिल्यसंयुतः ॥ १० ॥

---

१. पौरुषं । २. पूर्णात्पूर्णः समुद्गतः ।

उभौ तौ निरयं यातौ यावदाचन्द्रतारकम् ।
साक्षाद्धरिः पुरुषः पिङ्गलाक्षः स्वमायायां गुणमय्यां महात्मा ।
स्वपौरुषेणैव सुमंगलेन अधात्तु वीर्यं भगवान् वीर्यवांश्च ॥ ११ ॥

**गरुड उवाच**

वीर्यस्वरूपं ब्रूहि मे वासुदेव वीर्ये त्वदीये संशयो मे विभाति ।
किं वीर्यमीशस्य स्वरूपभूतं किं वा विभिन्नं वद साधु वेत्सि ॥ १२ ॥

**कृष्ण उवाच**

यद्वीर्यमाधत्त हरिः स्वयं प्रभुर्मायाभिधायां विनतातनूज ।
तद्वीर्यमाहुर्नृहरेः स्वरूपं विपश्चितो निश्चितत्वदर्शिनः ॥ १३ ॥

भिन्नं तदाहुः प्राकृतमेव चाहुः स्वनाभिपद्मादिकवच्च बोध्यम् ।
नैतावता ज्ञानरूपस्य विष्णोः न वीर्यहानिरिति चिन्तनीयम् ॥ १४ ॥

वीर्यस्वरूपी भगवान्वासुदेवः सर्वत्र देशेऽपि च सर्वकाले ।
सर्वार्थवान् यदि न स्यात्खगेन्द्र तर्हीश्वरः पुरुषो नैव स स्यात् ॥ १५ ॥

अचिन्त्यवीर्यैश्चिन्त्यवीर्यैर्द्विरूपः स्त्रीरूपमेकं पुरुषं तथापरम् ।
उभे रूपे वीर्यवती खगेन्द्र तयोरभेदश्चिन्तनीयो हि सम्यक् ॥ १६ ॥

स्त्रीरूपवान् यदि न स्यात्खगेन्द्र स्त्रीणां कथं प्रतिबिम्बत्वमेव ।
स्त्रीरूपमस्माद्ब्रह्मजं चिन्तनीयं स्वरूपमेतन्नान्यथा चिन्तनीयम् ॥ १७ ॥

स्त्रीबिम्बभूतहरिरूपे खगेन्द्र स्त्रीरूपमस्तीति विचिन्तनीयम् ॥ १८ ॥

**गरुड उवाच**

स्त्रिया स्त्रियश्च संयोगं व्यर्थमाहुर्मनीषिणः ।
स्त्रीरूपभूते बिम्बे तु स्त्रीरूपाः सन्ति सर्वदा ॥ १९ ॥

स्थितौ तत्र निमित्तं च ब्रूहि कृष्ण मम प्रभो ।

**कृष्ण उवाच**

स्त्रीबिम्बभूते स्त्रीरूपे लक्ष्मीर्न स्यात्खगेश्वर ।
नित्यावियोगिनी देवी कथं स्यात्परमात्मनः ॥ २० ॥

हरेरनन्तरूपाणां स्त्रीरूपाणां खगेश्वर
अनन्तानन्तरूपेण नित्यं शुश्रूषणे रता ॥ २१ ॥

अतो लक्ष्म्या वियोगस्तु शंकनीयः कथंचन ।

नारायणो नाम हरिः स्वतन्त्रः श्रिया विना नास्ति कदापि तार्क्ष्य ।
हरेर्मुकुन्दस्य परारविनेद शुश्रूषमाणा परमादरेण ॥ २२ ॥

हरिं विना श्रीरपि देशकाले नास्तीति मोक्षेच्छुभिरेव वेद्यम् ।
यस्यामधाद्वीर्यमनुक्षणं च सा मामिका चेन्द्रजालात्मिकेति ॥ २३ ॥

वदन्ति ये ह्यसुरा मूढरूपा अन्धन्तमः प्रविशन्त्येव सर्वे ।
माया नाम प्रकृतिस्त्वेवमाहुः सुसूक्ष्मरूपा नतु चेन्द्रजालिका ॥ २४ ॥

तस्याभिमानः श्रीरिति वेदितव्यो वीर्याधानं तत्र तेषां च मेलः ।
कार्योन्मुखं मेलनं चाहुरार्या इतो रूपं नाहुरार्याश्च विष्णोः ॥ २५ ॥

सानादिनित्या सत्यरूपा च विष्णोः मिथ्यारूपा सा कथं स्यात्खगेन्द्र ।
सत्या तनुः प्रकृतेस्तन्निगूढा सत्यत्वमाहुर्व्यवहारार्थरूपम् ॥ २६ ॥

व्यवहाररूपा सत्यता चेत्प्रकृत्यास्तदा कथं स्याद्यदनादिभूता ।

अनादिनित्या यदि न स्यात्खगेन्द्र सुसूक्ष्मरूपेण न कारणं स्यात् ॥२७॥

सूक्ष्मेण रूपेण च कारणं स्यात्तर्हि प्रपंचस्य कारणं वद ।
अविद्याया वशतो विष्णुरेव नानारूपैर्दृश्यते विष्णुरेव ॥ २८ ॥

शास्त्रज्ञानान्नाशमेति ह्यविद्या न संशयो हरिणा चैक्यमेति ।
एवं ब्रूषे यदि वादात्खगेन्द्र वक्ष्येऽहं ते तत्र युक्तिं श्रुणु त्वम् ॥ २९ ॥

सर्वज्ञरूपस्य हि मे मुरारेः कथं हरेर्घटते ह्यज्ञता च ।
सूर्ये यथा तमो नास्ति तथा नारायणे हरौ ।
अज्ञानं नास्ति पक्षीन्द्र कथं तत्वं ब्रवीष्यहो ॥ ३० ॥

अतो नाहुर्ब्रह्मणो नादिकालादुपाधिसंबन्धवशादज्ञता चेत् ।
सर्वज्ञोऽसौ कुत्र पक्षीन्द्र विष्णुरल्पज्ञजीवो ज्ञानशून्यश्च कुत्र ॥ ३१ ॥

विरुद्धयोश्चानयोः सर्वदैव कथं चैक्यं संवदिष्यन्ति वेदाः ।
देशे काले सर्वदा दुःखहीनो जगत्कर्ता पूर्णशक्तिः सदैव ॥ ३२ ॥

जीवः सदा स्वल्पकर्ताप्यपूर्णो संसाररूपी दुःखरूपी च नित्यम् ।
विरुद्धयोश्चानयोरैक्यमाहुरीशस्य मायावशतो मायिनश्च ॥ ३३ ॥

ये वैष्णवा वैष्णवदासवश्याः तेषां द्रोहं सर्वदा संचरेद्यः ।
हरिप्रीतिस्तेन भवेन्न नित्यमानन्दवृद्धिस्तेन भवेन्न मुक्तौ ॥ ३४ ॥

मायी सदा मायिभृत्यस्तथापि भेदज्ञानान्निन्द्यते कार्यते च ।
तेनापि तेषां दुःखवृद्धिर्भवेच्च ह्यन्धन्तमः पुनरावृत्तिहीनम् ॥ ३५ ॥

खगेन्द्रातः प्रकृतिः सूक्ष्मरूपा सा नित्या सा सत्यभूता सदैव ।
एवं स्वयं कालवाय्वादिकानां पराणवः सत्यरूपाश्च सन्ति ॥ ३६ ॥

पराणूनां लक्षणं वेदितव्यं ज्ञानेच्छुभिर्नान्यथा वेदितव्यम् ।
पदार्थानां पार्थिवानां खगेन्द्र विशेषाणां चरमाख्यो विशेषः ॥ ३७ ॥

स एव स्यात्परमार्द्विजेन्द्र योऽन्त्यो विशेषोऽवयवश्च स स्मृतः।

## गरुड उवाच

हे कृष्ण हे माधव सात्वतां पते पदार्थानां चरमांश पराणुः ॥ ३८ ॥

इति प्रोक्तं तत्र मे संशयोऽस्ति योऽन्त्यो विसेषः स तु नाशयुक्तः ।
यो ह्यंशयुक्तो नतु योऽन्त्यो विशेष एवं ममाभाति वचस्तु तथ्यम् ॥ ३९ ॥

**कृष्ण उवाच**

य एव लोके संस्थिता मानुषास्तु विशेषाणां दर्शने शक्तियुक्ताः ।
तथापि ते यस्य चांशित्वमेव विशेषं वै नैव द्रष्टुं समर्थाः ॥ ४० ॥

तमेवाहुश्चरमांशं विशेषं ये चैवमाहुर्मुनयस्तेन चान्ये ।
ये काणादाः गौतमाद्याः खगेन्द्र निरंशकं परमाणुं वदन्ति ॥ ४१ ॥

अनन्तांशैः संयुतत्वेपि तांश्च निरंशिनो भ्रान्तिदृष्ट्या वदन्ति ।
तस्मात्पराणोः परमाणुत्वमस्ति तदंशानां विनतागर्भजात ॥ ४२ ॥

पराणूनां एकदेशे खगेन्द्र तन्नो सन्ति प्राणिनां राशयश्च ।
प्रत्येकशः सन्ति रूपा हरेश्च ह्यतश्च तत्परमाणोरणीयः ॥ ४३ ॥

यो वा त्वणीयान्परमस्य विष्णोः स एष रूपो महतो महीयान् ।
तेषामन्योन्यं न विशेषोऽस्ति कश्चिदचिन्त्यरूपे च विचिन्तनीयः ॥ ४४ ॥

कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ।
देशकोटिविहीनत्वं देशानन्त्यं विदुर्बुधाः ॥ ४५ ॥

गुणानामप्रमेयत्वं गुणानन्त्यं विदुर्बुधाः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ॥ ४६ ॥

तस्य सर्वस्वरूपेषु चानन्त्यं तु त्रिलक्षमम् ।
तथापि देशतस्तस्य परिच्छेदोऽपि युज्यते ॥ ४७ ॥

परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते ।
तस्याचिन्त्याद्भुताश्चैर्य व्यवहारार्थमेव च ॥ ४८ ॥

गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतो ह्यस्ति सर्वभूतेषु यद्यपि ॥ ४९ ॥

न च भेदः क्वचित्तस्य ह्यणुमात्रेऽपि युज्यते ।
तथापि विद्यतेऽणुत्वं तस्मादैश्वर्ययोगतः ॥ ५० ॥

तस्माद्विध्यवतारार्थं व्याप्तत्वं चापि भण्यते ।
यत्तस्य व्यापकं रूपं परं नारायणं विदुः ॥ ५१ ॥

अतश्च परमाणूनां पार्थिवानन्त्यवादिनाम् ।
भेदः परस्परं ज्ञेयस्तथेशस्य महात्मनः ॥ ५२ ॥

जडेशयोर्जडानां च जीवानां च परस्परम् ।
तथैव जडजीवानां नित्यं भेदो जडेशयोः ॥ ५३ ॥

पंचभेदा इमे नित्यं सर्वावस्थासु सर्वशः ।
एतादृश्यां तु मायायां वीर्यमाधत्त वीर्यवान् ॥
पुरुषाख्यो हरिस्तस्मात् त्रिगुणानसृजत्प्रभुः ॥ ५४ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे भगवद्वीर्यस्वरूपतदाधानद्वारकगुणत्रयसृष्टि जडेशभेदादिनिरूपणं**

**नाम तृतीयोऽध्यायः ॥ ३ ॥**

## ।। चतुर्थोऽध्यायः ।।

### श्रीकृष्ण उवाच

[१]यथा ससर्ज भगवान् त्रीन् गुणान्प्रकृतेस्तदा ।
लक्ष्मीस्त्रिरूपा संभूता श्रीभूदुर्गेति संज्ञिता ।। १ ।।

सत्वाभिमानिनी श्रीस्तु भूर्देवी रजमानिनी ।
तमोभिमानिनी दुर्गा ह्येवमाहुर्मनीषिणः ।। २ ।।।

अन्तरं न विजानीतद्रूपाणां च परस्परम् ।
गुणानां चैव सम्बन्धाद् दुर्गादीनां खगेश्वर ।। ३ ।।

अन्तरं ये विजानन्ति ते यान्त्यन्धन्तमः परम् ।
पुरुषस्तु त्रिरूपोऽभूत् विष्णुर्ब्रह्मा भवेति सः ।। ४ ।।

सत्वेन लोऽकान्वर्धयितुं विष्णुः साक्षाद्धरिः स्वयम् ।
तमसापि समान्हन्तुं रुद्रे च प्राविशद्धरिः ।। ५ ।।

आद्यो ब्रह्मा स विज्ञेयो न तु साक्षाद्धरिः स्वयम् ।
तमसापि समान्हन्तुं रुद्रे च प्राविशद्धरिः ।। ६ ।।

रुद्रे स्थितो रुद्रसंज्ञो न रुद्रस्तु हरिः स्वयम् ।
विष्णुरेव हरिः साक्षात् तावुभौ न ही स्मृतौ ।। ७ ।।

आविष्टरूपौ विज्ञेयौ ब्रह्मरुद्राभिधायकौ ।
एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथंचन ।। ८ ।।

विष्णुब्रह्मादिरूपाणामैक्यं जानन्ति ये द्विजाः ।
ते यान्ति नरकं घोरं पुनरावृत्तिवर्जितम् ।। ९ ।।

गुणत्रयं प्रविष्टस्तु पुरुषो हरिरव्ययः ।
कार्योन्मुखं यथा भूयात्क्षोभयामास वै तथा ।। १० ।।

---

१. यदा ससर्ज ।

जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ।
गुणत्रये विद्यमानाद्भागादेव न संशयः ॥ ११ ॥

अतश्च परमाणूनां पार्थिवानन्त्यवादिनाम् ।
महतो ब्रह्मवायू च जज्ञाते [१]ह्यभिमानिनौ ।
तयोः संवत्सरात्पश्चात् यमलौ संबभूवतुः ॥ १२ ॥

रजःप्रधानं यच्छत्वं महच्छत्वमितीरितम् ।
सर्गं त्विमं विजानीयाद् गुणवैषम्यनामकम् ॥ १३ ॥

गरुड उवाच

महत्तत्वस्वरूपस्य ज्ञानार्थं देवकीसुत ।
त्वयोक्ता गुणवैषम्यनामिका सृष्टिरुत्तमा ॥ १४ ॥

गुणवैषम्यशब्दार्थं मम ब्रूहि महाप्रभो ।

श्रीकृष्ण उवाच

गुणवैषम्यशब्दार्थज्ञापनाय खगेश्वर ॥ १५ ॥

अपेक्षितं च तत्रादौ गुणसाम्यं न संशयः ।
सम्यग् ज्ञापयितुं तच्च ह्यादौ तावत्खगेश्वर ॥ १६ ॥

राशीभूतगुणानां तु दर्शयिष्ये [२]स्थितिं च वै ।
राशीभूतस्य तमसः सकाशाद्विनतासुत ॥ १७ ॥

राशीभूतं रजो ज्ञेयं द्विगुणं तत्तु नान्यथा ।
राशीभूतस्य रजसः सकाशाद्विनतासुत ॥ १८ ॥

राशीभूतं रजश्चैव द्विगुणं परिकीर्तितम् ।
राशीभूतं तथा सत्त्वं द्विगुणं समुदाहृतम् ।
मूलप्रकृतिजा ह्येते न मूला प्रकृतिः स्मृता ॥ १९ ॥

---

१. स्वाभिमानिनौ । २. स्थितिं तव ।

यतः प्रकृतिरूपाणां परिच्छेदो न विद्यते ।
अतः प्रकृतिजा ज्ञेया न मूलास्ते खगेश्वर ॥ २० ॥

एवं तव गुणानां च परिमाणं खगेश्वर ।
उक्तं स्वरूपं तेषां तु तव सम्यक् खगेश्वर ॥ २१ ॥

तत्र राशित्रये सत्त्वं केवलं समुदाहृतम् ।
रजस्तमोभ्यां गरुड ह्यविमिश्रं ह्यतस्तु तत् ॥ २२ ॥

साम्यत्वाच्च तथैवोक्तिर्न तु तत्त्वाभिमानिनः ।
उपस्थमानिनो वीन्द्र बभूवुस्तदनन्तरम् ॥ २३ ॥

विश्वामित्रो वसिष्ठोऽत्रिर्मरीचिः पुलहः क्रतुः ।
पुलस्त्योऽङ्गिरसश्चैव तथा वैवस्वतो मनुः ॥ २४ ॥

मन्वादयोऽनन्तसंख्या उपस्थात्मान ईरिताः ।
पायोश्च मानिनो वीन्द्र जज्ञिरे तदनन्तरम् ॥ २५ ॥

सूर्येषु द्वादशेष्वेको मित्रस्तारा गुरोः प्रिया ।
कोणाधिपो निर्ऋतिश्च प्रावही प्रवहप्रिया ॥ २६ ॥

चत्वार एते पक्षीन्द्र पायुतत्त्वाभिमानिनः ।
घ्राणाभिमानिनः सर्वे जज्ञिरे द्विजसत्तम ॥ २७ ॥

विष्वक्सेनो वायुपुत्रो ह्यश्विनौ गणपस्तथा ।
वित्तपः सप्त वसवः उक्तो ह्यग्निस्तथाऽष्टमः ॥ २८ ॥

सप्तानां श्रुणु नामानि द्रोणः प्राणो ध्रुवस्तथा ।
अर्को दोषस्तथा वस्कः सप्तमस्तु विभावसुः ॥ २९ ॥

दश रुद्रास्तथा ज्ञेया मूलरुद्रो भवः स्मृतः ।
दश रुद्रस्य नामानि श्रुणुष्व द्विजसत्तम ॥ ३० ॥

रैवतोऽजो भवो भीमो वामदेवो वृषाकपिः ।
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ ३१ ॥

दश रुद्रा इति प्रोक्ता षडादित्यान् द्विजोत्तम ।
उरुक्रमस्तथा शक्रो विवस्वान्वरुणस्तथा ॥ ३२ ॥

पर्जन्योऽतिबाहुरेत उक्ताः पूर्वं द्विजोत्तम ।
पर्जन्यव्यतिरिक्तास्तु पंचैवोक्ता न संशयः ॥ ३३ ॥

गङ्गासमस्तु पर्जन्य इति प्रोक्तः खगेश्वर ।
सविता ह्यर्यमा धाता पूषा त्वष्ट तथा भगः ॥ ३४ ॥

चत्वारिंशत्तथा सप्त मरुतः परिकीर्तिताः ।
द्वावुक्ताविति विज्ञेयौ प्रवहोऽतिवहस्तथा ॥ ३५ ॥

तथा दशविधा ज्ञेया विश्वेदेवाः खगेश्वर ।
श्रुणु नामानि तेषां तु पुरूरवार्द्रवसंज्ञकौ ॥ ३६ ॥

धूरिलोचनसंज्ञौ द्वौ क्रतुदक्षेतिसंज्ञकौ ।
द्वौ सत्यवसुसंज्ञौ च कामकालकसंज्ञकौ ॥ ३७ ॥

एवं दशविधाज्ञेया विश्वदेवाः प्रकीर्तिताः ।
तथा ऋभुगणश्चोक्तस्तथा च पितरस्त्रयः ॥ ३८ ॥

द्यावापृथिव्यौ विज्ञेयौ एते च षडशीतयः ।
देवाः प्रजज्ञिरे सर्वे नासिकेन्द्रियमानिनः ॥ ३९ ॥

आकाशस्याभिमानी तु गणपः समुदाहृतः ।
उभयत्राभिमानीति ज्ञेयं तत्त्वार्थवेदिभिः ॥ ४० ॥

विष्वक्सेनं विना सर्वे जयाद्याः विष्णुपार्षदाः ।
अभवन्समर्हानाश्च विष्वक्सेनादनन्तरम् ॥ ४१ ॥

एतेऽपि नासिकायाश्च अवान्तनियामकाः ।
अतस्ते तत्त्वमानिभ्यो ह्यवरास्ते प्रकीर्तिताः ॥ ४२ ॥

स्पर्शतत्त्वाभिमानी तु अपानश्चेत्युदाहृतः ।
रूपाभिमानी संजज्ञे व्यानो नाम महाप्रभो ॥ ४३ ॥

रसात्मक उदानश्च समानो गन्धनामकः ।
अपां नाथाश्च चत्वारो मरुतः परिकीर्तिताः ॥ ४४ ॥

एवं गुणत्रयाणां च मिश्रितत्वात्खगेश्वर ।
गुणसाम्यमिति प्रहुरेवं जानीहि वै खग ॥ ४५ ॥

अन्यथा ये विजानन्ति ते यान्ति ह्यधरं तमः ।

**गरुड उवाच**

राशीकृतगुणानां च त्रयाणां परमेश्वर ॥ ४६ ॥

विशालानां परब्रह्मन् प्रलये गुणसाम्यता ।
कथं ब्रूहि महाभाग ह्येतत्तत्त्वं समासतः ॥ ४७ ॥

**श्रीकृष्ण उवाच**

राशीभूतगुणानां त्रयाणामपि सत्तम ।
तदा विमिश्रितत्वेन ह्यवस्थानं विदुर्बुधाः ॥ ४८ ॥

इदानीं गुणवैषम्यं श्रुणु सम्यग् मम प्रिय ।
सृष्टिकाले तु संप्राप्ते यत्पूर्वं प्रलये खग ॥ ४९ ॥

दशभागैश्च सत्त्वे तु मिश्रितं यद्रजस्तथा ।
तमस्यप्येकभागेन प्रविष्टं यत्तु तद् रजः ॥ ५० ॥

रजस्यप्येकभागेन प्रविष्टं यच्च तद्रजः ।
एवं द्वादशभागैश्च प्रविष्टं सर्वशो रजः ॥ ५१ ॥

सत्त्वस्थैर्दशभागैश्च तथैकेन रजोंऽशिना ।
एवमेकादशैर्भागैस्तथैकांशेन वै द्विज ॥ ५२ ॥

मिश्रितं भवति ह्यद्धा महत्तत्वं तदा स्मृतम् ।
एतदन्यो विशेषश्च मन्तव्यो विनतासुत ॥ ५३ ॥

एकांशस्तमसो ज्ञेयो महत्तत्वे न संशयः ।
एवं त्रयोदशैर्भागैर्मिश्रितं तच्च सत्तम ॥ ५४ ॥

एवमेतद्विजानीयान्नान्यथा तु कथंचन ।

**गरुड उवाच**

चतुर्मुखाच्छ्रुतं पूर्वं भगवन्सात्वतां पते ॥ ५५ ॥

चतुर्भागात्समुत्पन्नं महत्तत्वमिति प्रभो ।
तत्रैकांशस्तमः प्रोक्तस्त्रिभागो रज एव च ॥ ५६ ॥

तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् ।
चतुर्भागात्मकं प्रोक्तं महत्तत्वं श्रुतं मया ॥ ५७ ॥

त्रयोदशांशैः सम्भूतमिति प्रोक्तं त्वयानघ ।
तदेतत्संशयं छिन्दि कृपालो भक्तवत्सल ॥ ५८ ॥

**कृष्ण उवाच**

ब्रह्मोक्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ।
मूलसत्वे मिश्रितं च दशभागेन यद्रजः ॥ ५९ ॥

तत्सर्वं च मिलित्वैव त्वेको भागस्तु कीर्तितः ।
मूले रजसि यच्चोक्तो रजोभागः खगेश्वर ॥ ६० ॥

भागे द्वितीये विज्ञेयस्तद्रजो नात्र संशयः ।
मूले रजसि यच्चोक्तो रजोभागस्तथैव च ॥ ६१ ॥

तृतीयभागो विज्ञेयो नात्र कार्या विचारणा ।
तथा मूले च तमसि ह्येको भागस्तमः स्मृतः ॥ ६२ ॥

एवं त्रिभागो रजसः एकांशस्तमसः स्मृतः ।
तदाहुर्ब्रह्मणो देहं गुणवैषम्यनामकम् ॥ ६३ ॥

**गरुड उवाच**

महत्तत्वस्य चत्वारो भागास्तेषु रजस्त्रयः ।
तमसस्त्वेक एवेति त्वयोक्तं गरुडध्वज ॥ ६४ ॥

रजोभागात्मको देहो ब्रह्मणः परमेष्ठिनः ।
इति प्रतीयते ब्रह्मन् वचनात्तव माधव ॥ ६५ ॥

शुद्धसत्त्वात्मको देहो ब्रह्मणः परमेष्ठिनः ।
एवं हि श्रूयते कृष्ण संशयो मेऽत्र बाधते ॥ ६६ ॥

तमेव संशयं छिन्दि यद्धि तच्छ्रोतुमर्हति ।

**कृष्ण उवाच**

त्रिभागभूते रजसि तथा द्वादशभागके ॥ ६७ ॥

रजसोऽपेक्षया सत्त्वं दशांशाधिकमेव च ।
प्रविष्टमस्तीति खग ज्ञातव्यं तच्छृणु द्विज ॥ ६८ ॥

तमसोऽपेक्षया तत्र तम एकादशं स्मृतम् ।
एकांशस्तु रजो ज्ञेयं एवमाहुर्मनीषिणः ॥ ६९ ॥

तमसोऽपेक्षया तत्र तम एकादशं स्मृतम् ।
एकांशस्तु रजो ज्ञेयं एवमाहुर्मनीषिणः ॥ ७० ॥

एवं च मिलितान्भागान् वक्ष्ये श्रुणु महामते ।
त्रयोदशांशो विज्ञेयो द्वादशांशं रजः स्मृतम् ॥ ७१ ॥

एकांशस्तमसो ज्ञेयस्तत्र भागान् श्रुणु द्विज ।
आदौ तु द्वादशांशेषु भागान्वक्ष्यामि तच्छुणु ॥ ७२ ॥

एकांशस्तमसो ज्ञेयस्तद्दशांशाधिकं रजः ।
तच्छतांशाधिकं सत्वमेवमाहुर्मनीषिणः ॥ ७३ ॥

एकांशस्तमसि ह्येवं विभागान् श्रुणु सत्तम ।
एकांशस्तु रजो ज्ञेयस्तमो ह्येकादशाधिकम् ॥ ७४ ॥

तमोभागास्तु विज्ञेयास्तद्दशांशाधिकः स्मृतः ।
सत्वभाग इति ज्ञेयो महछात्वे खगेश्वर ॥ ७५ ॥

सत्वांशो बहुलो यस्मात् शुद्धसत्वं चतुर्मुखः ।
उत्पछिर्महतश्चोक्तमेवं च विनतासुत ।
तज्ज्ञानान्मोक्षमाप्नोति नान्यथा तु कथंचन ॥ ७६ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे महत्तत्वसृष्टिकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

## ॥ पंचमोऽध्यायः ॥

एतादृशे महत्तत्वे लक्ष्म्या सह हरिः स्वयं ।
प्रविवेश महाभाग क्षोभयामास वै हरिः ॥ १ ॥

अहं तत्त्वमभूत्तस्माज्ज्ञानद्रव्यक्रियात्मकम् ।
अहंकारसमुत्पत्तावेकांशस्तमसि स्मृतः ॥ २ ॥

तद्दशांशाधिकरजः तद्दशांशाधिकं प्रभो ।
सत्वमित्युच्यते सद्भिः ह्येतदात्मा त्वहं स्मृतम् ॥ ३ ॥

अहं तत्वाभिमानी तु आदौ शेषो बभूव ह ।
सहस्राब्दाच्च पश्चात्तौ जातौ खगहरौ द्विज ॥ ४ ॥

अहंतत्वे खगे ह्येषु प्रविष्टो हरिरव्ययः ।
क्षोभयामास भगवांल्लक्ष्म्या सह हरिः स्वयम् ॥ ५ ॥

अहंतत्वमृडाद्येषु प्रविष्टो हि हरिः स्वयम् ।
वैकारिकस्तामसश्च तैजसश्चेत्यहं त्रिधा ।
त्रिधा बभूव रुद्रोऽपि यतस्तेषां नियामकः ॥ ६ ॥

वैकारिकस्थितो रुद्रो वैकारिक इति स्मृतः ।
तामसे तु स्थितो रुद्रस्तामसो ह्यभिधीयते ॥ ७ ॥

तैजसे तु स्थितो रुद्रो लोके वै तैजसः स्मृतः ।
तैजसे तु ह्यहंतत्वे लक्ष्म्या सह हरिः स्वयम् ॥ ८ ॥

विशित्वा क्षोभयामास तदासौ दशधा त्वभूत् ।
श्रोत्रं चक्षुःस्पर्शनं च रसनं घ्राणमेव च ॥ ९ ॥

वाक्पाणिपादं पायुश्च उपस्थेति दश स्मृताः ।
वैकारिके ह्यहंतत्वे प्रविश्याक्षोभयद्धरिः ॥ १० ॥

मनस्तत्वमभूदादौ इन्द्रियाणां च देवताः ।
एकादशविधा आसन् क्रमेण तु खगेश्वर ॥ ११ ॥
मनोऽभिमानिनी ह्यादौ वारुणी त्वभवत्तदा ।
अनन्तरं च सौपर्णी गिरिजापि तथैव च ॥ १२ ॥
शेषादनन्तरास्तासां दशवर्षादनन्तरम् ।
उत्पत्तिरिति विज्ञेयं क्रमेण तु खगेश्वर ॥ १३ ॥
मनोऽभिमानिनावन्या विन्द्रकामौ प्रजज्ञतुः ।
तार्क्ष्य ह्यनन्तरौ ज्ञेयौ मुक्तौ संसार एव च ॥ १४ ॥
ततस्त्वगात्मा ह्यभवत्सोऽहंकारिक ईरितः ।
ततः पाण्यात्मकश्चैव जज्ञिरे पक्षिसत्तम ॥ १५ ॥
शचीरतिश्चानिरुद्धस्तथा स्वायंभुवो मनुः ।
बृहस्पतिस्तथा दक्ष एते पाण्यात्मकाः स्मृताः ॥ १६ ॥
दक्षस्यानन्तरं जज्ञे प्रवहो नाम चाण्डज ।
स एवोक्तश्चातिवाहः पाण्यात्मेत्येव चोदितः ॥ १७ ॥
दक्षस्यानन्तरं ज्ञेयो न तु शच्यादिवत्स्मृतः ।
ततोऽभवन्महाभाग चक्षुरिन्द्रियमानिनः ॥ १८ ॥
स्वायंभुवमनोर्भार्या शतरूपा यमस्तथा ।
चन्द्रसूर्यौ तु चत्वारश्चक्षुरिन्द्रियमानिनः ॥ १९ ॥
चन्द्रः श्रोत्राभिमानीति तथा ज्ञेयः खगेश्वर ।
जिह्वेन्द्रियात्मा वरुणः सूर्यस्यानन्तरोऽभवत् ॥ २० ॥
वागिन्द्रियात्मा वरुणः सूर्यस्यानन्तरोऽभवत् ।
वागिन्द्रियाभिमानिन्यो ह्यभवन्वरुणादनु ॥ २१ ॥

त्रय एते महात्मानो वागिन्द्रियनियामकाः ।
ये ऋष्यादयश्चोक्तास्ते न तत्वनियामकाः ॥ २२ ॥

साम्यत्वाच्च तथैवोक्तिर्न तु तत्वाभिमानिनः ।
उपस्थमानिनो वीन्द्र बभूवुस्तदनन्तरम् ॥ २३ ॥

विश्वामित्रो वशिष्ठोत्रिर्मरीचिः पुलहः क्रतुः ।
पुलस्त्योऽंगिरसश्चैव तथा वैवस्वतो मनुः ॥ २४ ॥

मन्वादयोऽनन्तसंख्या उपस्थात्मान ईरिताः ।
पायोश्च मानिनो वीन्द्र जज्ञिरे तदनन्तरम् ॥ २५ ॥

सूर्येषु द्वादशेष्वेको मित्रस्तारा गुरोः प्रिया ।
कोणाधिपो निर्ऋतिश्च प्रावही प्रवहप्रिया ॥ २६ ॥

चत्वार एते पक्षीन्द्र पायुतत्वाभिमानिनः ।
घ्राणाभिमानिनः सर्वे जज्ञिरे द्विजसत्तम ॥ २७ ॥

विष्वक्सेनो वायुपुत्रो ह्यश्विनौ गणपस्तथा ।
वित्तपः सप्तवसवः उक्तो ह्यग्निस्तथाष्टमः ॥ २८ ॥

सप्तानां श्रुणु नामानि द्रोणः प्राणो ध्रुवस्तथा ।
अर्को दोषस्तथा वस्कः (स्तुः) सप्तमस्तु विभावसुः ॥ २९ ॥

दश रुद्रास्तथा ज्ञेया मूलरुद्रो भवः स्मृतः ।
दश रुद्रस्य नामानि श्रुणुष्व द्विजसत्तम ॥ ३० ॥

रैवतोऽजो भवो भीमो वामदेवो वृषाकपिः ।
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ ३१ ॥

दश रुद्रा इति प्रोक्ता षडादित्यान् श्रुणु द्विज ।
उरुक्रमस्तथा शक्रो विवस्वान्वरुणस्तथा ॥ ३२ ॥

पर्जन्योऽतिबाहुरेत उक्ताः पूर्वं द्विजोत्तम ।
पर्जन्यव्यतिरिक्तास्तु पंचैवोक्ता न संशयः ॥ ३३ ॥
गंगासमस्तु पर्जन्य इति प्रोक्तः खगेश्वर ।
सविता ह्यर्यमा धाता पूषा त्वष्टा तथा भगः ॥ ३४ ॥
चत्वारिंशत्तथा सप्त मरुतः परिकीर्तिताः ।
द्वावुक्ताविति विज्ञेयौ प्रवहोऽतिवहस्तथा ॥ ३५ ॥
तथा दशविधा ज्ञेया विश्वेदेवाः प्रकीर्तिताः ।
श्रुणु नामानि तेषां तु पुरूरवार्द्रवसंज्ञकौ ॥ ३६ ॥
धूरिलोचनसंज्ञौ द्वौ क्रतुदक्षेतिसंज्ञकौ ।
द्वौ सत्यवसुसंज्ञौ च कामकालकसंज्ञकौ ॥ ३७ ॥
एवं दशविधा ज्ञेया विश्वेदेवाः प्रकीर्तिताः ।
तथा ऋभुगणाश्चोक्तास्तथा च पितरस्त्रयः ॥ ३८ ॥
द्यावापृथिव्यौ विज्ञेयौ एते च षडशीतयः ।
देवाः प्रजज्ञिरे सर्वे नासिकेन्द्रियमानिनः ॥ ३९ ॥
आकाशस्याभिमानी तु गणपः समुदाहृतः ।
उभयत्राभिमानीति ज्ञेयं तत्वार्थवेदिभिः ॥ ४० ॥
विष्वक्सेनं विना सर्वे जयाद्या विष्णुपार्षदाः ।
अभवन्समहीनाश्च विष्वक्सेनादनन्तरम् ॥ ४१ ॥
एतेऽपि नासिकायाश्च अवान्तरनियामकाः ।
अतस्ते तत्वमानिभ्यो ह्यवरास्ते प्रकीर्तिताः ॥ ४२ ॥
स्पर्शतत्वाभिमानी तु अपानश्चेत्युदाहृतः ।
रूपाभिमानी संजज्ञे व्यानो नाम महाप्रभो ॥ ४३ ॥

रसात्मक उदानश्च समानो गन्धनामकः ।
अपां नाथाश्च चत्वारो मरुतः परिकीर्तिताः ॥ ४४ ॥

जयाद्यनन्तरान्वक्ष्ये समुत्पन्नान् खगेश्वर ।
प्रधानाग्नेः प्रथमजः पावकः समुदाहृतः ॥ ४५ ॥

भृगोर्महर्षेः पुत्रश्च च्यवनः समुदाहृतः ।
बृहस्पतेश्च पुत्रस्तु ह्युतथ्यः परिकीर्तितः ॥ ४६ ॥

रैवतश्चाक्षुषश्चैव तथा स्वारोचिषः स्मृतः ।
उत्तमो ब्रह्मसावर्णिर्धर्मसावर्णिरेव च ॥ ४७ ॥

देवसावर्णिसावर्णिरिन्द्रसावर्णिरेव च ।
तथैव दक्षसावर्णिर्धर्मसावर्णिरेव च ॥ ४८ ॥

एकादशविधा ह्येवं मनवः परिकीर्तिताः ।
पितृणां सप्तकं चैवेत्याद्याः संजज्ञिरे खग ॥ ४९ ॥

तदनन्तरमुत्पन्नास्तेभ्यो नीचाः श्रुणु द्विज ।
वरुणस्य पत्नी गंगा तु पर्जन्याख्यो विभावसुः ॥ ५० ॥

यमभार्या श्यामला तु ह्यनिरुद्धप्रिया विराट् ।
ब्रह्माण्डमानिनी सैव ह्युषानाम्नी सुशब्दिता ॥ ५१ ॥

रोहिणी चन्द्रभार्योक्ता सूर्यभार्या तु संज्ञका ।
एता गंगादिषट्संख्या जज्ञिरे विनतासुत ॥ ५२ ॥

गंगाद्यनन्तरं जज्ञे स्वाहा वै मन्त्रदेवता ।
स्वाहानामाग्निभार्योक्ता गंगादिभ्योऽधमा श्रुता ॥ ५३ ॥

स्वाहानन्तरजो ज्ञेयो ज्ञानात्मा बुधनामकः ।
बुधस्तु चन्द्रपुत्रो यः स्वाहाया अधमः स्मृतः ॥ ५४ ॥

उषा नाम तथा जज्ञे बुधस्यानन्तरं खग ।
उषा नामाभिमानी तु ह्यश्विभार्या प्रकीर्तिता ॥ ५५ ॥

बुधाधमा सा विज्ञेया नात्र कार्या विचारणा ।
ततः शनैश्चरो जज्ञे पृथिव्यात्मेति विश्रुतः ॥ ५६ ॥

उषाधमस्तु विज्ञेयस्ततो जज्ञेऽथ पुष्करः ।
कर्माभिमानी विज्ञेयः शनैश्चर इतीरितः ॥ ५७ ॥

तत्वाभिमानिनो देवानेवं सृष्ट्वा हरिः स्वयम् ।
प्रविवेश स देवेशस्तत्त्वेषु रमया सह ॥ ५८ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**
**तत्वाभिमानिदेवतोत्पत्तितारतम्यनिरूपणं**
**नाम पंचमोऽध्यायः ॥ ५ ॥**

## ॥ षष्ठोऽध्यायः ॥

### कृष्ण उवाच

तत्र तत्र स्थितास्तत्त्वे[१] तत्तत्तत्वाभिमानिनः ।
स्वे स्वे ह्यायतने स्वांगे तदर्थं च खगेश्वर ॥ १ ॥

हरिं नारायणं सम्यक् स्तोतुं समुपचक्रिरे ।
चित्याचित्यगुमे विष्णौ विरुद्धाः सन्ति सद्गुणाः ॥ २ ॥

एकदेशेप्यनन्तास्तान् गुणान् संस्तवनेच्छया ।
तारतम्यानुसारेण प्रत्येकमीडिरे हरिम् ॥

तत्राप्यादौ हरिं लक्ष्मीं स्तोतुं समुपचक्रमे ।
एकैकशो ह्यनन्तास्ते तद्गुणानां स्तुतौ मम ।
क शक्तिरिति बुध्या सा व्रीडयावनताब्रवीत् ॥ ३ ॥

### श्रीरुवाच

नतास्मि ते नाथ पदारविन्दं न वेद चान्यच्चरणादृते तव ।
त्वयीश्वरे सन्ति गुणाः श्रुतास्तु तथाश्रुताः सन्ति च देवदेव ॥ ४ ॥

सम्यक् सृष्ट्वा स्वायतनं च दत्वा गोविन्द दामोदर मां च पाहि ।
स्तुत्या मदीयेन सुखैकपूर्ण प्रयोजनं नास्ति तथापि देव ॥ ५ ॥
शुश्रूषणं मदुचितं स्तवनं रमेश प्रीत्यर्थमेव च हरे न किंचिदस्ति ।

### ब्रह्मोवाच

लक्ष्मीपते सर्वजगन्निवास त्वं ज्ञानसिन्धुः क च विश्वमूर्ते ।
अहं क चाज्ञस्तवने शक्तिरस्ति ह्यज्ञोऽहं वै ह्यल्पशक्तिर्ममास्ति ॥ ६ ॥

लक्ष्म्याश्चैव ज्ञानवैराग्यभक्ति ह्यत्यल्पमद्धा मयि सर्वदैव ।
तव प्रसादादस्ति जगन्निवास तत्र स्वामित्वं नास्ति विष्णो सदैव ॥ ७ ॥

---

१. सर्वे देवाः ।

न देहि त्वं सर्वदा मे मुरारे अहं ममत्वं प्रार्थ्यमेतावदेव ।
ममाज्ञानं योग्यगुणे रमेश प्रमादो वा नास्ति नास्त्यद्य नित्य[1] ॥ ८ ॥
न मे हृषीकाणि पतन्त्यसत्पथे पदारविन्दे तु पतन्तु सर्वदा ।
लक्ष्म्या ह्यहं कोटिगुणेन हीनः स्तोतुं सामर्थ्यं नास्ति मे सुप्रसीद ॥ ९ ॥
इति स्तवं विष्णुगुणान् विधाता तार्क्ष्ये स्थितः प्रांजलिस्तस्य चाग्रे ।
तदा वायुर्देवदेवो महात्मा दृष्ट्वा विष्णुं भक्तिसंवर्धितात्मा ॥ १० ॥
स्नेहोत्थ[2]रावोस्खलिताक्षरस्तं मुञ्चन् कणान् प्रांजलिराबभाषे ।

**वायुरुवाच**

एते हि देवास्तव भृत्यभूताः पादारविन्दं परमं सुदुर्लभम् ॥ ११ ॥
चतुर्विधान्पुरुषार्थान्रमेश संप्रार्थयन्त्येव सदापि देवो दृष्ट्वा ।
दृष्ट्वा हरेः सैव मायैव तावत्सुकारणं किंचिदन्यन्न चास्ति ॥ १२ ॥
अतो न चाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ।
जनस्य कृष्णाद्विमुखस्य कर्मणा ह्यपुण्यशीलस्य सुदुःखितस्य ॥ १३ ॥
अनुग्रहार्थं च तवावतारो नान्यच्च किंचित्पुरुषस्तवेश ।
गोभूसुराणां च महीरुहाणां तथा सुराणां प्रवरावतारैः ॥ १४ ॥
क्षेमोपकाराणि च वासुदेव क्रीडन्विधत्ते न च किञ्चिदन्यत् ।
मनो न तृप्यत्यपि शंसतां नः सुकर्म मौलेश्चरितामृतानि ॥ १५ ॥
अच्छिन्नभक्तस्य हि मे मुकुन्द सदा भक्तिं देहि पदारविन्दे ।
सदा तदेवास्तु न किंचिदन्यद्यत्र त्वमासीः पुरुषे देवदेव ॥ १६ ॥
अहं च तत्रास्मि तव प्रसादाद्यत्रास्म्यहं तत्र भवान्महाप्रभो ।
व्याप्तिर्ममेयं च शरीरमध्ये चतुर्मुखस्यापि न चैतदन्यैः ॥ १७ ॥
मदीयनिद्रा तव वन्दनं प्रभो मदीययात्राचरणं प्रदक्षिणम् ।
मदीयवाख्याहरणस्तुतिस्तवेत्येवं विदित्वा च समर्पयामि ॥ १८ ॥

---

१. नास्त्येव नित्यं । २. स्नेहोत्थारोमा

मद्दृष्टियोग्यं च पदार्थजातं दृष्ट्वा हरेः प्रतिमा एव तच्च ।
इत्थं मत्वाहं सर्वदा देवदेव तत्र स्थितान्हरिरूपान्भजिष्ये ॥ १९ ॥

यच्चन्दनं यच्च पुष्पं च धूपं वस्त्रं च यद्भक्ष्यभोज्यादिकं च ।
एतत्सर्वं विष्णुप्रीत्यर्थमेव ह्येतद्व्रतं सर्वदा वै करिष्ये ॥ २० ॥

अवैष्णवान्दूषयिष्ये सदाहं सद्वैष्णवान्पालयिष्ये मुरारे ।
विष्णुद्रुहां छेदयिष्ये च जिह्वां तच्छ्रुण्वतां पूरयिष्ये त्रपूल्काः ॥ २१ ॥

एतादृशी शक्तिरस्तीह देव तव प्रसादाद् बलिनोऽपि विष्णो ।
अथापि नाहं स्तवने समर्थः लक्ष्म्या ह्यहं कोटिगुणेन हीनः ॥ २२ ॥

एतत्स्तोत्रं ह्यर्पयिष्ये तवैव यतः प्रीतिर्ह्यक्षया मे सदा स्यात् ।
स्तोत्रं ह्येतत्पाठयन्तीह लोके ते वैष्णवास्ते च हरिप्रियाश्च ॥ २३ ॥

कुर्वन्ति ये पठनं नित्यमेव समर्पयिष्यन्ति सदा हरौ च ।
तेषां हरिः प्रीयते केशवोऽलं हरौ प्रसन्ने किमलभ्यमस्ति ॥ २४ ॥

एवं स्तुत्वा बलदेवो महात्मा तूर्ष्णीं स्थितः प्रांजलिरग्रतो हरेः ।

## सरस्वत्युवाच

को वा रसज्ञो भगवन्मुरारे हरे गुणस्तवनात्कीर्तनाद्वा ॥ २५ ॥

अलंबुद्धिं प्राप्नुयाद्देवदेव ब्रह्मादिभिः सर्वदा स्तूयमान ।
यः कर्णनाडीं पुरुषस्य यातो भवप्रदां देहरतिं छिनत्ति ॥ २६ ॥

न केवलं देहरतिं छिनत्ति असद्गृहक्षेत्रसुतेषु नित्यम् ।
पश्वादिरूपेषु धनादिकेषु ह्यनर्घ्यरत्नेषु प्रियं छिनत्ति ॥ २७ ॥

अनन्तवेदप्रतिपादितापि लक्ष्मीर्न वै वेद तव स्वरूपम् ।
चतुर्मुखो नैव न वेद वायुरसौ न वेत्तीति किमत्र चित्रम् ॥ २८ ॥

एतादृशस्य स्तवने क्वास्ति शक्तिर्मम प्रभो ब्रह्मवाय्वोः सकाशात् ।
शतैर्गुणैः सर्वदा न्यूनतास्ति ह्यतो हरे दयया मां च पाहि ॥ २९ ॥

एवं स्तुत्वा हरिं सा तु तूष्णीमास खगेश्वर ।
भारती तु तदा स्तोतुं हरिं समुपचक्रमे ॥ ३० ॥

### भारत्युवाच

ब्रह्मेश लक्ष्मीश हरे मुरारे गुणांस्तव श्रद्दधानस्य नित्यम् ।
तथा स्तुवन्तोऽस्य विवर्धमानां मतिं च नित्यं विषयेष्वसत्सु ॥ ३१ ॥
कुर्वन्ति वैराग्यममुत्र लोके ततः परं दृढभक्तिं तथैव ।
ततः परं चैव हरेः प्रसन्नतां कुर्वन्ति नित्यं तव देव देव ॥ ३२ ॥
तेनापरोक्षं च भवेच्च तेषां ह्यतो गुणानां स्तवने च मे रतिः ।
ज्ञाने प्रजाते पुरुषस्य नित्यं संसारदुःखं तु तदा छिनत्ति ॥ ३३ ॥
विच्छिन्नदुःखस्य तदाधिकारिणो आनन्दरूपाख्यफलं ददाति ।
हरेर्गुणानस्तुवतां च पापं तेषां हि पुण्यं च तया क्षिणोति ॥ ३४ ॥
एवं विदित्वा परमो गुरुर्मम वायुर्दयालुर्मम वल्लभश्च ।
हरेर्गुणान्सर्वगुणेषु सारान् ममैव योग्यान्सुखमुख्यभूतान् ॥ ३५ ॥
उद्धृत्य पुष्पेभ्य इवार्तबन्धुः शिवाय नो ह्यवदत्पुण्यकीर्तिः ।
तव प्रसादाच्च श्रियः प्रसादाद्वायोः प्रसादाच्च ममास्ति नित्यम् ॥ ३६ ॥
यद्यत्करोत्येव सदैव वायुस्तत्तत्करोत्येव सदैव नित्यम् ।
वायोर्विरोधं न करोति देवः स तद्विरोधं न करोति नित्यम् ॥ ३७ ॥
हरेर्विरुद्धं न करोति वायुः वायोर्विरुद्धं न करोति विष्णुः ।
वायोः प्रसादान्मम नास्ति किंचिदज्ञानभावश्च तव प्रसादात् ॥ ३८ ॥
यथैव मूले च तथावतारे दुःखादिकं नास्ति समीरणस्य ।
वायुस्तथाहं च उभौ मुकुन्द तथावतारेषु न दुःखरूपौ ॥ ३९ ॥
अशक्तवद् दृश्यते वायुदेवः युगानुसाराल्लोकधर्मांस्तु रक्षन् ।
न तावता तत्र देवे मुरारे ह्यशक्तता तत्र संचिन्तनीया ॥ ४० ॥

अवताररूपे मयि दुःखादिकं च न चिन्तनीयं ज्ञानिभिर्देवदेव ।
अहं कदाचिद्दुःखवतीव दृश्ये दैत्यांस्तथा पातयितुं तमोऽन्धे ॥ ४१ ॥

नैतावता मम वायोश्च नित्यं दुःखादिकं नैव संचिन्तनीयम् ।
एतादृशाहं स्तवने तु नास्ति शक्तिर्गुणानां मधुसूदन प्रभो ॥ ४२ ॥

वायोः सकाशाच्च गुणेन हीना संसाररूपे मुक्तिरूपे च देव ।
एवं स्तुत्वा भारती तु तूष्णीमास खगेश्वर ॥
तदनन्तरजः शेषः प्रांजलिः प्राह केशवम् ॥ ४३ ॥

**शेष उवाच**

नाहं न जाने तव पादमूलं रुद्रो न वेत्ति गरुडो नैव वेद ।
अहं वाण्याः शतगुणांशहीनो दत्वा ह्यायतनं पाहि मां वासुदेव ॥ ४४ ॥

एवं स्तुत्वा स शेषस्तु तूष्णीमास खगेश्वर ।
तदनन्तरजो वीशः स्तोतुं समुपचक्रमे ॥ ४५ ॥

तव पदोः स्तुतिं किं करोम्यहं तव पदाम्बुजे ह्यर्पितं मनः ।
कथमहं सखे पक्षियोनिजः कथमहं चगुणानीडितुं क्षमः ॥ ४६ ॥

एवं स्तुत्वा स गरुडस्तूष्णीमास नयान्वितः ।
तदनन्तरजो रुद्रः स्तोतुं समुपचक्रमे ॥ ४७ ॥

**रुद्र उवाच**

मायां तवेश भगवन्नविदाम भूमन् भक्तिर्ममास्तु तव पादसरोजमूले ।
छिन्नापि सा नतु सदातनमस्ति देव तेन ह्यहं तव विरुद्धमजं करोमि ॥ ४८ ॥

संछिन्नबुद्धिसहितस्य च ते मुरारे का शक्तिरस्ति स्तवने मम मूढबुद्धेः ।
वाण्या सदा शतगुणेन विहीनमेनं मां पाहि चेश मम चायतनं च दत्वा ॥ ४९ ॥

एवं स्तुत्वा स रुद्रस्तु तूष्णीमास द्विजोत्तम ।
शेषानन्तरजा देवी वारुणी वाक्यमब्रवीत् ॥ ५० ॥

**वारुण्युवाच**

लक्ष्मीपते ब्रह्मपते मनःपते गिरःपते रुद्रपते नृणां पते ।
गुणांस्तव स्तोतुमहं समर्था न पार्वती नापि सुपर्णपत्नी ॥ ५१ ॥
शेषादहं दशगुणैर्विहीना मां पाहि नित्य जगतामधीश ।
एवं स्तुत्वा वारुणी तु तूष्णीमास खगेश्वर ॥ ५२ ॥

**सौपर्ण्युवाच**

स्तोतुं गुणांस्तव हरे जगदीश वाचा श्रोतुं हरे तव कथां श्रवणे न शक्तिः ।
चेतश्च न स्मरति देव तव स्वरूपं को नाम लोके भगवत्पदार्थः ॥ ५३ ॥
अतो गुणस्तवने नास्ति शक्तिः वीन्द्रादहं दशगुणैरवरा च नित्यम् ।
एवं स्तुत्वा तु सौपर्णी तूष्णीमास खगेश्वर ।
रुद्रानन्तरजा स्तोतुं गिरिजा तूपचक्रमे ॥ ५४ ॥

**पार्वत्युवाच**

गोविन्द नारायण वासुदेव त्वया हि मे किंचिदपि प्रयोजनम् ।
नास्त्येव स्वामिन्न च नाम वाचा सौभाग्यरूपः सर्वदा ह्येक एव ॥ ५५ ॥
नारायणेति तव नाम च एकमेव वैराग्यभक्तिविभवे परमं समर्थम् ।
असंख्यब्रह्मादिकहत्यनाशने गुर्वगनाकोटिविनाशने च ॥ ५६ ॥
नामाधिकारिणी चाहं गुणानां च महाप्रभो ।
स्तवने नास्ति मे शक्ती रुद्राद्दशगुणैरहम् ॥ ५७ ॥
अवरा च सदास्म्येव नात्र कार्या विचारणा ॥
एवं स्तुत्वा सा गिरिजा तूष्णीमास खगेश्वर ॥ ५८ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**
**तत्वाभिमानितत्तद्देवताकृतविष्णुस्तुतिनिरूपणं**
**नाम षष्ठोऽध्यायः ॥ ६ ॥**

---

गुणांस्तव महाप्रभो

## ॥ सप्तमोऽध्यायः ॥

### कृष्ण उवाच

पार्वत्यनन्तरोत्पन्न इन्द्रो वचनमब्रवीत् ।

### इन्द्र उवाच

तव स्वरूपं ह्यविजानन् हि देव समुत्सुकः स्तवने यस्तु मूढः ।
अजानतः स्तवनं देवदेव तदेवाहुर्हेलनं चक्रपाणे ॥ १ ॥
तथापि तद्वै तव नाम पूर्वं भवेत्तदा पुम्यकरं भवेदिति ।
रुद्रादिकानां स्तवने नास्ति शक्तिस्तदा वक्तव्यं मम नास्तीति किं वा ॥ २॥
गुणांशतो दशभी रुद्रतो वै सदा न्यूनो मत्समः कामदेवः ।
ज्ञाने बले समता सर्वदास्ति तथाऽपि कामः किंचिदूनः सदैव ॥ ३ ॥
एवं स्तुत्वा देवदेवो हरिं च तूर्ष्णीं स्थितः प्रांजलिर्नम्रमूर्धा ।
तदनन्तरजो ब्रह्मा ह्याहंकारिक ऊचिवान् ॥ ४ ॥

### आहंकारिक उवाच

नमस्ते गुणपूर्णाय नमस्ते ज्ञानमूर्तये ।
नमोऽज्ञानविदूराय ब्रह्मणोऽनन्तमूर्तये ॥ ५ ॥
इन्द्रादहं दशगुणैः सर्वदा न्यून उक्तो न जाने त्वां सर्वदा ह्यप्रमेय ।
तथापि मां पाहि जगद्गुरो त्वं दत्वा दिव्यं ह्यायतनं च विष्णो ॥ ६ ॥
आहंकारिक एवं तु स्तुत्वा तूर्ष्णीं बभूव ह ।
तदनन्तरजा स्तोतुं शची समुपचक्रमे ॥ ७ ॥

### शच्युवाच

संचिन्तयामि ह्यनिशं तव पादपद्मं वज्रांकुशध्वजसरोरुहलांछनाढ्यम् ।
योगीश्वरैरपि सदा मनसापि धर्तुं नो शक्यमीश तव पादरजः स्मरामि ॥ ८ ॥
आहंकारिकप्राणाच्च गुणैश्च दशभिः सदा ।
न्यूनभूतां च मां पाहि कृपालो भक्तवत्सल ॥ ९ ॥

एवं स्तुत्वा शची देवी तूर्ष्णीं स्थितवती ह्यभूत् ।
तदनन्तरजा स्तोतुं रतिः समुपचक्रमे ॥ १० ॥

## रतिरुवाच

संचिन्तयामि नृहरेर्वदनारविन्दं भृत्यानुकम्पितधिया हि गृहीतमूर्तिम् ।
यच्छ्रीनिकेतनमजरुद्रविपादिकैश्च संलालितं कुटिलकुन्तलवृन्दजुष्टम् ॥ ११ ॥
एतादृशं तव मुखं नुवितुं नशक्तिः शच्या समापि भगवन् परिपाहि नित्यम् ।
कृत्वा स्तुतिं रतिरिमां परमादरेण तूर्ष्णीं स्थिता भगवतश्च समीप एव ॥ १२ ॥
रत्यनन्तरजो दक्षः स्तोतुं समुपचक्रमे ॥

## दक्ष उवाच

संचिन्तये भगवतश्चरणोदतीर्थं भक्त्या ह्यजेन परिषिक्तमजादिवन्द्यम् ।
यच्छ्रौचनिःसृतमजप्रवरावतारं गंगाख्यतीर्थमभवत्सरितां वरिष्ठं ॥ १३ ॥
रुद्रोऽपि तेन विधृतेन जटाकलापपूतेन पादरजसा ह्यशिवः शिवोऽभूत् ।
एतादृशं हि चरणं करुणेश विष्णो स्तोतुं हि शक्तिरपि नास्ति कृतावतार ॥
रत्या समः सृतिगतो न गतोऽस्मि मोक्षमेतादृशं च परिपाहि निदानमूर्ते ॥ १४ ॥
एवं स्तुत्वा स दक्षस्तु तूष्णीमेव बभूव ह ।
तदनन्तरजः स्तोतुं बृहस्पतिरुपाक्रमत् ॥ १५ ॥

## बृहस्पतिरुवाच

संचिन्तयामि सततं तव चाननाब्जं त्वं देहि दुष्टविषयेषु विरक्तिमीश ॥ १६ ॥
एतेषु सक्तिर्यदि वै स जीवो कर्ता च भोक्ता च सदा च दाता ।
पोष्टा च पुत्रसुहृदा च पशूंश्च सर्वमेवं विनश्यति यतो हि तदाशु छिन्दि ॥ १७ ॥

## अनिरुद्ध उवाच

योऽहं हरे तव कथां रसिकां विहाय स्त्रीणां भगे च वदने परिमुह्य नित्यम्।
विष्ठांत्रपूरितबिले रसिको हि नित्यं स्थायी च सूकरवदेव विमूढबुद्धिः ॥ २० ॥

मज्जास्थिपित्तकफरक्तमलादिपूर्णे चर्मान्त्रवेष्टितमुखे पतितं हि भीतम् ।
आस्वादने मम च पापगतेर्मुरारे मायाबलं तव विभो परमं निमित्तम् ॥ २१ ॥
संसारचक्रे भ्रमतश्च नित्यं सुदुःखरूपे सुखलेशवर्जिते ।
मलं वमन्तं नवभिश्च द्वारैः शरीरमारुह्य सुमूढबुद्धिः ॥ २२ ॥
नमामि नित्यं तव सत्कथामृतं विहाय देव सृतिमूलनाशनम् ।
कुटुम्बपोषं च सदा च कुर्वन् दानाद्यकुर्वन्निवसन् गृहे च ॥ २३ ॥
दूरे च संसारमलं त्विदं कुरु देहि ह्यदो दिव्यकथामृतं सदा ।
एतादृशोऽहं तव सद्गुणौघं स्तोतुं समर्थो नास्मि शचीसमश्च ॥ २४ ॥
एवं स्तुत्वानिरुद्धस्तु तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोतुं मनुः स्वायम्भुवोऽब्रवीत् ॥ २५ ॥

**स्वायम्भुव उवाच**

सोऽहं विभो ह्यनुभवन्नपि गर्भदुःखं तस्माद्बहिर्गतवतोऽपि गृहान्धकूपे ।
(तत्र स्थितश्च बहुदुःखभुजेऽपि नित्यं तान् त्यक्षितुं न भवति मम सुष्ठुबुद्धिः ॥
एतादृशांश्च मम दोषगणानगण्यान्देवोत्तम त्वमगणय्य नु मां तु पाहि ।
एतादृशश्च स्तवने क्व च शक्तिरस्ति शच्या समं च परिपाहि त्वमेव नित्यम् ॥
एवं स्तुत्वा मनुर्विप्र तूष्णीमेव ह्यवस्थितः ।
शच्याद्याश्च षडाह्येते समा एव न संशयः ॥
मनोरनन्तरजो प्रवहो वायुसत्तमः ।
विनयावनतो भूत्वा स्तोतुं समुपचक्रमे ॥

**प्रवह उवाच**

त्वमेव भगवन् विष्णो देवदेव जगत्पते ।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥
पाहि मां दयया विष्णो गुरोर्दक्षादिकस्य च ।

---

(.......) विद्यमानाः श्लोकाः रामतत्त्वप्रकाशनपुस्तके अधिकतया पठिताः ।

सदा पंचगुणैर्हीन अतिवाहकसंज्ञकः ॥
नासिक्यापरनामाहं तथा भौतिकनामकः ।
एवं स्तुत्वा तु प्रवहस्तूष्णीमास खगोत्तम ॥
प्रवहस्यानन्तरजो यमः स्तोतुं प्रचक्रमे ।

**यम उवाच**

नमस्तेऽमिततत्त्वाय ब्रह्मादीनां च हेतवे ।
निर्गुणस्य तवोत्कृष्टं नाहं वेद परोऽपि वा ॥
अहं तु प्रवहाच्चैव द्विगुणादधमः स्मृतः ।
स्तवने देवदेवेश क्व च शक्तिर्ममेश्वर ॥
तथाप्यायतनं दत्वा त्राहि मां करुणाकर ॥
शतरूपा मनोर्भार्यायमानन्तरजा स्मृता ।
स्वायंभुवप्रिया देवं स्तोतुं समुपचक्रमे ॥

**शतरूपोवाच**

नेह पत्युर्नधर्माय नविरागाय कल्पते ।
न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥
साहं भगवतो नूनं वंचिता मायया दृढम् ।
यत्त्वां विरक्तिदं प्राप्य स्तोतुं शक्तिर्न चास्ति मे ॥
एवं तु शतरूपा सा तूर्ष्णीं स्थित्वा बभूव ह ।
शतरूपानन्तरजश्चन्द्रो वचनमब्रवीत् ॥

**चन्द्र उवाच**

तावद्भयं मम विभो द्रविणाच्च देहाच्छोकस्पृहापरिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्नतेऽङ्घ्रिमभयं प्रवृणोमि सोऽहम् ॥

**सूर्य उवाच**

ब्रह्मा भवेन्द्रौ मुनयश्च सर्वे ये देहभाजश्च तव स्वरूपम् ।
विदुः प्रमाणं बलवीर्ययोर्वा नैवात्मतन्त्रस्य समीरितुं वा ॥

एतादृशं मां करुणार्द्रदृष्ट्या पाहीश मे ह्यायतनं च दत्वा ।
सदाप्यहं चन्द्रसमान एवेत्येवं हि स्तुत्वा स बभूव तूष्णीम् ॥

यमस्तु पापिनां शास्ता मनुभार्या च मानवी ।
दिशोऽभिमानी चन्द्रस्तु सूर्यश्चक्षुर्नियामकः ॥)

मनोर्भार्या मानवी च यमः संयमिनीपतिः ।
दिशोऽभिमानी चन्द्रस्तु सूर्यश्चक्षुर्नियामकः ॥
परस्परसमा ह्येते मुक्तौ संसार एव च ॥ २७ ॥

प्रवहाद्धिगुणोनाश्चेत्येवं जानीहि चाण्डज ।
सूर्यानन्तरजः स्तोतुं वरुणः संप्रचक्रमे ॥ २८ ॥

**वरुण उवाच**

त्वदिच्छया रचिते देहगेहे पुत्रे कलत्रेऽपि धने द्रव्यजातौ ।
ममाहमित्यल्पधिया च मूढा संसारदुःखे विनिमज्जन्ति सर्वे ॥ २९ ॥

अतो हरे तादृशीं मे कुबुद्धिं विनाश्य मे देहि सदैव दास्यम् ।
अहं मनोः पादपादार्धभूतगुणेन हीनः सर्वदा वै मुरारे ॥ ३० ॥

एवं स्तुत्वा तु वरुणः प्रांजलिः समुपस्थितः ।
वरुणानन्तरोत्पन्नो नारदो ह्यस्तुवद्धरिम् ॥ ३१ ॥

**नारद उवाच**

यन्नामधेयश्रवणानुकीर्तनात्स्वाद्धन्यतत्त्वं मम नास्ति विष्णो ।
पुनीह्यतश्चैव परोवरीयान् यज्जिह्वाग्रे वर्तते नाम तस्य ॥ ३२ ॥

यज्जिह्वाग्रे हरिनामैव नास्ति स ब्राह्मणो नैव स एव गोखरः ।
अहं न जाने च तव स्वरूपं न्यूनो ह्यहं वरुणात्सर्वदैव ॥ ३३ ॥

एवं स्तुत्वा नारदो वै खगेन्द्र तूष्णीमभूद्देवदेवस्य चाग्रे ।
यो नारदानन्तरं संबभूव भृगुर्महात्मा स्तोतुमुपप्रचक्रमे ॥ ३४ ॥

### भृगुरुवाच

किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ।
लक्ष्मीकलत्राय किमस्ति देयं वागीशं किन्ते वचनीयमस्ति ॥ ३५ ॥
अतो न जाने तव सद्गुणांश्च ह्यहं सदा वरुणात्पादहीनः ।
एवं स्तुत्वा हरिं देवं भृगुस्तूर्ष्णीं बभूव ह ।
तदनन्तरजो ह्यग्निरस्तावीत्पुरुषोत्तमम् ॥ ३६ ॥

### अग्निरुवाच

यत्तेजसाहं सुसमद्धितेजा हव्यं वहाम्यध्वरं आज्यसिक्तम् ।
यत्तेजसाहं जठरे संप्रविश्य पचन्नन्नं सर्वदा पूर्णशक्तिः ।
अतो न जाने तव सद्गुणांश्च भृगोरहं सर्वदा वै समोऽस्मि ॥ ३७ ॥
तदनन्तरजा स्तोतुं प्रसूतिरुपचक्रमे ।

### प्रसूतिरुवाच

यन्नामार्थविचारणेऽपि मुनयो मुह्यन्ति वै सर्वदा
त्वद्भीता अपि देवता ह्यविरतं स्त्रीभिः सहैव स्थिताः ।
मान्धातृध्रुवनारदाश्च भृगवो वैवस्वताद्याखिलाः
प्रेम्णा वे प्रणमाम्यहं हितकृते तस्मै नमो विष्णवे ॥ ३८ ॥
अतो न जाने तव सद्गुणान्सदा चैवंविधा  का मम शक्तिरस्ति ।
स्तुत्वा ह्येवं प्रसूतिस्तु तूष्णीमासीत्खगेश्वर ॥ ३९ ॥
अग्निर्वागात्मको ब्रह्मपुत्रो भृगुऋषिस्तथा ।
तद्भार्या वै प्रसूतिस्तु त्रय एते समा मताः ॥ ४० ॥
वरुणात्पादहीनाश्चप्रवहाद्द्विगुणाधमाः ।
दक्षाच्छतावरा ज्ञेया मित्रात्तु द्विगुणाधिकाः ॥ ४१ ॥
प्रसूत्यनन्तरं जातो वसिष्ठो ब्रह्मनन्दनः ।
विनयावनतो भूत्वा स्तोतुं समुपचक्रमे ॥ ४२ ॥

**वसिष्ठ उवाच**

नमोऽस्तु तस्मै पुरुषाय वेधसे नमो नमोऽसद्वृजिनच्छिदे नमः ।
नमो नमः स्वाङ्गभवाय नित्यं नतोऽस्मि हे नाथ तवांघ्रिपंकजम् ॥ ४३ ॥

**स्वरूपानुभवाय**

मां पाहि नित्यं भगवन्वासुदेव ह्यग्रेरहं सर्वदा न्यून एव ।
मित्रादहं सर्वदा किंचिदूनः स्तुत्वा देवं सोऽभवत्तत्र तूष्णीम् ॥ ४४ ॥
यो वसिष्ठानन्तरजो मरीचिर्ब्रह्मनन्दनः ।
हरिं तुष्टाव परया भक्त्या नारायणं गुरुम् ॥ ४५ ॥

**मरीचिरुवाच**

दैवेन चाहं हतधीर्भवतः प्रसंगात्सर्वाशुभोपगमनाद्विमुखेन्द्रियश्च ।
कुर्वे च नित्यं सुखलेशलवादिना त्वद्दूरं मनस्त्वशुभकर्म समाचरिष्ये ॥ ४६ ॥
एतादृशोऽहं भगवन्नतः सदा वसिष्ठविप्रस्य समान एव ।
एवं स्तुत्वा मरीचिस्तु तूष्णीमास तदा खग ।
तदनन्तरजो ह्यत्रिरस्तुवत् प्रांजलिर्हरिम् ॥ ४७ ॥

**अत्रिरुवाच**

पश्याम्यहं भगवतश्च तव स्वरूपं ह्यानन्द*...रभत एव विकारशून्यम् ।
त्रैगुण्यशून्यमखिलेषु च संविभक्तं तत्र प्रविश्य भगवन्न हि पश्यतीव ।
अतो मुरारेस्तव सद्गुणांश्च स्तोतुं न शक्नोमि मरीचितुल्यः ॥ ४९ ॥
एवं स्तुत्वा ह्यत्रिरपि तूष्णीमास तदा खग ।
तदनन्तरजः स्तोतुमंगिरा वाक्यमब्रवीत् ॥ ५० ॥

**अंगिरा उवाच**

द्रष्टुं न शक्नोमि तव स्वरूपं ह्यनन्तबाहूदरमस्तकं च ।
अनन्तसाहस्रकिरीटजुष्टं महार्हनानाभरणैश्च शोभितम् ॥ ५१ ॥

---

*.... अत्र मूलपुस्तके शब्दः अस्पष्टः ।

एतादृशं रूपमनन्तपारं स्तोतुं ह्यशक्तस्तु समोऽस्मि चात्रेः ।
एवं स्तुत्वा ह्यंगिराश्च तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोतुं पुलस्त्यो वाक्यमब्रवीत् ॥ ५२ ॥

## पुलस्त्य उवाच

यो वा हरिस्तु भगवान्स उपासकानां सन्दर्शयेद्भुवनमंगलमंगलश्च ॥ ५३ ॥
तस्मै नमो भगवते पुरुषाय तुभ्यं यो नार्चितो निरयभाग्भिरसत्प्रसंगैः ।
एतादृशं तव गुणान्नवितुं न शक्तं मां पाहि नित्यं सममङ्गिरस्य ॥ ५४ ॥
एवं स्तुत्वा पुलस्त्योऽपि तूष्णीमेव बभूव ह ।
तदनन्तरजः स्तोतुं पुलस्त्यो वाक्यमब्रवीत् ॥ ५५ ॥

## पुलह उवाच

निष्कामरूपरहितं न समर्पितं च स्नानाध्वरं व्रतसुदानजपादिकं च ।
आराधनं भगवतस्तव सत्क्रियाश्च व्यर्थं भवेदिति वदन्ति महानुभावाः ॥ ५६ ॥
तस्मै सदा भगवते प्रणमामि नित्यं निष्कामया तव समर्पणया च बुद्ध्या ।
वैकुण्ठनाथ भगवंस्तवने न शक्तिः सोऽहं पुलस्त्यसदृशोऽस्मि न संशयोऽत्र ॥ ५७ ॥
एवं स्तुत्वा तु पुलहस्तूष्णीमास तदा खग ।
तदनन्तरजः स्तोतुं क्रतुः समुपचक्रमे ॥ ५८ ॥

## क्रतुरुवाच

प्राणप्रयाणसमये भगवंस्तवैव नामानि संसृतिजदुःखविनाशकानि ।
येनैकजन्मशमलं सहसैव हित्वा संयाति मुक्तिममलां तमहं प्रपद्ये ॥ ५९ ॥
ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः ।
तेपि मुक्तिं प्रयान्त्याशु किमुत ध्यायिनः सदा ॥ ६० ॥
एवं स्तुत्वा क्रतुरपि तूष्णीमास खगेश्वर ।
तदनन्तरजः स्तोतुं मनुर्वैवस्वतोऽब्रवीत् ॥ ६१ ॥

**मनुरुवाच**

सोऽहं ह्यकर्मकरणे निरतः सदैव स्त्रीणां च भोगनिरतश्च गुदे प्रमत्तः ।
जिह्वेन्द्रिये च निरतस्तव दर्शने च सम्यग्विरागसहितः परमादरेण ॥ ६२ ॥
मज्ज्ञास्थिमांसरुधिरैः सहिते च देहे रक्तः सदैव तव भक्तजने विरक्तः ।
गुर्वग्निब्राह्मणगवादिषु सत्सु दुःखात्सम्यग्विरक्तिमुपयामि सहस्व नित्यम् ॥ ६३ ॥
लोकानुवादश्रवणे परमा च शक्तिर्नारायणस्य नमने न च मेऽस्ति शक्तिः ।
लोकानुयानकरणे परमा च शक्तिः क्षेत्रादिमार्गगमने परमा ह्यशक्तिः ॥ ६४ ॥
वैश्यादिकेषु धनिकेषु परा च शक्तिः सद्ब्राह्मणेष्वपि न शक्तिरहो मुरारे ॥ ६५ ॥
वैवस्वतमनुर्देवं स्तुत्वा तूष्णीं बभूव ह ।
तदनन्तरजः स्तोतुं विश्वामित्रोपचक्रमे ॥ ६६ ॥

**विश्वामित्र उवाच**

न ध्याते चरणाम्बुजे भगवतो सन्ध्यापि नानुष्ठिता
ज्ञानद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
अन्तर्व्याप्तमलाभिघातकरणे पद्वी श्रुता ते कथा
नो देव श्रवणेन पाहि भगवान् मामत्रिततुल्यं सदा ॥ ६७ ॥
विश्वामित्रऋषिस्त्वेवं स्तुत्वा तूष्णीं बभूव ह ।
भृगुनारददक्षांश्च विहाय ब्रह्मपुत्रकाः ॥ ६८ ॥
सप्तसंख्या वशिष्ठाद्या विश्वामित्रस्तथैव च ।
वैवस्वतमनुस्त्वेते परस्परसमाः स्मृताः ॥ ६९ ॥
वह्नेरप्यवरा नित्यं किंचिन्मात्रागुणाधिकाः ।
तदनन्तरजस्तोत्रं वक्ष्ये श्रुणु खगेश्वर ॥ ७० ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**
**देवादिस्तुतितत्तत्तारतम्यनिरूपणं**
**नाम सप्तमोऽध्यायः ॥ ७ ॥**

## ॥ अष्टमोऽध्यायः ॥

क्रतोरनन्तरं जातो मित्रो नाम खगेश्वर ।
नारायणं जगद्योनिं स्तोतुं समुपचक्रमे ॥ १ ॥

### मित्र उवाच

नतोऽस्म्यहं त्वच्चरणारविन्दं भवच्छिदं स्वस्त्ययनं भवच्छिदे ।
वेद स्वयं भगवान्वासुदेवो नाहं नाग्निर्नात्रिदेवा मुनीन्द्राः ॥ २ ॥

अथापरे भागवतप्रधाना यदा न जानीयुरथापरे कुतः ।
मां पाहि नित्यं परतोऽप्यधीश विश्वामित्रान्यून एवेति नित्यम् ॥ ३ ॥

अहं पर्जन्याद्विगुणाधमाश्च अतो मम स्तवने नास्ति शक्तिः ।
एवं स्तुत्वा हरिं मित्रस्तूष्णीमास तदा खग ।
तदनन्तरजा तारा स्तोतुं समुपचक्रमे ॥ ४ ॥

### तारोवाच

अनन्येन तु भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
त्वत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ ५ ॥

त्वदाश्रयां कथां श्रुत्वा श्रुण्वन्ति च रमन्ति च । (कथयन्ति च )
त एव साधवो विष्णो सर्वसंगविवर्जिताः ॥ ६ ॥

तन्मध्ये पतितां पाहि सदा मित्रसमां प्रभो ।
तारानन्तरजः प्राह निर्ऋतिश्च खगेश्वर[१] ॥ ७ ॥

### निर्ऋतिरुवाच

योगेन त्वर्य्यपितया च भक्त्या संयान्ति लोकाः परमां गतिं च ।
आसेवया सर्वगुणाधिकानां ज्ञानेन वैराग्ययुतेन देवे ॥ ८ ॥

---

१. निर्ऋती राक्षसेश्वरः ।

चित्तस्य निग्रहेणैव विष्णोर्यान्ति परं पदम् ।
अतो मां पाहि दयया सदा तारासमं प्रभो ॥ ९ ॥

तदनन्तरजा स्तोतुं प्रावही तं प्रचक्रमे ।

### प्रावह्युवाच

सतां प्रसंगेन भवन्ति वीर्यात्तव प्रसादात्परमाः संपदश्च[1] ।
या ह्युत्तमश्लोकरसायनाः कथास्तत्सेवनादाश्वपवर्गवर्त्मनि ॥ १० ॥

भक्तिर्भवेत्सर्वदा देवदेव सदाप्यहं निर्ऋतेः साम्यमेव ।
राहुयुग्भीष्मको मित्रः कृपी तारा प्रकीर्तिता ॥ ११ ॥

कोणाधिपो निर्ऋतिश्च प्रावही प्रवहप्रिया ।
चत्वार एते पर्जन्यात्त्रिगुणाः परिकीर्तिताः ॥ १२ ॥

तदनन्तरजान् वक्ष्ये ताञ्छृणु त्वं खगेश्वर ।
प्रवहभार्यानन्तरजो विष्वक्सेनोऽथ पार्षदः ॥ १३ ॥

वायुपुत्रो महाभागः हरिं स्तोतुं प्रचक्रमे ।

### विष्वक्सेन उवाच

भगवान्मोक्षदः कृष्णः पूर्णानन्दः सदा यदि ।
यदि स्यात्परमा भक्तिः ह्यपरोक्षत्वसाधना ॥ १४ ॥

तथा स्वगुरुमारभ्य ब्रह्मान्तेषु च साधुषु ।
[2]तद्योग्यतानुसारेण भक्तिर्निष्कपटा यदि ॥ १५ ॥

तुलस्यादिषु जीवेषु स्यात्प्रीतिर्यदि सर्वदा ।
संसृतेश्च तदा नाशो भूयादेव न संशयः ॥ १६ ॥

एवं स्तुत्वा महाभागो विष्वक्सेनो महाप्रभो ।
तूर्ष्णीं बभूव गरुड प्रांजलिर्नम्रकन्धरः ॥ १७ ॥

---

१. परमाश्च सम्पदः २. तत्तद्योग्यानुसारेण

मित्रादहं न्यून एव नात्र कार्या विचारणा ।
तदनन्तरजौ सम्यगूचतुर्ह्यश्विनौ प्रभो ।

**अश्विनावूचतुः**

भगवत्सङ्गिनां सङ्गमावयोर्देहि सर्वदा ॥
यत्र नारायणो देव ईड्यते सत्कथादिभिः ।
निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥
प्रसूयते सत्कथासु मुक्तसङ्गैः कदा पुनः ।
अतश्चैव महाभाग विष्वक्सेनसमौ स्मृतौ ॥
तयोरनन्तरोत्पन्नो गणपो वाक्यमब्रवीत् ।

**गणपतिरुवाच**

न कामयेऽन्यं तव पादमूलादन्यच्च सर्वं सृतिमूलं वदन्ति ॥
महत्तमान्तर्हृदयान्मुखच्युतं विधत्स्व कर्णामृतमेव वीर ।
नैवास्ति शक्तिः स्तवने देवदेव मित्रादहं न्यून एवं सदाऽपि ॥
तदनन्तरजः स्तोतुं कुबेरस्तूपचक्रमे ।

**कुबेर उवाच**

अहं वै बालिशो विष्णो अधर्मे धर्ममान्यहम् ॥
ये वृत्तिदं हरिं हित्वा अन्यदेवमुपासते ।
नावजानन्ति त्वां मूढाः संसारार्णवतारकम् ॥
नानुविन्दामि भद्रं च इहलोके परत्र च ।
एतादृशं च मां पाहि मित्राद्वै बाह्यमंजसा ॥
एवं स्तुत्वा कुबेरस्तु तूष्णीमेव खगेश्वर ।
तदनन्तरजाः सप्त वसवो ह्यग्निवर्जिताः ॥

---

सप्तदश(१७)श्लोकानन्तरं अध्यायसमाप्तिपर्यन्तं परिदृश्यमानाः श्लोकाः "**नाग पब्लिकेशन्स्**" पुस्तके न सन्ति, **रामतत्त्वप्रकाशनस्य** पुस्तके विद्यन्ते ।

**अग्निव्यतिरिक्तसप्तवसव ऊचुः**

नारायण त्वं ह्यभिमानहीनो वयं तु सर्वे अभिमानवन्तः ।
त्वच्चेष्टितं नैव विदाम सर्वे ह्यस्मान्पाहि सर्वदा ह्यश्वितुल्यान् ॥

एवं स्तुत्वा हि वसवस्तूष्णीमासन् खगेश्वर ।
तेषांमन्तरजाः प्रोचुर्मूलरुद्रादृते दश ।

**मूलरुद्रादृते दशरुद्रा ऊचुः**

अयं नो मनःक्लेशदावाग्निदग्धस्तृषार्तोऽवगाह्यो कथामृष्टपीयूषनद्यां ।
न सस्मार दावं सुखदुःखरूपं न निष्क्रामति प्रभो ब्रह्म संपन्न एव ।

अतस्तव कथां दिव्यां दत्वास्मान्पाहि सर्वदा ।
वयं तु वित्तपेन तुल्या नात्र विचारणा ॥

तदनन्तरजाः सप्तचत्वारिंशन्मरुद्गणाः ।
अहंकारिकप्रवाहाभ्यां व्यतिरिक्ता तदाऽस्तुवन् ।

**चत्वारिंशन्मरुद्गणाः ऊचुः**

अच्युतानन्त गोविन्द दृश्यमानमिदं वपुः ।
जगदुत्पादकं तद्धि तथानन्दकरं दृशाम् ।
वयं तु सर्वदा ब्रह्मन् विवक्सेनसमाः स्मृताः ॥

तदनन्तरजा ऊचुर्विश्वदेवा महाबलाः ।

**दशविश्वेदेवाः ऊचुः**

प्रसीदेश महादेव ध्यायेम च सदा तव ।
मुखाख्यमण्डलं चन्द्रं सर्वदैव सुखप्रदम् ॥
देवानां चैव साधूनां दैत्यानामनुवर्तिनाम् ।
अतः पाहि दयालोऽस्मान् विष्वक्सेनसमान्सदा ॥

तदनन्तरजा ऊचुर्ऋभवश्चैव एव तु ।

### ऋभव ऊचुः

ध्यायेम नित्यमखिलं तव सुस्वरूपं श्रीब्रह्मरुद्रमरुदादिगणैः सुलालितम् ।
श्यामं हिरण्यवसनं च किरीटजुष्टं नीलालकभ्रमरमण्डित कुण्डलास्यम् ।।
अतः पाहि महाविष्णो वित्तपस्य समाः सदा ।
तदनन्तरजा ऊचुः पितरस्त्रय एव तु ।।

### पितर ऊचुः

तव स्वरूपं न तु वेद कश्चन सनत्कुमारो न तु देवलो मुनिः ।
न ब्रह्मपुत्रा मुनयः सुरेशा वयं विदामो न किमत्र चित्रम् ।।
अतोऽस्मान्पाहि देवेश विष्वक्सेनसमा स्मृताः ।
एवं मिलित्वा षडशीतिदेवास्तथाऽश्विनौ वायुजो वित्तपश्च ।।
सख्येन युक्तश्च परस्परं ते च समाः स्मृताः ।
विष्वक्सेनप्रभृतयो देवा नवतिसंख्यकाः ।।
तदनन्तरजान् देवांच्छृणु पक्षीन्द्रसत्तम ।
तदनन्तरजाः सर्वे जयाद्या विष्णुपार्षदाः ।।
हरिं नारायणं स्तोतुं ऊचुः प्रांजलयश्च ते ।।

### जयाद्या ऊचुः

वयं च ब्रह्मेशवृषप्रधानाः प्रजेश भूतेश सुरेश मुख्याः ।
सर्वे वयं यन्नियमप्रपन्ना मूर्ध्नार्पितं लोकहितं वहामः ।।
वर्ये गणपतेश्चापि ह्यवराः परिकीर्तिताः ।
कर्मजेभ्यः सदा श्रेष्ठा इति विज्ञापनं प्रभो ।।
जयाद्यनन्तरजो यस्तु पावकाख्योऽग्निपुत्रकः ।
हरिं तुष्टाव परया भक्त्या परमया मुदा ।

**प्रधानपुत्रपावक उवाच**

जयतु जयतु देवो देवकीनन्दनोऽसौ जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥

अहं तु वह्नेर्ह्यधमः सदा शतगुणेन वै ।
विघ्नेशादधमः प्रोक्तः पर्जन्यादुत्तमो मतः ॥

तदनन्तरजा ऊचुरेकादशविधा प्रभो ।
मनवश्च तथा स्तोतुं हरिं समुपचक्रमुः ॥

**एकादशमनव ऊचुः**

विस्तीर्णनेत्रं परिपूर्णगात्रं लक्ष्मीकलत्रं सुरवैरिशत्रुम् ।
वायोश्च मित्रं जगतः पवित्रं श्रीविष्णुरत्नं प्रणताः स्म नित्यम् ॥

वयं हरे पावकस्य समाश्चैव न संशयः ।
अतोऽस्मान्पाहि देवेश दत्वा ह्यायतनं विभो ॥

तदनन्तरजाः प्रोचुः पितरः सप्तसंख्यकाः ।

**सप्तपितर ऊचुः**

गोकोटिदानं ग्रहणेषु दद्यात्प्रयागगङ्गोदककल्पवासः ।
यज्ञायुतं मेरुसुवर्णदानं गोविन्दकीर्तनसमं न शतांशतुल्यम् ॥

त्वन्नामस्मरणं नित्यं कुर्वतोऽस्मांश्च भो प्रभो ।
पाहि पाहि जगन्नाथ पावकस्य समान्सदा ॥

तदनन्तरजः स्तोतुं च्यवनो नाम भार्गवः ।

**च्यवन उवाच**

हरेर्हि मङ्गलं नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति देवेश महापातककोटयः ॥

हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

अतः पाहि महाभाग पितृणां च समं सदा ।
तदनन्तरजः स्तोतुं हरिं समुपचक्रमे ॥

**उतथ्य उवाच**

गोविन्देति सदा स्नानं गोविन्देति सदा जपः ।
गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम् ॥

सारं भागीरथीतोयं सारं जाप्यं च वैष्णवम् ।
ब्रह्मचर्यं तपः सारं सारं माधवचिन्तनम् ॥

नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकीजनः ॥

अतस्त्वन्नाम्नि भक्तं मां पाहि च्यवनसमं प्रभो ।
तदनन्तरजा ऊचुर्बल्याद्याः कर्मदेवताः ॥

**बल्याद्या ऊचुः**

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां हरौ भक्तिः प्रजायते ॥

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥

एतावदेव जानीमो ह्यतोऽस्मान्पाहि माधव ।
उतथ्यस्य समाः सर्वे नात्र कार्या विचारणा ॥

तदनन्तरजा ऊचुर्गन्धर्वेष्वष्टकाः खग ।

**गन्धर्वाष्टका ऊचुः**

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।

त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ।।

वासुदेवस्य ये भक्ताः शान्तास्तद्गतमानसाः ।
तेषां दासस्य दासोऽहं भवे जन्मनि जन्मनि ।।

अतोऽस्मान्पाहि गोविन्द बल्यादिनां सदा समान् ।
तदनन्तरजश्चैव प्रह्लादः सूक्ष्मरूपकः ।

**प्रह्लाद उवाच**

मज्जन्मनः फलमिदं मधुकैठभारे मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ।।

मां पाहि भक्तं गोविन्द बल्यादेश्च समं च मां ।
विघ्नेशादधमश्चाहं वह्नेः शतगुणाधमः ।।

पर्जन्यादुत्तमं विष्णो पाहि मां भवसागरात्
अग्निपुत्रानन्तरजा गङ्गा स्तोतुं प्रचक्रमे ।।

**गङ्गोवाच**

कृष्णे रताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते भिन्नदेहाः प्रविशन्ति कृष्णे हविर्यथा मन्त्रहुतं हुताशे ।।

सदा त्वत्स्मरणे बुद्धिं दत्वा पाहि महाप्रभो ।
पावकादधमा नित्यं संसारे मोक्ष एव च ।

तदनन्तरजः स्तोतुं पर्जन्य उपचक्रमे ।

**पर्जन्य उवाच**

गोविन्द केशव जनार्दन वासुदेव विश्वेश विश्व मधुसूदन विश्वमूर्ते ।
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत जनार्दन ते नमोऽस्तु ।।

त्वद्भक्तभूतं मां पाहि सदा गङ्गासमः स्मृतः ।
तदनन्तरजा प्राह यमभार्या तु शामला ।।

## शामलोवाच

कृष्णे रताः कृष्णमनुस्मरन्ति रात्रौ च नित्यं पुनरुत्थिता ये।
तेभिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशे ॥

त्वत्स्मारकां सदा पाहि गङ्गातुल्यां न संशयः।
तदनन्तरजा प्राह चन्द्रभार्या च रोहिणी ॥

## रोहिण्युवाच

कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाचमनुजेष्वपि यत्र यत्र।
जातस्य मे भवतु केशव त्वत्प्रसादात्त्वय्येकभक्तिरचलाऽव्यभिचारिणी च ॥

अहं च सर्वदा नित्यं गङ्गायाश्च समा स्मृता।
तदनन्तरजा प्राह सूर्यभार्या च संज्ञका ॥

## संज्ञोवाच

स्वकर्मफलनिर्दिष्टं यां यां योनिं व्रजाम्यहम्।
तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढाऽस्तु मे।

सदा मां पाहि देवेश गङ्गायाश्च समां प्रभो।
तदनन्तरजा प्राह ह्यनिरुद्धप्रिया विराट् ॥

## विराडुवाच

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथां श्रोत्रद्वय त्वं श्रुणु।
कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मर्धनमाधोक्षजम् ॥

पाहि मां देवदेवेश संज्ञायाश्च समा स्मृता।
वरुणस्य भार्या गङ्गा तु यमभार्या तु शामला ॥

आदित्येष्वेव गणितः पर्जन्यो हि महामतिः।

आदित्यभार्या संज्ञा तु चन्द्रभार्या तु रोहिणी ॥
अनिरुद्धभार्या तु उषा तथा ब्रह्माण्डमानिनी ।
एता गङ्गादिषट्संज्ञाः परस्परसमा स्मृताः ।
पावकादधमा ज्ञेया मुक्तौ संसार एव च ॥
गङ्गानन्तरजा स्वाहा स्तोतुं समुपचक्रमे ।
अग्निभार्या सुविज्ञेया नारायणमनामयम् ।

### स्वाहोवाच

मैवं विमोहति भवान् भवदुःखरूपं दातुं त्वमीश्वर हरे तव पादमूले ।
भक्तिं प्रदेहि च गुरौ हरिदासदासभृत्येषु देहि सदा परमं च सख्यम् ।
स्तोतुं गुणांस्तव विभो मम क्वास्ति शक्तिर्गङ्गादहं द्विगुणतो ह्यधमा च नित्यम् ।
तस्मात्त्वमेव हि च मां कृपयार्द्रदृष्ट्या सम्यक्प्रपाहि भगवन्जगतामधीश ॥
स्वाहानन्तरजो यस्तु बुधो नाम जलात्मकः ।

### बुध उवाच

नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलपालकाय ।
नमो नमस्तेऽमरनायकाय नमो नमो दैत्यविमर्दनाय ॥
स्वहाधमोऽहं च सदा मुरारे क नाम शक्तिः स्तवने ममास्ति ।
स्वाहानन्तरजा प्राह अश्विभार्या उषा स्मृता ।
नामाभिमानिनी देवी स्तोतुं समुपचक्रमे ॥

### उषोवाच

नमो नमो भक्तजनप्रियाय नमोनमः सज्जनरक्षकाय ।
नमो नमो दुर्जननाशनाय नमोऽस्तु तस्मै जगदीश्वराय ॥
बुधादहं सर्वदा न्यूनभूता स्वाहायाश्च दशगुणैर्न्यूनभूता ।
तस्मान्मम स्तवने क्वास्ति शक्तिर्दत्वा ह्यायतनं पाहि मां देवदेव ॥

अश्विभार्यानन्तरजो शनिः प्राह भुवात्मकः ॥

**शनिरुवाच**

नमो नमः कारणवामनाय नारायणायामितविक्रमाय।
उषादहं न्यूनभूतो मुरारे दत्वा ह्यायतनं पाहि मां नित्यदेव।
तदनन्तरजः प्राह कर्ममानी तु पुष्करः।

**पुष्कर उवाच**

नमः पयोराशिविनाशनाय नमोऽस्तु सद्भक्तमनःस्थिताय।
नमोऽस्तु यज्ञाङ्गविराजिताय नमोऽस्तु ते सज्जनवल्लभाय ॥
कर्माभिमानी पुष्कराख्याभिधोऽहं शनैश्चरात्सर्वदा न्यूनयुक्तः।
एवंभूतस्य स्तवने नास्ति शक्तिर्दत्वा ह्यायतनं पाहि मां देवदेव ॥
पुष्करानन्तरजाः प्रोचुर्देवा आजानजाः प्रभो।

**आजानजा ऊचुः**

नमो नमः कारणकारणाय नमोऽस्तु शब्दादिविवर्जिताय।
नमोऽस्तु ते दिव्यसुखप्रदाय नमो नमो भक्तजनप्रियाय।
न ह्यस्माकं स्तवने क्वास्ति शक्तिः सदा वयं पुष्करान्न्यूनभूताः।

इति श्रीगरुडपुराणे ब्रह्मकाण्डे
विष्णुस्तुतिदेवतातारतम्यनिरूपणं
नाम अष्टमोऽध्यायः ॥ ८ ॥

## ॥ नवमोऽध्यायः ॥

### गरुड उवाच

आजानजस्वरूपं च ब्रूहि कृष्ण महामते ।
तदन्यांश्च क्रमेणैव वक्तुं कृष्ण त्वमर्हसि ॥ १ ॥

### कृष्ण उवाच

आजानाख्या देवतास्तु तत्तद्देवकुले भवाः ।
आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः ॥ २ ॥

विराधश्चारुदेष्णश्च तदा चित्ररथस्तथा ।
धृतराष्ट्रः किशोरश्च हूहूर्हाहास्तथैव च ॥ ३ ॥

विद्याधराश्चोग्रसेनो विश्वावसुपरावसू ।
चित्रसेनश्च गोपालो बलः पंचदश स्मृताः ॥ ४ ॥

एवमाद्याश्च गन्धर्वाः शतसंख्याः खगेश्वर ।
आजानजसमा ज्ञेयाः मुक्तौ संसार एव च ॥ ५ ॥

आजानजास्तु ये देवाः [1]कर्मजेभ्यः शतावराः ।
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥ ६ ॥

सुकेशा शबरी चैव मञ्जुघोषा च पिङ्गला ।
इत्यादिकं ह्यप्सरसां सहस्रं परिकीर्तितम् ॥ ७ ॥

आजानजसमा ह्येते कर्मजेभ्यः शतावराः ।
विश्वामित्रो वसिष्ठश्च नारदश्च्यवनस्तथा ॥ ८ ॥

उतथ्यश्च मुनिश्चैतान् वर्जयित्वा खगेश्वर ।
ऋषयश्च महात्मानो ह्याजानजसमाः स्मृताः ॥ ९ ॥

---

१. कर्मजाच्च शतंवराः ।

शतर्चिः कश्यपो ज्ञेयो मध्यमश्च पराशरः ।
पावमान्यः प्रगाथश्च क्षुद्रसूक्तश्च देवलः ॥ १० ॥

गृत्समदो ह्यासुरिश्च भरद्वाजोऽथ मुद्गलः ।
उद्दालको ऋष्यशृङ्गः शंखः सत्यव्रतस्तथा ॥ ११ ॥

कवषो हरितः कण्वो विरूपो मुसलस्तथा ।
विष्णुवृद्धश्च ह्यात्रेयो श्रीवत्सो वत्सलेत्यपि ॥ १३ ॥

[1]भार्गवश्चाप्नवानश्च मांडूकेयस्तथैव च ।
मंडूकश्चैव जाबालिः वीतिहव्यस्तथैव च ॥ १४ ॥

गृत्समदः शौनकश्चेत्याद्या हि ऋषयः स्मृताः ।
एतेषां श्रवणादेव हरिः प्रीणाति सर्वदा ॥ १५ ॥

ब्रुवे व्यष्टसहस्रं च श्रुणु तार्क्ष्य मम स्त्रियः ।
अग्निपुत्रास्तु यद् व्यष्टसहस्रं (तु) च मम स्त्रियः ॥ १६ ॥

आजानजसमा ह्येता नात्र कार्या विचारणा ।
[2]त्वष्टुः पुत्री कशेरुश्च तासां मध्ये गुणाधिका ॥ १७ ॥

तदनन्तरजान्वक्ष्ये श्रुणु सम्यक् खगेश्वर ।
आजानेभ्यस्तु पितरः सप्तभ्योऽन्ये [3]शतावराः ॥ १८ ॥

शताधिकाः हि पितरः इति वेदविदां मतम् ।
तदनन्तरजान्वक्ष्ये श्रुणु सम्यक् खगेश्वर ॥ १९ ॥

अष्टभ्यो देवगन्धर्वा अष्टोत्तरशतं विना ।
तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ॥ २० ॥

स्वमुखेनैव देवैश्च आज्ञाप्या देवतागणाः ।
आख्याता देवगन्धर्वास्तेभ्यस्ते च [4]शतावराः ॥ २१ ॥

---

१. भार्गवश्चवनो और्वो । २. त्वष्टृपुत्री । ३. शतं वराः । ४. शतं वराः ।

तेभ्यस्तु क्षितिपा ज्ञेया अवराश्च शतैर्गुणैः ।
तेभ्यः शतगुणा ज्ञेया मानुषेषूत्तमा गणाः ॥ २२ ॥

एवं प्रासंगिकानुक्त्वा प्रकृतं (ह्यनुसरामि भोः) ह्यनुसराम्यहम् ।
एवं ब्रह्मादयो देवा लक्ष्म्याद्या अपि सर्वशः ॥ २३ ॥

स्तुत्वा तूष्णीं स्थिताः सर्वे प्रांजलीकृत्य भो द्विज ।
इति स्तुतश्च देवेशो भगवान् हरिरव्ययः ॥ २४ ॥

तेषामायतनं देवो मनसा समचिन्तयन् ।
इदं पवित्रमारोग्यं पुण्यं पापप्रणाशनम् ॥ २५ ॥

हरिप्रसादजनकं स्वरूपसुखसाधनम् ।
इदं तु स्तवनं विप्रा न पठन्तीह मानवाः ॥ २६ ॥

न श्रुण्वन्ति च ये नित्यं ते सर्वे चैव मानिनः ।
न स्मरन्तोऽन्तरं नित्यं ये भुंजन्ति नराधमाः ।
तैर्भुक्तं सततं चैव विष्ठाकृमिशतैर्युतम् ॥ २७ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**
**विष्णुस्तुतिदेवतातारतम्यनिरूपणं**
**नाम नवमोऽध्यायः ॥ ९ ॥**

## ॥ दशमोऽध्यायः ॥

### गरुड उवाच

देवैरेवं स्तुतो विष्णुर्भगवान्सात्वतां पतिः ।
कीदृशं ह्याश्रयं तेषां दत्वा स पर्यपालयत् ॥ १ ॥
एतद्वेदितुमिच्छामि कृष्ण कृष्ण महाप्रभो ।
सम्यग् ब्रूहि दयालो त्वं यदि मच्छ्रोत्रमर्हति ॥ २ ॥

### कृष्ण उवाच

तेषु तत्वेषु भगावान् स विवेश महाप्रभुः ।
क्षोभयामास भगवान् सम्बन्धविधुरो हरिः ॥ ३ ॥
आदौ ससर्ज भगवान् ब्रह्माण्डं कनकात्मकम् ।
पंचाशत्कोटिविस्तीर्णं योजनानां समन्ततः ॥ ४ ॥
तदूर्ध्वमण्ववयवस्तावान् कनकरूपकः ।
वर्तते तत ऊर्ध्वं तु पंचाशत्कोटिभूतलम् ॥ ५ ॥
एवं कोटिशतं तस्यावयवः परिकीर्तितः ।
ततश्च सप्तावरणैः समन्तात्परिधीकृतम् ॥ ६ ॥
कबन्धावरणं ह्याद्यं कोट्या दशसहस्रकम् ।
द्वितीयावरणं ज्ञेयं पावकस्य महात्मनः ॥ ७ ॥
अपां दशगुणैर्युक्तं समन्तात्परिधीकृतम् ।
तृतीयावरणं ज्ञेयं ईरस्यैव महात्मनः ॥ ८ ॥
दशाधिकं पावकाच्च समन्तात्परिखीकृतम् ।
चतुर्थावरणंज्ञेयं नभसोऽपि महाप्रभो ॥ ९ ॥
ईराद्दशगुणैरेवं समन्तात्परिखीकृतम् ।
पंचमावरणं ज्ञेयं अहंकाराख्यमेव च ॥ १० ॥

व्योम्नो दशगुणैरेवं समन्तात्परिवारितम् ।
षष्ठमावरणं (ज्ञेयं) प्रोक्तं महत्तत्वं खगेश्वर ॥ ११ ॥
अहंकाराद्दशगुणं समन्तात्परिवारितम् ।
सप्तमावरणं प्रोक्तं त्रिगुणावरणं प्रभो ॥ १२ ॥
महत्तत्वाद्दशगुणैरधिकं परिकीर्तितम् ।
महत्तत्वानन्तरं च तमो ह्यावरणं स्मृतम् ॥ १३ ॥
महत्तत्वात्पंचगुणैरधिकं परिकीर्तितम् ।
तस्माच्च द्विगुणं ज्ञेयं रजो ह्यावरणं स्मृतम् ॥ १४ ॥
ततश्च द्विगुणं ज्ञेयं सत्वावरणमुत्तमम् ।
त्रयश्चैव मिलित्वा तु एकावरणमीरितम् ॥ १५ ॥
अव्याकृताख्यमाकाशं तदनन्तरमीरितम् ।
मर्यादारहितं तच्च तत्रास्ते हरिरीश्वरः ॥ १६ ॥
अष्टमावरणव्योम्नोरन्तरा विरजा नदी ।
पंचयोजनविस्तीर्णा समन्तात्परिधीकृता ॥ १७ ॥
अस्ति पुण्यतमा ज्ञेया लोकसंसारनाशिनी ।
ये वै चतुर्मुखेनैव मोक्षं विन्दन्ति मानवाः ॥ १९ ॥
अपरोक्षदृशामेवं ब्रह्मणा सह गामिनाम् ।
विरजातरणं विद्धि नान्येषां विनतासुत ॥ २० ॥
विरिंचेनैव साकं तु कल्पेस्मिन्नधिकारिणां ।
तेषां तु नियमेनैव सर्वप्रारब्धसंक्षयः ॥ २१ ॥
भवत्येवं न सन्देहो नान्येषां सर्वसंक्षयः ।
अतस्तु विरजातरणं तेषामेव भवेत्पटो ॥ २२ ॥
विरजातरणं नास्ति तेषां तत्संगिनां तथा ।
सर्वारब्धक्षयो नास्ति यतस्तेषां खगाधिप ॥ २३ ॥

अतश्च सर्वथा नास्ति विरजातरणं प्रभो ।
प्रलये विरजानद्या लयो नास्ति खगेश्वर ॥ २४ ॥
लक्ष्म्यात्मिका तु सा ज्ञेया लिंगदेहविदारिणी ।
ब्रह्मत्वयोग्या ऋजवो नाम देवाः प्रकीर्तिताः ॥ २५ ॥
तेऽपि प्रत्येकशः सन्ति ह्यनन्ताश्च पृथग्गणाः
पृथक् पृथक् च तैः सार्धं (साकं) मोक्षयोग्याः खगेश्वर ॥ २६ ॥
जीवाः सन्ति ह्यनेके च प्रतिकल्पे सृजन्ति ते ।
द्वात्रिंशल्लक्षणैः सम्यक् युक्ता वायुत्वयोग्यकाः ॥ २७ ॥
अष्टाविंशल्लक्षणैश्च गिरीशपदयोगिनः ।
चतुर्विंशतिमारभ्य षोडशाच्च सुराः स्मृताः ॥ २८ ॥
आष्टकाद् ऋषयः प्रोक्तास्तदूनाश्चक्रवर्तिनः ।
शतजन्म समारभ्य ब्रह्मणः परमेष्ठिनः ॥ २९ ॥
अपरोक्षमिति प्रोक्तं तथा ह्यारब्धसंक्षयः ।
एकोनशतकल्पेन वायुत्वं याति भो द्विज ॥ ३० ॥
शतजन्मनि ब्रह्मत्वं याति पश्चाद्धरेः पदं।
चत्वारिंशद्ब्रह्मकल्पं समारभ्य खगेश्वर ॥ ३१ ॥
रुद्रस्याप्यापरोक्षं स्यात् तथा प्रारब्धसंक्षयः ।
एकचत्वारिंशकल्पे शेषत्वं याति सुव्रत ॥ ३२ ॥
ब्रह्मणा सह मोक्षं च याति सम्यङ् न चान्यथा ।
कल्पविंशतिमारभ्य ब्रह्मणः परमेष्ठिनः ॥ ३३ ॥
इन्द्रस्याप्यापरोक्षं स्यात् तथा प्रारब्धसंक्षयः ।
दशकल्पं समारभ्य ब्रह्मणः परमेष्ठिनः ॥ ३४ ॥
अर्कादीनामापरोक्ष्यं तथा ह्यारब्धसंशयः ।
ब्रह्मणैव सहायाति हरिं नारायणं परम् ॥ ३५ ॥

**गरुड उवाच**

पंचाशीतिब्रह्मकल्पं समारभ्य महाप्रभो ।
रुद्रस्याप्यपरोक्षं स्यात् तथा प्रारब्धसंक्षयः ॥ ३५ ॥
इति श्रुतं मया ब्रह्मन् ब्रह्मणोक्तं हरेः प्रियात् ।
इत्थं त्वयोक्तं श्रीकृष्ण संशयो बाधते मम ॥ ३६ ॥
अतो मे संशयं छिन्दि यथा न स्यात् तथा पुनः ।
इति तद्वचनं श्रुत्वा कृष्णो वचनमब्रवीत् ॥ ३७ ॥

**श्रीकृष्ण उवाच**

ब्रह्मोक्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ।
सन्देहस्त्वज्ञदृष्टीनां ज्ञानिनां नास्ति सर्वथा ॥ ३८ ॥
अशीतिर्ह्यष्टकाः प्रोक्ताः अष्टपंच खगेश्वर ।
चत्वारिंशद्ब्रह्मकल्पं एवं प्राह चतुर्मुखः ॥ ३९ ॥
तत्वानां बहुगोप्यत्वात्तथोक्तं ब्रह्मणा पुरा ।
अभिप्रायस्त्वेवमेव ज्ञातव्यो नात्र संशयः ॥ ४० ॥
पंचाशीति ब्रह्मकल्पं ये विजानन्ति (खगेश्वर) भो द्विज ।
तेऽन्धन्तमः प्रविशन्ति सत्यं सत्यं मयोदितम् ॥ ४१ ॥
विरजानन्तरं विप्र तथाव्याकृतमम्बरम् ।
अनन्तपारं तदपि लक्ष्मीस्तस्याभिमानिनी ॥ ४२ ॥
संख्यया गणना नाम यस्य नास्ति महाप्रभो ।
तदानन्त्यमिति प्रोक्तं सर्वदा नात्र संशयः ॥ ४३ ॥
अण्डाभिमानी ब्रह्मा तु विराडाख्यो ह्यभूत्तदा ।
एवमण्डं स निर्माय भगवान् हरिरव्ययः ॥ ४४ ॥
विवेश तत्र गरुडो देवैस्तत्त्वाभिमानिभिः ।
अधश्चोर्ध्वं तदाक्रम्य हरिस्तिष्ठति सर्वदा ॥ ४५ ॥

एवं प्राकृतसर्गोक्तिर्वैकृतं श्रुणु पक्षिराट् ।

**गरुड उवाच**

सृष्टिरुक्ता त्वया पूर्वं श्रुता सम्यङ्मया हरे ॥ ४६ ॥
किं नाम प्राकृतं ज्ञेयं तथा किं वैकृतं प्रभो ।
एतद्विस्तार्य मे ब्रूहि श्रोतुं कौतूहलं हि मे ॥ ४७ ॥

**श्रीकृष्ण उवाच**

अव्यक्ताद्याः पृथिव्यन्ताः अण्डाच्च बहिरुद्भवाः ।
ते सर्वे प्राकृताः प्रोक्तास्तेषां ज्ञानाद्विमुच्यते ॥ ४८ ॥
ब्रह्मांण्डं विकृतं ज्ञेयं ब्रह्माण्डान्तः खगेश्वर ।
या सृष्टिरुच्यते सद्भिः सैवोक्ता विकृतेति च ॥ ४९ ॥
सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च ।
देवता ऋषिमुख्याश्च लोका भूरादयस्तथा ॥ ५० ॥
अनाद्यनन्तकालीनाः सर्वदैकप्रकारकाः ।
जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथंचन ॥ ५१ ॥
यत्त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते ।
जगत्प्रवाहः सत्योऽयं हरिः सर्वोत्तमस्तथा ॥ ५२ ॥
सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न देवः केशवात्परः ॥ ५३ ॥
सर्वोत्कृष्टं केशवं च विहायान्यमुपासते
तेषामन्धन्तमो ज्ञेयं पितॄणां गुरुणामपि ॥ ५४ ॥
इदानीं श्रुणु पक्षीन्द्र वैकृतं सर्गमुत्तमम् ।
सम्यग् जानाति यो लोके स याति परमं पदम् ॥ ५५ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे**

**ब्रह्माण्डादिवैकृतैकदेशप्राकृतसृष्टिनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥**

## ।। एकादशोऽध्यायः ।।

### कृष्ण उवाच

पुरुषाख्यो हरिः साक्षाद् भगवान्पुरुषोत्तमः ।
शिष्ये ह्यण्डोदके विष्णुर्नृणां साहस्रवत्सरम् ।। १ ।।

लक्ष्मीश्चोदकरूपेण शय्यारूपेण चाण्डज ।
[1]विद्यातरङ्गरूपेण वायुरूपेण भोऽण्डज ।। २ ।।

तमोरूपेण सैवासीन्नान्यदासीत् कथंचन ।
आसीद्गर्भोदके [2]चैव नान्यदासीत्कथंचन ।। ३ ।।

लक्ष्मीस्तुष्टाव च हरिं गर्भोदे पक्षिसत्तम ।
लक्ष्मीधराभ्यां रूपाभ्यां प्रकृतिर्हरिणा सह ।। ४ ।।

शेते श्रुतिस्वरूपेण स्तौति गर्भोदके हरिम् ।
नारायण नमस्तेस्तु श्रुणु विज्ञापनं मम ।। ५ ।।

अजां जहि महाभाग योग्यानां मुक्तिमावह ।
अजा तु प्रकृतिः प्रोक्ता चापरा प्रकृतिः [3]परा ।। ६ ।।

ततोऽवरा तु ब्रह्माणी ब्रह्मपत्नी वरानना ।
उमाशचीमुखाः तस्याः अवराः संप्रकीर्तिताः ।। ७ ।।

एतासां हननं नैव प्रार्थयामि सदा हरे ।
अस्ति प्रतिनूपु ब्रह्म प्रकृती द्वे व्यवस्थिते ।। ८ ।।

एका तु नित्यसंसारा त्वजशब्दाभिधायिका ।
द्वितीया तु तमोऽपोह्या अजशब्दाभिधायिका ।। ९ ।।

अत एव त्वजे ज्येष्ठे इति लोके प्रकीर्तिते ।
सुखदुःखप्रदा चैव अपरा दुःखदैव तु ।। १० ।।

---

१. वीची । २. चेत्थं । ३. श्रीः परा प्रकृतिः स्मृता ।

मोक्षाधिकारिणामेव ज्ञानैश्वर्यादयो गुणाः ।
तेषामाच्छादिका ह्येका तमोगा सा प्रकीर्तिता ॥ ११ ॥
जीवं प्रति महाविष्णुं या त्वाच्छादयति प्रभो ।
सा परा प्रकृतिर्ज्ञेया परमाच्छादिका स्मृता ॥ १२ ॥
एवं सा परमा दुष्टा तमोगा तु प्रकीर्तिता ।
जीववर्गेष्वेव खग ब्रह्मादेर्नास्ति सा क्वचित् ॥ १३ ॥
पिशाचवत्समुद्दिष्टा जीवस्येत्यधिकारिणः ।
प्रेरकाश्च तयोर्देव्योस्त्वहमाद्याः सुखात्मिकाः ।
तत्र विष्णो महाभाग स्वगुणाच्छादिकां जहि ॥ १४ ॥
स्वरूपाच्छादिका यस्मात्तमोगा सा प्रकीर्तिता ।
तस्याश्च हननं युक्तमनित्यत्वाच्च भो द्विज ॥
परमाच्छादिकां दुष्टां व्यामुच्यैव महाप्रभो ॥ १५ ॥
मोक्षं देहि महाभाग त्वद्भक्तानां महाप्रभो ।
परमाच्छादिका ह्यस्मान्नित्यसंसारिणो यतः ॥ १६ ॥
अत एव च नित्यत्वात्तस्मात्तदपसारणम् ।
कुरु देव महाभाग इति विज्ञापनं मम ॥ १७ ॥
एवं स्तुतो हरिः कृष्णः सुप्रबुद्धोऽपि सर्वदा ।
उद्बुद्धवन्महाविष्णुः अभूदज्ञव्यपेक्षया ॥ १८ ॥
तस्य नाभेरभूत्पद्मं सौवर्णं भुवनाश्रयम् ।
तत्प्राकृतं च विज्ञेयं भूदेवी त्वभिमानिनी ॥ १९ ॥
अनन्तसूर्यवच्चैव प्रकाशकमितीरितम् ।
चिदानन्दमयो विष्णुस्तस्माद्भिन्नो न संशयः ॥ २० ॥
विष्णोः स्वरूपभूतं च ये विजानन्ति ते नराः ।
ते याति ह्यधरं लोकं तथा तत्संगिसंगिनः ॥ २१ ॥

किरीटादिकवच्चैव ज्ञातव्यं च खगेश्वर ।
किरीटाद्या अपि हरेर्द्विधा सन्ति न संशयः ॥ २२ ॥

स्वरूपा ह्यस्वरूपाश्च स्वस्वरूपनिदर्शने ।
गृहीता इति विज्ञेया न स्वरूपाः खगेश्वर ॥ २३ ॥

ब्रह्माण्डं ह्यसृजत्तत्र सर्वलोकविधायकं ।
प्रलये सुप्तिहीनश्च सुप्त इत्युच्यते बुधैः ॥ २४ ॥

तस्य सुप्तिं वास्तवं च न ज्ञातव्यं खगेश्वर ।
प्रलयेऽपि महाभाग ब्रह्मवाय्वोर्न चास्ति हि ॥ २५ ॥

वृत्तिरूपं परं ज्ञानं याथार्थ्यं नात्र संशयः ।
इन्द्रियाणामुपरतिः सुप्तिरित्युच्यते बुधैः ॥ २६ ॥

ब्रह्मवाय्वोश्च यत्सुप्तिं वास्तवं स्यात्खगेश्वर ।
कथं तर्हि तयोर्वृत्तेः ह्यविलुप्तत्वमुच्यते ॥ २७ ॥

तस्मात्तद्वास्तवं नास्ति ब्रह्मवाय्वोः खगेश्वर ।
स्वप्नावस्थायाः सदृशी ह्यवस्था सुप्तिसंज्ञिता ॥ २८ ॥

ब्रह्मण्यमुख्यया वृत्त्या ह्यस्तीत्येवं निबोध मे ।
अतो न वास्तवमिदं अंगीकार्यं खगेश्वर ॥ २९ ॥

वास्तवं ये विजानन्ति ते यान्ति ह्यधरं तमः ।

**गरुड उवाच**

सुप्तिस्त्वज्ञानकार्यत्वात्सुप्तिर्नास्तीत्युदीरिता ।
यदा हि कारणं नास्ति तदा कार्यं किमु प्रभो ॥ ३० ॥

इत्यभिप्रायगर्भेण त्वं समाधीयसे यदि ।
तर्हि तस्य महाभाग कथं ब्रूहि भयादिकं ॥ ३१ ॥

भयादिकं ह्यस्तु नाम का वास्माकं क्षतिर्भवेत् ।
एवमुक्तस्तु गोविन्दोऽब्रवीत्तत्रापि कारणम् ॥ ३२ ॥

भयं त्वज्ञानकार्यं स्यात्कार्यात्कारणमत्र हि ।
मीयते च मया ब्रह्मन् तस्मात्सुप्तिं च तत्र हि ॥ ३३ ॥
अज्ञानादि यदि ब्रह्मन् तस्य न स्यात् कथंचन ।
कथं दुःखी प्रदृश्येत न कथंचित्करिष्यति ॥ ३४ ॥
कथं वा मुक्तिपर्यन्तं ज्ञानव्यक्तिर्वदस्व मे ।
यद्यज्ञानं तस्य सत्यं न स्यात्तर्हि महाप्रभो ॥ ३५ ॥
अत्यादरात् कथं ब्रह्मन् श्रवणं कुरुते वद ।
इति तस्य वचः श्रुत्वा कृष्णो वचनमब्रवीत् ॥ ३६ ॥

कृष्ण उवाच

भयं च वास्तवं तस्य न जानीहि महामते ।
दृश्यते यद्भयं तस्य हरिप्रीत्यर्थमेव च ॥ ३७ ॥
भयादिकं तु भक्त्यैव न तु वास्तवमीरितम् ।
पापप्रारब्धलेशस्तु तस्य नास्ति खगेश्वर ॥ ३८ ॥
दुःखाज्ञानादिकं किंचित्कथं तस्मिन् भविष्यति ।
विष्णोराज्ञानुसारेण भयाद्यनुकरोत्यसौ ॥ ३९ ॥
तेन प्रीणाति च हरिस्तस्य नास्त्यत्र संशयः ।
श्रुणोति सततं ब्रह्मा न चिन्त्यात् तावताज्ञता ॥ ४० ॥
कदाचिद्दृश्यते ब्रह्मा दुःखी न च खगेश्वर ।
यद्ब्रह्म च न जानीयाद्धरिप्रीत्यर्थमेव च ॥ ४१ ॥
दुःखिवद्दृश्यते ब्रह्मा ह्यज्ञानां मोहनाय च ।
योग्यतामनतिक्रम्य यावज्ज्ञानं च तिष्ठति ॥ ४२ ॥
ब्रह्मणस्तावदेवास्ति नात्र कार्या विचारणा ।
ज्ञानस्य व्यक्तता नाम विद्यामानस्य चादरात् ॥ ४३ ॥

ज्ञानस्यासादनं चैव ज्ञानव्यक्तिरिति स्मृता ।
अतोऽज्ञानादिकं नास्ति ब्रह्मणः परमेष्ठिनः ॥ ४४ ॥

पद्माद् हिरण्मयाज्जातो ब्रह्मा तु चतुराननः ।
सर्वदालोचनायुक्तस्तेन ह्यालोचनं कृतम् ॥ ४५ ॥

अज्ञानां मोहनार्थाय हरिप्रीत्यर्थमेव च ।
संकल्पोऽपि तथैवास्ति न ह्यज्ञानात्कृतस्तथा ॥ ४६ ॥

को वा मां सृष्टवानत्र इति ह्यालोच्य स प्रभुः ।
तं विचारयितुं ब्रह्मा पद्मनाडीं विवेश ह ॥ ४७ ॥

**इति श्रीगरूडपुराणे ब्रह्मकाण्डे अज्ञानहेतुनिरूपणं**

**नाम एकादशोऽध्यायः ॥ ११ ॥**

## ॥ द्वादशोऽध्यायः ॥

### कृष्ण उवाच

नार्डीं समाविश्य महानुभावः श्रीविष्णुभक्तो ह्यथ पुष्करस्थः ।
विचारयामास गुरुं स्वमूलं नारायणं निर्गुणमद्वितीयम् ॥ १ ॥

एतावता हरिभक्तस्य तस्याप्यच्छिन्नभक्तस्य चतुर्मुखस्य ।
विचारकाले च विचिन्तनीयो ह्यज्ञानलेशस्तु खगेश्वरेश्वर ॥ २ ॥

यथैव संकल्पमथास्ति विष्णोः तथैव सोऽपि प्रकरोति नित्यम् ।
आलोचने तस्य सदास्ति भूमन् स्वयोग्यतामनतिक्रम्य चैव ॥ ३ ॥

हरेः स्वरूपे च तथा प्रपञ्चे स्वस्मिन्स्वरूपे च सदास्ति ज्ञानम् ।
तथापि नित्यं परिचारतीव ह्यज्ञानिवद् दृश्यते विष्णुवच्च ॥ ४ ॥

हरिप्रीत्यर्थं कुरुतेऽसौ कदाचित् तथा दैत्यानां वंचयितुं सदैव ।
तत्रापि कश्चिच्च विशेष आस्ते श्रुणुष्व सम्यग्विनतातनूज ॥ ५ ॥

यथा प्रपञ्चं प्रविजानाति देवः सदा ह्यशेषैः प्रविशेषैश्च युक्तम् ।
वेधा यथा वा प्रविजानाति नित्यं स्वस्य स्वरूपं न तथा हरिं च ॥ ६ ॥

स्वयोग्यतामनतिक्रम्य वेधाः हरेः स्वरूपं न विजानाति सर्वम् ।
स्वयोग्यरूपं सर्वदा वेत्ति विष्णोः तत्राज्ञानं नास्ति किंचिद्द्विजेन्द्र ॥ ७ ॥

यावत्स्वरूपं च तथैव लक्ष्म्या वेधा न जानाति कुतस्तदन्ये ।
तयोः स्वरूपं न विजानाति सर्वं तथापि वेधाश्चैकदेशे च नित्यम् ॥ ८ ॥

जानाति लक्ष्मीर्हरिरूपं च यावत् तावन्न जानाति विधिः खगेन्द्र ।
ज्ञाने विधातुश्च स्वयोग्यभूते न चिन्तनीयं नापि क्षणाधिकं च ॥ ९ ॥

अतो विरिंचस्य न चिन्तनीयो ह्यज्ञानलेशः क्वापि देशे च काले ।
नार्डीं समाविश्य तदा विरिंचो न वेद नारायणमेकवच्च ॥ १० ॥

तदाश्रुणोत्तं कमलासनः प्रभुः तपस्तपेति व्यक्षरं सादरेण ।
अभिप्रायं तस्य सम्यग्विदित्वा तपः कुरु त्वं हरितुष्ट्यर्थमेव ॥ ११ ॥
तपोऽकरोद्धरिपादैकनिष्ठो हरेः प्रीत्यर्थं दिव्यसहस्रवर्षम् ।
ततो हरिः प्रादुरासीत्खगेन्द्र वरं दातुं भक्तवरस्य दिव्यम् ॥ १२ ॥
तदा विष्णुं देवदेवं ददर्श चतुर्भुजं तं जलजायताक्षम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं संपश्यन्तं सुप्रसन्नार्द्रदृष्ट्या ॥ १३ ॥
दृष्ट्वा हरिं ब्रह्म नारायणं च पुरःस्थितं भक्तवश्यं दयालुम् ।
समर्चयामास महाविभूत्या भक्त्या हरेः पादतीर्थं दधार ॥ १४ ॥
अस्तौन्महाभागवतप्रधानो हरिं गुरुं भक्तिविवर्धितात्मा ॥

**ब्रह्मोवाच**

रमेश लोकेश जगन्निवास तव स्वरूपं न विजानाति देवी ।
तव प्रसादात्सुविजानाति देवी गुणान्वेदोक्तान् तदनुक्तांश्च सर्वान् ॥ १५ ॥
तथापि सा न विजानाति देवी साकल्येनाद्यापि ते सद्गुणांश्च ।
यद्यप्यनुक्तं पंचभिर्नास्ति वेदैः तथापि देवेऽत्र विशेष आस्ते ॥ १६ ॥
तत्त्वेच्छवः प्रविजानन्ति नित्यं वेदेषूक्तान् क्वाप्यनुक्तांश्च सर्वान् ।
आदौ जानीयात्पंचवेदान्मुरारे ऋगादयः सुष्ठु चत्वार एव ॥ १७ ॥
वेदा ह्येते वेदयन्तीति देव तथा पुराणं भारतं पंचरात्रम् ।
एतेषूक्तान्विष्णुगुणान्स्वयोग्यान् सदा विजानाति रमापि देवी ॥ १८ ॥
सामान्यतो ह्युक्तगुणान् ऋगादिषु स्वयोग्यभूतान् संविजानाति देवी ।
सामान्यतः प्रविजानाति देवी हरेर्गुणान्न विशेषाच्च नित्यम् ॥ १९ ॥
अहं विजानामि रमाप्रसादात् तव प्रसादाच्च गुणान्सदैव ।
स्वयोग्यभूतान् श्रुतिषूक्तान् गुणांश्च तथानुक्तान्सविशेषांश्च जाने ॥ २० ॥
तव प्रसादाच्च मम प्रसादात् कालान्तरे तांश्च जानाति शेषः ।
दुष्कर्मलेशाच्च तिरोहितान्गुणान्यानेव पूर्वं विदितान्स्वयोग्यान् ॥ २१ ॥

तानेव ज्ञात्वा पुनरेव शेषस्तिरोहितान् लब्धगुणस्ततः स्मृतः ।
सदा स्वयोग्यांश्च हरेर्गुणांश्च पूर्वं ह्यजानंश्च तव प्रसादात् ॥ २२ ॥

यदा विजानाति हरे मुरारे ह्यप्राप्तलब्धेति तदोच्यते हरः ।
ममापरोक्ष्यं यावदभून्मुरारे रूपं तावत्प्रविजानामि नित्यम् ॥ २३ ॥

गोविन्द नित्याव्यय ज्ञानपूर्ण तव प्रसादान्नास्ति शतेषु तन्मम ।
ये ये हि देवाश्च शरीरधारिणस्ते ज्ञानहीना विषयेषु निष्ठाः ॥ २४ ॥

ये ये हि देवा विषयेषु निष्ठास्त एव देवा बहिरर्थभावाः ।
एते हि देवा बहिरर्थभावा मोक्षादन्ये यत्नवन्तः सदैव ॥ २५ ॥

तव स्वरूपे च जगत्स्वरूपे तवाज्ञानं नास्ति विष्णो सदैव ।
यतस्तव प्राकृतो नास्ति देहो ह्यतोऽज्ञानं नास्ति नास्त्येव विष्णो ॥ २६ ॥

पूर्णानन्दज्ञानदेहोऽपि नित्यं सदा शरीरीत्युच्यसे त्वं मुरारे ।
यतस्तव प्राकृतो नास्ति देहो ह्यतोऽपि नित्यमशरीरीति च स्मृतः ॥ २७ ॥

यतोऽप्यहं सर्वदास्मिन् शरीरेऽहं ममेत्यभिमानेन शून्यः ।
अतोऽप्यहं त्वशरीरी सदैव तथैव नित्यं बहिरर्थशून्यः ॥ २८ ॥

स्वभोगभार्यासत्यलोकादिभोगः स्वयोग्यभोगो वस्त्रमाल्यादिभोगः ।
एते हि सर्वे बहिरर्थसंज्ञकाः नैसर्गकामाः सर्वदा मे हि विष्णोः ॥ २९ ॥

तथाप्यहं कामहीनो हि नित्यं रुद्रादयः कामवन्तो यतोऽतः ।
शरीरिणस्ते बहिरर्थभावा अज्ञानवन्तोऽपि च संस्मृताः खग ॥ ३० ॥

स्वदारभोगे केवलं प्रीतये च हरेरेवं सर्वदाहं करोमि ।
स्रगम्बरादीन् धारयिष्ये सदैव विष्णोः प्रीत्यर्थं नैव गात्रार्थमेव ॥ ३१ ॥

नित्यानन्दादन्यकामो न चास्ति ह्यतः सदा बहिरर्थैश्च शून्यः ।
ममापि भार्या बहिरर्थशून्या ह्यमूढभूता मोहवतीव दृश्यते ॥ ३२ ॥

अमूढभूता ज्ञानिनां सर्वदैव तथाज्ञानां ज्ञानहीनेव भाति ।

यावज्ज्ञानं वायुदेवस्य चास्ति तावज्ज्ञानं ज्ञानवतामृजूनाम् ।
क्रमेणैषां ज्ञानवतामृजूनां स्पष्टत्वरूपो ज्ञानगतो विशेषः ॥ ३३ ॥

सौरिप्रकाशे च यथैव दर्शनं तथा मम ज्ञानगतो विशेषः ।
दीपप्रकाशे च यथैव दर्शनं तथा ज्ञानं वायुदेवस्य चास्ति ॥ ३४ ॥

अस्पष्टरूपा न्यूनता ह्यस्ति वायौ तथाऽज्ञानं नैव संचिन्तनीयम् ।
एतादृशी ज्ञानशक्तिर्मुरारेर्वाय्वादीनां मोक्षपर्यन्तमस्ति ॥ ३५ ॥

ज्ञानं ऋजूनां मोक्षकालेऽव्ययं च वाय्वादीनां मोक्षकाले नाशहीनम् ।
वायोर्मम प्रलये सृष्टिकाले तथा गायत्र्या नास्ति नास्त्येव मोहः ॥ ३६ ॥

गायत्रीवद्भारती देवदेव ज्ञातव्यैवं हरितत्त्ववेदिभिः ।
ममाज्ञानं दृश्यते यत्र कुत्र दैत्यादीनां मोहनार्थं सदैव ॥ ३७ ॥

तेन प्रीतिर्देवदेवस्य विष्णोः भविष्यतीत्येव विनिश्चितात्मा ।
प्रश्नादिकं त्वज्ञवत्सर्वदैव करिष्येहं मोहनायाधमानाम् ॥ ३८ ॥

सूर्योदये नास्ति यथा तमश्च तथाऽज्ञानं नास्ति नास्त्येव देव ।
करोम्यहं श्रवणं सर्वदैव हरिप्रीत्यर्थं निश्चयार्थं सदा हि ॥ ३९ ॥

शतजन्मगतानां तु ऋजूनां पूर्वमेव च ।
अपरोक्षाभाव एव ह्यज्ञानं समुदीरितम् ॥ ४० ॥

अपरोक्षानन्तरं तु नास्त्यज्ञानं न संशयः ।
शतजन्मसु देवेश ह्यपरोक्षेण सर्वदा ॥ ४१ ॥

पूर्णज्ञानं ममास्त्येव नात्र कार्या विचारणा ।
शतजन्मसु पूर्वं तु परोक्षेण मम प्रभो ॥ ४२ ॥

पूर्णं ज्ञानं सदाप्यस्तीत्येवमाहुर्मनीषिणः ।
शतजन्मगतायाश्च सरस्वत्या महाप्रभो ॥ ४३ ॥

नाज्ञानं चिन्तनीयं हि ब्रह्मवायुवदेव हि ।
अत्र कश्चिद्विशेषोऽस्ति ज्ञातव्यस्तत्त्ववेदिभिः ॥ ४४ ॥

अवतारेषु भारत्याः कदाचिज्ज्ञानवर्जनम् ।
सर्वदा ज्ञानरूपा सा [1]सर्वदुःखविवर्जिता ॥ ४५ ॥
दैत्यानां मोहनार्थाय ह्यंशे दुःखीव दृश्यते ।
तस्या दुःखादिकं किंचिन्नास्ति नास्त्येव सर्वथा ॥ ४६ ॥
अपरोक्षतिरोभाव [2]ईषत्काले प्रदृश्यते ।
तावन्मात्रेण चाज्ञानं तस्यां नैव हि चिन्तयेत् ॥ ४७ ॥
मूलरूपे तु नास्त्येव भारत्या ज्ञानविस्मृतिः ।
भारत्यास्तु यदा नास्ति सरस्वत्यास्तु किं पुनः ॥ ४८ ॥
अंशावतारणं नास्ति सरस्वत्याः कदाचन ।
अंशावतरणं नास्ति ममापि मधुसूदन ॥ ४९ ॥
यथैवाज्ञा ममास्त्येव हरेर्नारायणस्य च ।
वायोरंशावतारोऽस्ति यथा मूले तथैव च ॥ ५० ॥
बलज्ञानादिकं सर्वं चिन्तनीयं न संशयः ।
तथापि वायौ दृश्यन्ते बलज्ञानादिव्यक्तयः ॥ ५१ ॥
अवतारेषु वायोस्तु सम्यक् शक्त्यात्मनास्ति हि ।
अपरोक्षतिरोभावो नांशावतरणेष्वपि ॥ ५२ ॥
बलज्ञानादिकं यावन्मूलरूपे प्रदृश्यते ।
त्रेतायुगस्वरूपे च न दर्शयति तादृशम् ॥ ५३ ॥
त्रेतायुगस्थरूपे च यादृग्दर्शयति प्रभो ।
द्वापरस्थे स्वरूपे तन्न दर्शयति तादृशम् ॥ ५४ ॥
द्वापरस्थे वायुरूपे यादृग् दर्शयति प्रभुः ।
वायुः कलियुगे रूपे न दर्शयति मारुतिः ॥ ५५ ॥

---

१. सर्वदा दुःखवर्जिता । २. कलिकाले ।

तथा वायुर्दर्शयति दैत्यानां मोहनाय च ।
अवतारेषु वायोश्च ह्यन्तरं ये विदुः प्रभो ॥ ५६ ॥

तेऽन्धन्तमः प्रविशन्ति ते दैत्या न च ते सुराः ।
वायोमर्मान्तरं नास्ति हरितत्त्वविनिर्णये ॥ ५७ ॥

निन्दां कुर्वन्ति ये विष्णोर्जिह्वाच्छेदं करोम्यहम् ।
तदर्थमेव वायोश्च ह्यवतारः सदा भुवि ॥ ५८ ॥

गुणपूर्णस्य विष्णोस्तु निर्गुत्वविचिन्तनम् ।
ज्ञानानन्दादिपूर्णस्य सोऽहमित्यादिचिन्तनम् ॥ ५९ ॥

चिदानन्दात्मके देहे उत्पत्त्यादिविचिन्तनम् ।
अच्छेद्याभेद्यगात्रस्य च्छेदभेदादिचिन्तनम् ॥ ६० ॥

देव्या नित्यावियोगिन्या वियोगादिविचिन्तनम् ।
क्लेशशोकादिहीनस्य हरेः क्लेशादिचिन्तनम् ॥ ६१ ॥

व्यासरामादिरूपेषु ऋषिविप्रत्वचिन्तनम् ।
कृष्णरामादिरूपेषु ह्यन्तरस्य विचिन्तनम् ॥ ६२ ॥

रामकृष्णादिरूपेषु पारावर्यविचिन्तनम् ।
सन्तानार्थं तु कृष्णेन शिवपूजादिचिन्तनम् ॥ ६३ ॥

रामेण दुःखयुक्तेन लिङ्गस्य स्थापनं कृतम् ।
पंचधातुमये कृष्णे हरिरूपविचिन्तनम् ॥ ६४ ॥

स्वयंव्यक्तस्थले चापि चिदानन्दत्वकल्पनम् ।
पितृमातृद्विजातीनां हरिरूपत्वचिन्तनम् ॥ ६५ ॥

अस्वतन्त्रेण रुद्रेण हरेरैक्यादिचिन्तनम् ।
विष्णोः सूर्येण साकं च ह्यभेदादिविचिन्तनम् ॥ ६६ ॥

सर्वोत्तमः सूर्य एव विष्ण्वाद्यास्तस्य किङ्कराः ।
इत्यादिचिन्तनं दोषो हरिनिन्देति चोच्यते ।। ६७ ।।

स्वयंव्यक्तेषु लिंगेषु ह्यश्वत्थतुलसीषु च ।
शालग्रामं विहायैव नमनं ये प्रकुर्वते ।। ६८ ।।

ते सर्वे हरिनिन्दायामधिकारिण एव हि ।
मोक्षाधिकारिणो ये तु ह्यज्ञानात्परमेश्वरम् ।। ६९ ।।

पार्थक्यनमनं ये तु कुर्वन्ति यदि वा प्रभो ।
तर्हि तेऽपि हि लोकेषु दुःखं यान्ति न संशयः ।। ७० ।।

अतः पार्थक्यनमनं ये कुर्वन्त्येषु सर्वदा ।
ते सर्वे ह्यसुरा ज्ञेया नात्र कार्या विचारणा ।। ७१ ।।

विवाहशून्यमश्वत्थं पूजयन्ति नमन्ति च ।
द्विमासहीनां तुलसीं अप्रसूतां च गां नवाम् ।। ७२ ।।

ते सर्वे ह्यसुरा ज्ञेया नात्र कार्या विचारणा ।
ये कल्याद्या मनुष्यांतास्ते ज्ञेया ब्रह्मवद्गणाः ।। ७३ ।।

अस्मच्छतायुःपर्यन्तमेक एक कलिः स्मृतः ।
कलिसंज्ञकनामानः कलेरन्याश्च सन्ति हि ।। ७४ ।।

एकस्मिन् मद्दिने ब्रह्मन् ते गच्छन्ति तमोऽन्तिकम् ।
तत्र स्थित्वा कलेर्मार्गं प्रतीक्षन्ते न संशयः ।। ७५ ।।

साधकैर्विष्णुकार्याणां वायुदासैः प्रपीडिताः ।
शतवर्षानन्तरं च सर्वेषां कलिना सह ।। ७६ ।।

वायोर्गदाप्रहारेण लिंगभंगो भविष्यति ।
तमोऽन्धं प्रविशन्त्येव तारतम्येन सर्वशः ।। ७७ ।।

तमस्यन्धेपि संसारे नात्र कार्या विचारणा ।
सर्वेषामुत्तमोऽन्ते यः कलिरेव न संशयः ।। ७८ ।।

दूषणे विष्णुभक्तानां तत्समो नास्ति सर्वदा ।
संसारे चान्धतमसि सर्वत्र हरिदूषकः ॥ ७९ ॥

मिथ्याज्ञाने ज्ञानबुद्धिर्दुःखे च सुखबुद्धिमान् ।
तस्मात्कलिसमो लोके शिवभक्तो न कुत्रचित् ॥ ८० ॥

दुर्योधनः स एवोक्तो दुःखानन्त्यस्वरूपवान् ।
तस्माच्छतगुणांशोना कलिभार्या तु सर्वदा ॥ ८१ ॥

अलक्ष्मीरिति विख्याता सा लोके मन्थरा स्मृता ।
तस्माद्दशगुणांशोनो विप्रचित्तिस्तु सर्वदा ॥ ८२ ॥

जरासन्धः स एवोक्तः कालनेमिस्ततः परम् ।
तस्माच्छतगुणांशोनः सतु कंसेति विश्रुतः ॥ ८३ ॥

तस्मात्पंचगुणैर्हीनौ मधुकैटभसंज्ञकौ ।
तावेव हंसडिभिकौ ज्ञेयौ तौ च जनार्दन ॥ ८४ ॥

विप्रचित्तिसमो ज्ञेयो भौमो वै भूतले स्मृतः ।
तस्मादष्टगुणैरुच्चो हिरण्यकशिपुः स्मृतः ॥ ८५ ॥

तस्माच्च त्रिगुणैर्हीनो हिरण्याक्षो महासुरः ।
मणिमांस्तत्समो ज्ञेयः किंचिदूनो बकः स्मृतः ॥ ८६ ॥

तस्माद्विंशद्गुणैर्हीनः तारकाख्यो महासुरः ।
तस्मात् षड्गुणतो हीनः शम्बरो लोककण्टकः ॥ ८७ ॥

शम्बरस्य समो ज्ञेयः शाल्वो दैत्येषु चाधमः ।
शम्बरात्तु द्विगुणतो हिडिम्बो न्यून उच्यते ॥ ८८ ॥

बाणस्ततोऽधमो ज्ञेयः सतु कीचकनामकः ।
द्वापराख्यो महादैत्यो बाणासुरसमः स्मृतः ॥ ८९ ॥

तस्माद्दशगुणैर्हीनो नमुचिर्दैत्यसत्तमः ।
नमुचेस्तु समौ ज्ञेयौ पाक इल्वल इत्युभौ ॥ ९० ॥

तस्माच्चतुर्गुणैर्हीनो वातापिर्दानवाधमः ।
तस्मात्सार्धगुणैर्हीनो धेनुको नाम दैत्यराट् ॥ ९१ ॥
धेनुकादर्धगुणतः केशी दैत्यस्तु चावरः ।
केशिदैत्यसमो ज्ञेयः तृणावर्तो महासुरः ॥ ९२ ॥
तस्माद्दशगुणैर्हीनो लवणो दैत्यसत्तमः ।
तस्मात्पंचगुणैर्हीनो धुन्धुमारो महासुरः ॥ ९३ ॥
वेनः स एव विज्ञेयः पूर्वजन्मनि सत्तम ।
तस्मादेकगुणैर्हीनौ कुम्भाण्डककुपर्णकौ ॥ ९४ ॥
दुःशासनस्तु विज्ञेयो जरासन्धसमः प्रभो ।
कंसेन तुल्यो विज्ञेयो विकर्णो दैत्यसत्तमः ॥ ९५ ॥
कूपकर्णाच्छतगुणैर्हीनो रुक्मस्तु विश्रुतः ।
तस्माच्छतगुणैर्हीनः शतधन्वा महासुरः ॥ ९६ ॥
समानस्तस्य विज्ञेयः किर्मीरो दैत्यसत्तमः ।
कालकेयस्तु विज्ञेयः सदा वेनसमो मतः ॥ ९७ ॥
अधमानां तु देवानामुत्तमैः साम्यमुच्यते ।
तत्रावेशाच्च देवानां विज्ञेयं नात्र संशयः ॥ ९८ ॥
तस्माच्छतगुणैर्हीनश्चित्तमान्यसुरो महान् ।
शरीरस्याभिमानी तु तस्माच्छतगुणैर्वरः ॥ ९९ ॥
तस्माच्छतगुणैर्हीनो हस्तमान्यसुरो महान् ।
तस्माच्छतगुणैहीनः पादमान्यसुरो महान् ॥ १०० ॥
श्रोत्रेन्द्रियाभिमानी तु तस्माच्छतगुणावरः ।
चक्षुरिन्द्रियमानी तु तस्माच्छतगुणावरः ॥ १०१ ॥
तस्माच्छतगुणैहीह्नः स्पर्शमान्यसुरो महान् ।
तस्माच्छतगुणैर्हीनो वाङ्मानी ह्यसुरो महान् ॥ १०२ ॥

तस्माच्छतगुणैर्हीनः शिश्नमान्यसुरो महान् ।
तस्माच्छतगुणैर्हीनः कर्ममान्यसुरो महान् ॥ १०३ ॥

कल्याद्यैः प्रेरिताः सर्वे रुद्राद्या अधिकारिणः ।
कदाचित्सुविरुद्धं च कुर्वन्ति तव सत्तम ॥ १०४ ॥

कदाप्यहं च वायुश्च विरुद्धं नाचरेव भोः ।
मूलेष्वांशावतारेषु रुद्रादीनां महाप्रभो ॥ १०५ ॥

बुद्धिर्विनश्यते यस्मात्तस्माच्छिन्ना हि तेखिलाः ।
न हीयते च मद्बुद्धिः तस्मादच्छिन्नसंज्ञकः ॥ १०६ ॥

एतादृशोऽप्यहं देव न च शक्तः स्तुतौ तव ।
मह्यमच्छिन्नभक्ताय दयां कुरु महाप्रभो ॥ १०७ ॥

**इति श्रीगरूडपुराणे ब्रह्मकाण्डे ब्रह्मस्तुतिवर्णनं**
**नाम द्वादशोऽध्यायः ॥ १२ ॥**

## ॥ त्रयोदशोऽध्यायः ॥

### कृष्ण उवाच

इति स्तुतः स भगवान् स्वपुत्रेण दयानिधिः ।
मेघगम्भीरया वाचा प्रोवाच मधुसूदनः ॥ १ ॥

सृज ब्रह्मन्निमान् देवान् मत्प्रसादात्क्रमेण च ।
तथा दैत्यान् क्रमेणैव सृज सर्वं महाप्रभो ॥ २ ॥

नास्ति प्रयोजनं तेन तव मत्प्रीतये सृज ।
एवमुक्तस्तु हरिणा ब्रह्मा स्तुत्वा हरिं परम् ॥ ३ ॥

सृष्टिं कर्तुं मनो दध्रे प्रीणयन्नेव माधवम् ।
महत्तत्वात्मको ब्रह्मा वायुं जीवाभिमानिनम् ॥ ४ ॥

आदौ ससर्ज गरुड पुरुषात्मा स एव च ।
ततो दक्षिणहस्तात्तु ब्रह्माणीं भारतीं तथा ॥ ५ ॥

असृजत्ते महाभागे अव्यक्तस्य नियामिके ।
वामहस्तात्समुत्पन्नो महत्तत्वात्मकोऽनिलः ॥ ६ ॥

ब्रह्मणो दक्षिणाद्धस्तादहंकारात्मको हरः ।
आदौ शेषस्ततो जज्ञे गरुडस्तदनन्तरम् ॥ ७ ॥

तदनन्तरजो रुद्रः स एवं सृष्टवान् प्रभुः ।
स्वोत्पत्त्यनन्तरं ब्रह्मा दशवर्षो महाप्रभुः ॥ ८ ॥

वायुमुत्पादयामास वत्सरानन्तरं प्रभुः ।
गायत्रीं जनयामास वायोरुत्पत्त्यनन्तरम् ॥ ९ ॥

संवत्सरानन्तरं तु भारतीमसृजत्प्रभुः ।
भारत्यनन्तरं शेषो दिव्यसाहस्रवत्सरात् ॥ १० ॥

अनन्तरं सम्बभूव गरुडात्तु ततः परम् ।
दिव्यसाह्ववषात्तु तथा रुद्रं च सृष्टवान् ॥ ११ ॥

शेषस्यानन्तरं देवीं वारुणीं च महाप्रभुः ।
दशवर्षानन्तरं तु ह्यसृजत्कमलासनः ॥ १२ ॥

गरुडानन्तरं देवीं सौपर्णीमसृजत्प्रभुः ।
दशवर्षानन्तरं च पार्वतीं च तथैव सः ॥ १३ ॥

पार्वत्यनन्तरं चेन्द्रं मनस्तत्त्वनियामकम् ।
दशवर्षानन्तरं तु ह्यसृजद्वायुमूलतः ॥ १४ ॥

अभिमानी दक्षिणस्य बाहोश्च परमेष्ठिनः ।
दशवर्षानन्तरं तु शचीं तामसृजत्प्रभुः ॥ १५ ॥

इन्द्रस्यानन्तरं कामं त्रिंशद्वर्षादनन्तरम् ।
असृजद्वामबाहोश्च मनस्तत्त्वाभिमानिनम् ॥ १६ ॥

तदनन्तरजां देवीं दशवर्षादनन्तरम् ।
रतिं स जनयामास कामभार्यां महाप्रभुः ॥ १७ ॥

कामस्याप्यभिमानी तु स एव परिकीर्तितः ।
ब्रह्माऽहंकारिकं प्राणं कामोत्पत्तेरनन्तरम् ॥ १८ ॥

दशवर्षानन्तरं तु निर्ममे नासिकं ततः ।
तस्य भार्यां नासिकस्य पंचवर्षादनन्तरम् ॥ १९ ॥

निर्ममे नासिकां वामां ब्रह्मा लोकपितामहः ।
अहंकारादनु ब्रह्मा स्वज्ञानाच्च बृहस्पतिम् ॥ २० ॥

निर्ममे वर्षपूगाच्च पंचविंशादनन्तरम् ।
पंचवषानन्तरं च तारां भार्यां विनिर्ममे ॥ २१ ॥

गुरोरनन्तरं ब्रह्मा पंचविंशादनन्तरम् ।
स्वायंभुवं मनुं चैव निर्ममे मनसा विभुः ॥ २२ ॥

पंचवर्षानन्तरं तु शतरूपां विनिर्ममे ।
शतरूपानन्तरं तु विंशद्वर्षादनन्तरम् ॥ २३ ॥

दक्षः शिश्नात्मको जज्ञे दक्षिणांगुष्ठतः प्रभो ।
पंचवर्षानन्तरं तु वामांगुष्ठाच्चतुर्मुखः ॥ २४ ॥

प्रसूतिमसृजद्ब्रह्मा सृष्ट्यर्थं परमादरात् ।
दक्षस्यानन्तरं ब्रह्मा पंचविंशादनन्तरम् ॥ २५ ॥

निर्ममे ह्यनिरुद्धं च मध्यमांगुलिपर्वतः ।
पंचवर्षानन्तरं तु ससर्ज भगवानजः ॥ २६ ॥

विराजसंज्ञकां भार्यां मध्यमांगुलिपर्वतः ।
अनिरुद्धानन्तरं तु शतवर्षादनन्तरम् ॥ २७ ॥

निर्ममे प्रवहं वायुं कनिष्ठांगुलिपर्वतः ।
दशवर्षानन्तरं तु प्रावहीं निर्ममे प्रभुः ॥ २८ ॥

कनिष्ठांगुलिपर्वाच्च वामदेवं न संशयः ।
प्रवहानन्तरं ब्रह्मा शतवर्षादनन्तरम् ॥ २९ ॥

यमं विनिर्ममे पृष्ठादष्टवर्षादनन्तरम् ।
तद्भार्यां श्यामलां देवीं तस्मादेव महाप्रभुः ॥ ३० ॥

यमस्यानन्तरं चन्द्रं त्रिंशद्वर्षादनन्तरम् ।
असृजद्दक्षिणाच्छ्रोत्रात् श्रोत्रतत्वनियामकम् ॥ ३१ ॥

नववर्षनन्तरं तु रोहिणीमसृजत्प्रभुः ।
वामश्रोत्राच्च गरुड वामश्रोत्राभिमानिनम् ॥ ३२ ॥

चन्द्रस्यानन्तरं सूर्यं विंशद्वर्षादनन्तरम् ।
सम्यग्विनिर्ममे ब्रह्मा दक्षिणाक्ष्णोश्च देवताम् ॥ ३३ ॥

वामाक्ष्णो निर्ममे संज्ञां षड्वर्षानन्तरं प्रभुः ।
सूर्यस्यानन्तरं ब्रह्मा शतवर्षादनन्तरम् ॥ ३४ ॥

रसनेन्द्रियाच्च वरुणं निर्ममे तस्य मानिनम् ।
विंशद्वर्षानन्तरं तु तस्मादेवेन्द्रियात्प्रभुः ॥ ३५ ॥

गङ्गां विनिर्ममे ब्रह्मा रसनेन्द्रियदेवताम् ।
वरुणस्यानन्तरं तु दशवर्षादनन्तरम् ॥ ३६ ॥

उत्संगान्निर्ममे ब्रह्मा नारदं भगवत्प्रियम् ।
नारदस्यानन्तरं तु षष्ठिवर्षादनन्तरम् ॥ ३७ ॥

अग्निं विनिर्ममे ब्रह्मा स्ववागिन्द्रियतः प्रभुः ।
अतो वागभिमानी च पंचवर्षादनन्तरम् ॥ ३८ ॥

स्वाहां विनिर्ममे ब्रह्मा तामाहुर्मन्त्रदेवताम् ।
अग्नेरनन्तरं वीन्द्र भृगुं ब्रह्मर्षिसत्तमम् ॥ ३९ ॥

दशवर्षानन्तरं तु भ्रुवोर्मध्याद्विनिर्ममे ।
संवत्सरानन्तरं तु भृगुभार्यां विनिर्ममे ॥ ४० ॥

भृगोरनन्तरं ब्रह्मा शतवर्षादनन्तरम् ।
कश्यपं जनयामास मनसा च स्वयं प्रभुः ॥ ४१ ॥

संवत्सरानन्तरं तु ह्यदितिं निर्ममे प्रभुः ।
कश्यपानन्तरं चात्रिं दशवर्षादनन्तरम् ।

अत्रेरनन्तरं ब्रह्मा दशवर्षादनन्तरम् ।
अजीजनद्भरद्वाजं वसिष्ठं तदनन्तरम् ॥ ४३ ॥

दशवर्षानन्तरं तु तेषां भार्याः क्रमेण तु ।
संवत्सरानन्तरेण चासृजत्कमलासनः ॥ ४४ ॥

वसिष्ठस्यानन्तरं तु गौतमं ह्यसृजत्प्रभुः ।
दशवर्षानन्तरेण जमदग्निं ततोऽसृजत् ॥ ४५ ॥

दशवर्षानन्तरेण मनुर्वैवस्वतोऽभवत् ।
मनोरनन्तरं जज्ञे शतवर्षादनन्तरम् ॥ ४६ ॥

विष्वक्सेनो महाभागो वायुपुत्रो महाबलः ।
तस्माच्चतुर्दशे वर्षे गणपो ह्यभवद्विभोः ॥ ४७ ॥

तदनन्तरजो वीन्द्र चाष्टवर्षादनन्तरम् ।
धनपो ह्यभवत्तत्र तद्भार्या वत्सरे परे ॥ ४८ ॥

विष्वक्सेनानन्तरं तु दशवर्षादनन्तरम् ।
जयादीन् भगवद्भक्तान् सृष्टवान् कमलासनः ॥ ४९ ॥

जयाद्यनन्तरं ब्रह्मा बल्यादीन् कर्मदेवताः ।
शतवर्षानन्तरं तु सृष्टवान् [1]शिववाहनम् ॥ ५० ॥

कर्मदेवानन्तरं तु त्रिंशद्वर्षादनन्तरम् ।
पर्जन्यमसृजद्ब्रह्मा मन्त्रतत्त्वाभिमानिनम् ॥ ५१ ॥

पर्जन्यानन्तरं ब्रह्मा दशवर्षादनन्तरम् ।
पुष्करं जनयामास कर्मतत्त्वाभिमानिनम् ॥ ५२ ॥

एवं विनिर्ममे ब्रह्मा मत्प्रसादात्खगेश्वर ।
एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथंचन ॥ ५३ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे देवोत्पत्तिनिरूपणं**
**नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

---

पा-१.शिखिवाहनः ।

## ॥ चतुर्दशोऽध्यायः ॥

### श्रीगरुड उवाच

अवतारान् हरे ब्रूहि तथा लक्ष्म्या दिवौकसाम् ।
गुणानामन्तरं ब्रूहि शिष्यस्य मम सुव्रत ॥ १ ॥

### श्रीकृष्ण उवाच

यो मूलरूपी भगवाननन्तो ब्रह्मादिभिः पूर्णगुणः स्वतन्त्रः
पुरातनः पूर्णतनुर्महात्मा न तादृशो नास्ति कदाऽपि वीन्द्र ॥ २ ॥
पादश्च पूर्णः पादतलं च पूर्णं नखाश्च पूर्णाः कटिकण्ठौ च पूर्णौ ।
ऊरू च पूर्णौ उदरं च पूर्णं त्वचश्च पूर्णाः पूर्णवक्षो हरेश्च ॥ ३ ॥
स्कन्धाश्च पूर्णाः सकलाश्च बाहवः पूर्णाः केशाः श्मश्रुदन्ताश्च पूर्णाः ।
लोमानि पूर्णानि तथैव रोमकूपाश्च पूर्णास्तु तथैव शिश्नः ॥ ४ ॥
अण्डाश्च पूर्णो ह्यण्डरोमाणि कक्षाश्चक्षुश्च श्रोत्रे सर्व एते च पूर्णाः ।
किं वर्णये मूलरूपं हरेश्च यावद्बलं पूर्णसमग्रदेहे ॥ ५ ॥
तावद्बलं ह्येकरोमादिकेषु संचिन्तनीयं हि यतः स देवः ।
स एव पूर्णः स तु सर्वस्य कर्ता स एव कर्ता सर्वसारांशभोक्ता ॥ ६ ॥
असारांशं नैव भोक्ता हरिस्तु सारान्वक्ष्ये श्रुणु पक्षीन्द्र सम्यक् ।
द्राक्षेक्षुसारं नारिकेलस्य सारं चूतस्य सारं पनसस्यापि सारम् ॥ ७ ॥
नारंगसारं क्रमुकस्यापि सारं खर्जूरसारं कदलीफलस्य ।
नारायणीबीजरूपस्य सारं गृह्णाति नित्यं भक्तवर्गे दयालुः ॥ ८ ॥
ताम्बूलसारं खदिरस्य सारं पुष्पस्य सारं चन्दनस्यापि सारम् ।
कर्पूरसारं मृगनाभेश्च सारं प्रियंगुसारं तण्डुलस्यापि सारम् ॥ ९ ॥
गोधूमसारं चणकस्य सारं मुद्गस्य सारं च तथा यवस्य ।
माषस्य सारं तुवरेश्च सारं लंकाहरिद्रस्य च सत्प्रियोक्ताः ॥ १० ॥

शुद्धं तथा व्रीहिनीवारसारं श्यामाकसारं शुद्धधान्यस्य सारम् ।
तथाऽनिषिद्धान्सर्वशाकस्य सारान्तथाऽनिषिद्धान् लवणस्याऽपि सारान् ॥ ११ ॥

गृह्णाति विष्णुः परमादरेण ह्यन्नस्थसारं भक्ष्यभोज्यस्य सारम् ।
सूपान्नसारं परमान्नस्य सारं दुग्धस्य सारं दधितक्रस्य सारम् ॥ १२ ॥

घृतस्य सारं रामठस्यापि सारं गृह्णाति विष्णुः सर्षपस्यापि सारम् ।
मरीचिसारं जीरकस्यापि सारं तथा हरिर्घृतपक्वस्य सारम् ॥ १३ ॥

तैलेषु पक्वस्य च भर्जितस्य गुडस्य सारं नवनीतस्य सारम् ।
लवंगसारं शर्करायाश्च सारं इत्यादिसारान् वासुदेवस्तु भुंक्ते ॥ १४ ॥

तस्याज्ञया वायुदेवोऽपि नित्यं तच्छेषसारान् भुंक्त एवेति सत्यम् ।
वक्ष्ये ह्यसारान् श्रुणु शिष्यवर्य एते ह्यसारा यदि विष्णोर्महात्मन् ॥ १५ ॥

समर्पितं न भवेत्सारभूतं विष्णुर्न गृह्णाति तथैव वायुः ।
ते वै ह्यभक्ता वायुदेवस्य नित्यं किं वक्तव्यं विष्णुभक्ता हि लोके ॥ १६ ॥

वक्ष्ये विशेषं वैश्वदेवे खगेन्द्र श्रुत्वा गोप्यं नो वदान्यत्र विद्वान् ।
सूर्यादीनां येऽवदानं च दद्युः विना वायोरन्तरस्थं हरिं च ॥ १७ ॥

ते वै सदाऽसारभोक्तार एव ज्ञेयास्त्वतो विष्णुरेको महात्मा ।
सारांशभोक्ता न तु सर्वस्य भोक्ता भुक्ते हि सर्वं ह्यविरुद्धशक्तिः ॥ १८ ॥

वक्ष्ये ह्यसारान् पुनरन्यान् खगेन्द्र श्रुणुष्व गुह्यं परमादरेण ।
द्रक्षादयः सर्व एव त्वसाराः कालादिदुष्टाः भावदुष्टा पदार्थाः ॥ १९ ॥

अथ पक्वानन्तरं तु तथा दिनचतुष्टये
असारा कदली ज्ञेया तथा जम्बूफलं स्मृतम् ॥ २० ॥

मासस्यानन्तरं वीन्द्र त्वसारं पनसं स्मृतम् ।
षण्मासानन्तरं वीन्द्र खर्जूरं पूतिवत्स्मृतम् ॥ २१ ॥

आर्द्रं पूतं नारिकेलं स्फोटनानन्तरं प्रभो ।
अहोरात्रानन्तरं तु ह्यसारं परिकीर्तितम् ॥ २२ ॥

शुष्कभूतं नारिकेलं खर्जूरं तु यथा तथा ।
पक्षस्यानन्तरं तच्च ह्यसारं परिकीर्तितम् ॥ २३ ॥

वर्षस्यानन्तरं वीन्द्र पूगीफलमुदाहृतम् ।
घटिकानन्तरं वीन्द्र ताम्बूलं परिकीर्तितम् ॥ २४ ॥

यामस्यानन्तरं चान्नं सूपान्नं पायसं तथा ।
भक्ष्यं च कथितं वीन्द्र ह्यसारं परिकीर्तितम् ॥ २५ ॥

त्रियामानन्तरं वीन्द्र तैलपक्वं तथा स्मृतम् ।
चतुर्यामानन्तरं च त्वसारं घृतपाचितम् ॥ २६ ॥

त्रियामानन्तरं शाका निःसाराः परिकीर्तिताः ।
रुचिपक्वं चारुफलं उर्वारुकफलं तथा ॥ २७ ॥

पक्षस्यानन्तरं वीन्द्र निःसारं परिकीर्तितम् ।
जम्बीरं श्रृंगबेरं च धात्री चूतं कचूलकम् ॥ २८ ॥

वत्सरानन्तरं वीन्द्र निःसारं परिकीर्तितम् ।
पर्पटः पक्षमात्रेण निःसारः परिकीर्तितः ॥ २९ ॥

तुलसी सर्वदा सारं एकादश्यामपि द्विज ।
आर्द्रा वाप्यथवा शुष्का सर्वदा सारमुच्यते ॥ ३० ॥

एकादश्यां तु तलसी सारा ग्राह्या मनीषिभिः ।
त्वचा नासिकया वापि नतु जिह्वेन्द्रियेण च ॥ ३१ ॥

एकादश्यां हरेरन्नं निःसारं परिकीर्तितम् ।
एकादश्यां हरेस्तीर्थं मनुष्याणां खगेश्वर ॥ ३२ ॥

एकवारे च सारं स्याद्द्विवारेऽसारमुच्यते ।
एकादश्यां महाभाग तीर्थं गन्धादिमिश्रितम् ॥ ३३ ॥
असारमिति संप्रोक्तं तथा स्वादूदमिश्रितम् ।
एकादश्यां हरेः सारं क्षीरं सर्पिमर्धूदकम् ॥ ३४ ॥
निःसारं मनुजेन्द्राणामिति वेदविदां मतम् ।
आषाढमासे गरुड शाको निःसार उच्यते ॥ ३५ ॥
मासि भाद्रपदे वीन्द्र ह्यसारं दधि चोच्यते ।
क्षीरं तु ह्याश्विने मासे नि-सारं परिकीर्तितम् ॥ ३६ ॥
द्विदलं कार्तिके मासे निःसारं परिकीर्तितम् ।
तुलसीमणिहीनं च गात्रं निःसारमुच्यते ॥ ३७ ॥
धात्रीविरहितं पाकं निःसारं परिकीर्तितम् ।
ऊर्ध्वपुण्ड्रगदाहीना [१]नारी निःसारमुच्यते ॥ ३८ ॥
हरिभक्तिविहीना ये निःसाराः परिकीर्तिताः ।
हरिनामविहीनं तु मुखं निःसारमुच्यते ॥ ३९ ॥
हरिनैवेद्यहीनस्तु पाको निःसार उच्यते ।
त्रिदिनैश्चातसीपुष्पं निःसारं परिकीर्तितम् ॥ ४० ॥
प्रहरं मल्लिका सारं जाती तु प्रहरार्धरकम् ।
त्रियामं शतपत्रं तु करवीरमहर्निशम् ॥ ४१ ॥
घटिकावधि सारं स्यात्पारिजातं खगेश्वर ।
त्रिवर्षं केसरं पुष्पं सारमित्युच्यते बुधैः ॥ ४२ ॥
कस्तूरी दशवर्षं तु कर्पूरं वर्षमात्रकम् ।
ससारमिति संप्रोक्तं चन्दनं सर्वदा स्मृतम् ॥ ४३ ॥

---

१. नार्यसारेति कीर्तिता ।

सदा निःसारभूताश्च वक्ष्ये श्रुणु खगेश्वर ।
तुषामद्यं आरनालं पुण्यकं भिःसटा तथा ॥ ४४ ॥

उपोतकी अलाबूश्च घृतकोशातकी तथा ।
वृन्ताकं शिग्रुशाकं च बिल्वमौदुम्बरं तथा ॥ ४५ ॥

पलाण्डुर्लशुनं गृञ्जं कलंजं च तथा द्विज ।
एतत्सर्वत्र काले च निःसारं परिकीर्तितम् ॥ ४६ ॥

एकादश्यां वैश्वदेवं श्राद्धं तर्पणमेव च ।
मन्त्रेण प्रेतदहनमसारं परिकीर्तितम् ॥ ४७ ॥

हरिर्नारायणो देवो एतांश्च ह्यशुभान् रसान् ।
न गृह्णाति न गृह्णाति न गृह्णाति स्वयं प्रभुः ॥ ४८ ॥

तथापि सर्वं जानाति जीवानां पापकर्मणाम् ।
आस्वादनं कारयति स्वयं नास्वादते हरिः ॥ ४९ ॥

असारभोजनं चैवं जीवानां कर्मजं फलम् ।
अमुख्यभोजिनो जीवाः कल्याद्या मुख्यभोजिनः ॥ ५० ॥

शुभानि च पिबेद्विष्णुरशुभं नो पिबेद्विभुः ।
को वदेत्तस्य चेष्टां तु पूर्णानन्दो हरिः स्वयम् ॥ ५१ ॥

न तेन सदृशः कोऽपि देशे काले च विद्यते ।
तस्यावतारान् वक्ष्येहं श्रुणु पक्षीन्द्रसत्तम ॥ ५२ ॥

**इति श्रीगरूडपुराणे ब्रह्मकाण्डे सारासारवस्तुविवेको नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

## ॥ पंचदशोऽध्यायः ॥

आद्यावतारे पुरुषो हरिश्च तमःपानं कर्तुमीशोऽव्ययात्मा ।
प्रादुर्बभूवाखिलसद्गुणात्मा स एव विष्णुः स च बीजभूतः ॥ १ ॥
यो बीजभूतः पुरुषाख्यविष्णुः स एवाभूद्वासुदेवो महात्मा ।
सृष्टिं कर्तुं पुरुषाख्यं विरिंचं मायाख्यायां मूलरूपी यथाऽस ॥ २ ॥
यो वासुदेवस्तु स एव जातः संकर्षणाख्योऽखिलसद्गुणात्मा ।
सृष्टिं कर्तुं सूत्रभूतस्य वायोर्जयाख्यायां पूर्णसंविद्बलात्मा ॥ ३ ॥
स एव संकर्षणनामधेयः प्रद्युम्ननामा च स एव विश्रुतः ।
सरस्वतीभारतीसर्जनार्थं स एव देव्या मूलरूपी बभूव ॥ ४ ॥
सृष्ट्वा युक्तं षोडशभिः कलाभिर्महत्तत्वं सूक्ष्मरूपं स एव ।
साहंकारं क्रीडयामास देवः श्रुणु त्वं वै षोडषाख्याः कलाश्च ॥ ५ ॥
भूतानि पंच पंचकर्मेन्द्रियाणि ज्ञानेन्द्रियाणीह तथा मनश्च ।
ततो बभूव ह्यनिरुद्धसंज्ञको जीवांश्च संगृह्य सुपूर्णशक्तिः ॥ ६ ॥
शान्त्यां विरिंच्यादिसमस्तदेवान् स्थूलेन देहेन ससर्ज नाथः ।
तथा स विष्णुः पुरुषाभिधस्तु सनत्कुमारत्वमवाप वीन्द्र ॥ ७ ॥
अनन्यसाध्यं ब्रह्मचर्यं च कर्तुं देहेन्द्रियाणां शोषणार्थं सदैव ।
सनन्दनादौ पठितः कुमारः तस्मान्नान्यो नात्र विचार्यमस्ति ॥ ८ ॥
स एव विष्णुः सूकरत्वं ह्यवाप क्षोणीमुद्धर्तुं दैत्यवर्यं निहन्तुम् ।
हिरण्याक्षं सज्जनानां खगेन्द्र तथा भूमेः स्थापनार्थं च देवः ॥ ९ ॥
ततो हरिर्महिदासत्वमाप ऋषेर्भार्यायां इतरायां स्वयम्भूः ।
तत्रावतारे पंचरात्रं समग्रमुपादेष्टुं नारदाय स्वतन्त्रः ॥ १० ॥
स एव विष्णुः समभूद्धदर्यां नारायणाह्वः शामलायां यमाच्च ।
तपस्तप्तुं शिक्षयितुं त्वृषीणां तिरस्कर्तुं ह्यप्सरसां सहस्रम् ॥ ११ ॥

ततो हरिः कपिलत्वं ह्यवाप्य तिरोहितान् कालबलेन *तत्त्वान् ।
चतुर्विंशत्संख्यकानुद्धरिष्यन् चरिष्यन् वै आसुरये प्रवक्तुम् ॥ १२ ॥

स एव दत्तः समभूद्रमेशोऽनसूयायामत्रिऋषेः सकाशात् ।
आन्विक्षिकीं नाम सुतर्कविद्यां अलर्कनाम्ने प्राददत्तां महात्मा ॥ १३ ॥

स एव यज्ञोऽप्यभवद्रुचेश्च ह्याकूत्यां यः सच्चिदानन्दरूपः ।
स्वायम्भुवं यस्तु मन्वन्तरं च देवैः साकं पालयामास वीन्द्र ॥ १४ ॥

य एव विष्णुः स उरुक्रमोऽभूदाग्नीध्रपुत्रान्मेरुदेव्यां च नाभेः।
विद्यारतानां ज्ञानिनां सर्वदैव यत्याश्रमं दर्शयितुं च वीन्द्र ॥ १५ ॥

ततो हरिर्जगृहे मत्स्यरूपं मन्वन्तरे चाक्षुषे नाशकाले ।
नाव्यां समारोप्य महीं चरन्तं पातुं मनुं श्राद्धदेवं लयोदे ॥ १६ ॥

ततो हरिर्जगृहे कूर्मरूपं सुरासुराणामुदधिं विमथ्नताम् ।
पृष्ठे धर्तुं मन्दरं पर्वतं च ब्रह्मांडं वा धर्तुमीशो महात्मा ॥ १७ ॥

ततो हरिः प्रादुरभून्महात्मा धन्वन्तरिर्नाम हरिन्मणिद्युतिः ।
अपथ्यदोषान्परिहर्तुमेव हस्ते गृहीत्वा पूर्णकुम्भं सुधाभिः ॥ १८ ॥

ततो हरिर्जगृहे स्त्रीवपुश्च यन्मोहिनीति प्रवदन्ति लोके ।
उद्धृत्तानां दितिजानां महात्मा सम्यक्त्वेषां वंचयितुं हरिः स्वयम् ॥ १९ ॥

ततो हरिः प्रादुरभून्महात्मा नृसिंहनामा भगवाननन्तः ।
दैत्यं हिरण्यकशिपुं स्व ऊरुदेशे संस्थाप्य तं करजैः सन्ददार ॥ २० ॥

ततो हरिर्भगवान्वामनोऽभूददित्यां वै कश्यपाद्देवदेवः ।
इन्द्रायेमं दातुकामः स्वलोकं तदर्थं वै याचयितुं बलिं च ॥ २१ ॥

ततो हरिर्जमदग्नेः सुतोऽभूल्लोके सर्वे भार्गवं यं वदन्ति ।
ब्रह्मद्विषां क्षत्रियाणां च वीन्द्र भूमिं निःक्षत्रां कर्तुकामो महेशः ॥ २२ ॥

---

*तत्त्वानिति आर्षप्रयोगः ।

ततोऽभवद्ध्यासरूपी स विष्णुः चतुर्वारं दाशरथेश्च पूर्वम् ।
पराशरात्सत्यवत्यां बभूव पैलादिभिर्वेदभागांश्च कर्तुम् ॥ २३ ॥

ततो हरी रघुवंशेऽवतीर्णः कौसल्यायां राघवः सूर्यवंशे ।
समुद्रादेर्निग्रहं कर्तुमीशो हन्तुं भूम्यां रावणादींश्च वीन्द्र ॥ २४ ॥

ततो हरिर्व्यासरूपी बभूव ह्यष्टाविंशे द्वापरे ज्ञानरूपी
पराशरात्सत्यवत्यां महात्मा स्वयं वेदान् संविभक्तुं च देवः ॥ २५ ॥

ततो हरिः कृष्णरूपी बभूव देवक्यां वै वसुदेवात्स विष्णुः ।
कंसादीन् वै नितरां हन्तुकामः सम्यक्पातुं पाण्डवांश्चापि वीन्द्र ॥ २६ ॥

ततः कलौ संप्रवृत्ते हरिस्तु सम्मोहनार्थं चासुराणां खगेन्द्र ।
नाम्ना बुद्धो कीकटेषु प्रजातो वेदप्रामाण्यं निराकर्तुमेव ॥ २७ ॥

ततो हरिः कल्किसंज्ञश्च वीन्द्र ह्युत्पत्स्यते युगयोर्मध्यसंधौ ।
दस्युप्रायान् भमिपान्वै निहन्तुं नाम्ना हरिर्विष्णुगुप्तस्य गेहे ॥ २८ ॥

केशवाद्याश्च कृष्णान्ताः शतं नारायणादयः ।
विश्वादयः सहस्रं च पराद्या अमिताः स्मृताः ॥ २९ ॥

अवतारा ह्यसंख्येया विष्णोर्नारायणस्य च ।
स्वयं नारायणास्त्वेते नाणुमात्रविमेदिनः ॥ ३० ॥

बलतो रूपतश्चापि गुणतश्च कथंचन ।
अनन्तानन्तगुणतः पूर्णो विष्णुर्न चान्यथा ॥ ३१ ॥

**इति श्रीगरूडपुराणे ब्रह्मकाण्डे विष्णोरवतारनिरूपणं**

**नाम पंचदशोऽध्यायः ॥ १५ ॥**

## ॥ षोडशोऽध्यायः ॥

### कृष्ण उवाच

महालक्ष्म्याः स्वरूपं च ह्यवतारान् खगेश्वर ।
श्रुणु सम्यङ् महाभाग सम्यग् ज्ञातुं च निर्णयम् ॥ १ ॥
ईशादन्यत्र जगति ह्यनालोचन एव तु ।
विषयीकरोति यस्यास्तु ज्ञानं लक्ष्म्याः प्रकीर्तितम् ॥ २ ॥
नित्यावियोगिनी देवी हरिपादैकसंश्रया ।
नित्यमुक्ता नित्यबुद्धा महालक्ष्मीः प्रकीर्तिता ॥ ३ ॥
मूलरूपस्य तु हरेर्भार्या वै संप्रकीर्तिता ।
पुंसो हि भार्या प्रकृतिः प्रकृतेश्चाभिमानिनी ॥ ४ ॥
सृष्टिं कर्तुं गुणान्वीन्द्र पुरुषेण महाप्रभो ।
तमः पानं तथा कर्तु प्रकृत्याख्या तदाऽभवत् ॥ ५ ॥
वासुदेवस्य भार्या तु मायानाम्नी प्रकीर्तिता ।
संकर्षणस्य भार्या तु जयेति परिकीर्तिता ॥ ६ ॥
अनिरुद्धस्य भार्या तु शान्तीनाम्नी प्रकीर्तिता ।
कृतिः प्रद्युम्नभार्या च सृष्टिं कर्तुं बभूव ह ॥ ७ ॥
विष्णुपत्नी कीर्तिता च श्रीदेवी सत्वमानिनी ।
तमोभिमानिनी दुर्गा कन्यकेति प्रकीर्तिता ॥ ८ ॥
कृष्णावतारे कन्यैव नन्दपुत्रानुजा हि सा ।
रजोऽभिमानिभूदेवी भार्या सा सूकरस्य च ॥ ९ ॥
वेदाभिमानिनी वीन्द्र अंभृणी परिकीर्तिता ।
नारायणस्य भार्या तु लक्ष्मीर्वरुणजा स्मृता ॥ १० ॥
यज्ञाख्यस्य हरेर्भार्या दक्षिणा संप्रकीर्तिता ।
जयन्ती ऋषभस्यैव पत्नी संपरिकीर्तिता ॥ ११ ॥

विदेहपुत्री सीता तु रामभार्या प्रकीर्तिता ।
रुक्मिणी सत्यभामा च भार्ये कृष्णस्य कीर्तिते ॥ १२ ॥

इत्यादिका ह्यनन्ताश्चाप्यवताराः पृथग्विधाः ।
रमायाः सन्ति विप्रेन्द्र भेदहीनाः परस्परम् ॥ १३ ॥

अनन्तानन्तगुणकाद्विष्णोर्न्यूनाः प्रकीर्तिताः ।
अथ ब्रह्मा च वायुश्च श्रियः कोटिगुणाधमौ ॥ १४ ॥

वक्ष्ये च ब्रह्मणो रूपं श्रुणु पक्षीन्द्रसत्तम ।
वासुदेवात्समुत्पन्नो मायायां च खगेश्वर ॥ १५ ॥

स एव पुरुषो नाम विरिंच इति कीर्तितः ।
अनिरुद्धात्तु शान्त्याख्यां महत्तत्वतनुस्त्वभूत् ॥ १६ ॥

तदा महाविरिंचेति संज्ञामाप खगेश्वर ।
रजसाऽत्र समुत्पन्नो मायायां वासुदेवतः ॥ १७ ॥

विधिसंज्ञो विरिंचः स ज्ञातव्यः पक्षिसत्तम ।
ब्रह्माण्डान्तः पद्मनाभाद्यो जातः कमलासनः ॥ १८ ॥

स चतुर्मुखसंज्ञां चाप्यवाप खगसत्तम ।
एवं चत्वारि रूपाणि ब्रह्मणः कीर्तितनि च ॥ १९ ॥

वायोर्नामानि वक्ष्येऽहं श्रुणु पक्षीन्द्रसत्तम ।
संकर्षणाच्च गरुड यो जयायां बभूव ह ॥ २० ॥

स वायुः प्रथमो ज्ञेयः प्रधानेति च कीर्तितः ।
लोकचेष्टाप्रदत्वात्स सूत्रनाम्नापि कीर्तितः ॥ २१ ॥

बदरीस्थस्य विष्णोश्च धैर्येण स्तवनाय सः ।
धृतिरूपं ययौ वायुस्तस्माद् धृतिरिति स्मृतः ॥ २२ ॥

योग्यानां हरिभक्तानां धृतिरूपेण संस्थितः ।
यतो हृदि स्थितो वायुस्ततो वै धृतिसंज्ञकः ॥ २३ ॥

सर्वेषां च हृदि स्थित्वा स्मरते सर्वदा हरिम् ।
अतो वायुः स्मृतिर्नाम बभूव खगसत्तम ॥ २४ ॥

अथवा वायुरेवैकः श्वेतद्वीपगतं हरिम् ।
सदा स्मरति वै वीन्द्र ह्यतोऽसौ स्मृतिनामकः ॥ २५ ॥

सर्वेषां च हृदि स्थित्वा ज्ञातो विष्णोरुदीरणात् ।
अतो मेधेति नामाभूद्वायुरेव न संशयः ॥ २६ ॥

ज्ञानद्वारेण भक्तानां मुक्तिदो मदनुज्ञया ।
यतोऽसौ वायुरेवैको मुक्तिनामा बभूव ह ॥ २७ ॥

विष्णौ भक्तिं वर्धयति भक्तानां हृदि संस्थितः ।
अतोऽसौ विष्णुभक्तेति कीर्तितो नात्र संशयः ॥ २८ ॥

यतोऽसौ सर्वजीवानां चित्तसंज्ञानमेव च ।
चित्तरूपो यतो वायुरतश्चित्तमिति स्मृतः ॥ २९ ॥

प्रभुः प्रभूणां गरुड सोदराणां च सर्वशः ।
अतस्तु वायुरेवैको महाप्रभुरिति स्मृतः ॥ ३० ॥

सर्वेषां च हृदि स्थित्वा बलं पश्यति सत्तम ।
अतो बलमिति ह्याख्यामवाप विनतासुत ॥ ३१ ॥

सर्वेषां च हृदि स्थित्वा पुत्रपौत्रादिकैर्जनैः ।
याजनं कुरुते नित्यमतोसौ यष्टृनामकः ॥ ३२ ॥

अनादिकालमारभ्य वायुपर्यन्तमेव च ।
वक्रत्वं नास्ति योगस्य ऋजुयोगी च स स्मृतः ॥ ३३ ॥

योगस्य वक्रता नाम काम्यया हरिपूजनम् ।
ईशरुद्रादिकानां च काम्येन हरिपूजनम् ॥ ३४ ॥

कदाचिदस्ति पक्षीन्द्र ह्यतस्त्वनृजवः स्मृताः ।
ऋष्यादीनां च मध्येऽपि काम्येन हरिपूजनम् ॥ ३५ ॥

अतो न ऋजवो ज्ञेया मनुष्याणां च का कथा ।
यावत्काम्यसपर्यां वै न जहाति नरोत्तमः ॥ ३६ ॥

तथा ऋष्यादयश्चैवु मोक्षस्य परिपन्थिनी ।
अनादिकालमारभ्य कर्मजन्या च वासना ॥ ३७ ॥

मोक्षाधिकारिणः सर्वे कुर्वते काम्यपूजनम् ।
नष्टप्रायं च तत्सर्वं गुरुणा ज्ञानबोधने ॥ ३८ ॥

सम्यग्योगं समाचर्य एते मोक्षमवाप्नुयुः ।
काम्येन पूजनं विष्णोरैश्वर्यं प्रददाति च ॥ ३९ ॥

ज्ञानं च विपरीतं स्यात्तेन यात्यधरं तमः ।
तदेव विपरीतं चेज्ज्ञानाय परिकीर्तितम् ॥ ४० ॥

शिलायां विष्णुबुद्धिस्तु विष्णुबुद्धिर्द्विजे तथा ।
सलिले तीर्थबुद्धिस्तु रेणुकायां तथैव च ॥ ४१ ॥

शिवे सूर्ये षण्मुखे च विष्णुबुद्धिः खगेश्वर ।
इत्याद्यमखिलं ज्ञानं विपरीतमिति स्मृतम् ॥ ४२ ॥

शिलाद्येषु च सर्वेषु चैक्येनैव विचिन्तनम् ।
विष्णुबुद्धिरिति प्रोक्तं न तु तत्रस्थवेदनम् ॥ ४३ ॥

अनाद्यनन्तकालेऽपि काम्येन हरिपूजनम् ।
यतो नास्ति ततो वायुर्ऋजुयोग्यः प्रकीर्तितः ॥ ४४ ॥

अन्येषां सर्वदा नास्ति ह्यतो न ऋजवः स्मृताः ।
वायुर्हरिं दर्शयति ह्यपरोक्षेण सर्वदा ॥ ४५ ॥

मोक्षाधिकारिणां काले ह्यतः प्रज्ञेति कथ्यते ।
परोक्षेणापि सर्वेषां हरिं दर्शयते सदा ॥ ४६ ॥

अतो वायुः सदा वीन्द्र ज्ञानमित्येव कीर्तितः ।
हिताहितोपदेष्टृत्वात् भक्तानां हृदये स्थितः ॥ ४७ ॥

ततश्च गुरुसंज्ञां चाप्यवाप स च मारुतः ।
योगिनां हृदये स्थित्वा स ध्यायति हरिं परम् ॥ ४८ ॥

पार्थक्येनापि तं ध्यायन् महाध्यातेति स स्मृतः ।
यद्योग्यतानुसारेण विजानाति परं हरिम् ॥ ४९ ॥

रुद्रादौ विद्यमानांश्च गुणान् जानाति सर्वदा ।
अतो विज्ञाननामाऽसौ प्रोक्तो हि खगसत्तम ॥ ५० ॥

काम्यानां कर्मणां त्यागाद्विराग इति स स्मृतः ।
अथवा योगिनां नित्यं हृदि स्थित्वा स मारुतः ॥ ५१ ॥

वैराग्यं संजनयति विराग इति स स्मृतः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥ ५२ ॥

तत्सुखं तूत्तरेषां च वायुपर्यन्तमेव च ।
देवानां च ऋषीणामप्युत्तमानां नृणां तथा ॥ ५३ ॥

सुखांशं जनयेद्वायुर्यतोऽतः सुखसंज्ञकः ।
भुंजंति सर्वदा वीन्द्र तत्र मुख्यस्तु मारुतः ॥ ५४ ॥

दुःखशोकादिकं किंचिद्देवानां भवति प्रभो ।
तच्चासुरावेशवशादित्यवेहि न संशयः ॥ ५५ ॥

तज्जीवस्य भवेत्किंचिद्दैत्यानां क्रमशो भवेत् ।
यतः कलेश्चाधिकः स्यादतो दुःखीति स स्मृतः ॥ ५६ ॥

दैत्यानां पापपुण्याभ्यां दुःखमेवोत्तरोत्तरम् ।
तद्दुःखमुत्तरेषां तु कलिपर्यन्तमेव च ॥ ५७ ॥

भुंजन्ति सर्वदा वीन्द्र तत्र मुख्यः कलिः स्मृतः ।
सुखहर्षादिकं किंचिद्दैत्यानां भवति प्रभो ॥ ५८ ॥

देवावेशो भवेत्तस्य नात्र कार्या विचारणा ।
देवानां निरयो नास्ति दैत्यानां विनतासुत ॥ ५९ ॥

सुखस्वरूपं तन्नास्ति विषयोत्थमपि द्विज ।
विषयोत्थं किंचिदपि देवावेशादुदीरितम् ॥ ६० ॥

तमो नास्त्येव देवानां दुःखं नास्ति स्वरूपतः ।
विषयोत्थं महादुःखं देवानां नास्ति सर्वदा ॥ ६१ ॥

दुःखशोकादिकं किंचिदसुरावेशतो भवेत् ।
अतः कलिः सदा दुःखी सुखी वायुस्तु सर्वदा ॥ ६२ ॥

मनुष्याणां ऋषीणां च सुखं दुःखं खगेश्वर ।
भवेत्तत्पुण्यपापाभ्यां पुण्यभोगी च मारुतः ॥ ६३ ॥

पापभोगी कलिर्ज्ञेयो नात्र कार्या विचारणा ।
प्राणादिसुखपर्यन्ता अंशा एकोनविंशतिः ॥ ६४ ॥

प्रविष्टाः सन्ति लोकेषु पृथक्सन्ति खगेश्वर ।
मारुतेरवतारांश्च श्रुणु पक्षीन्द्रसत्तम ॥ ६५ ॥

चतुर्दशसु चेन्द्रेषु द्वितीयो यस्तु रोचनः ।
स वायुरिति संप्रोक्त इन्द्रादीनां खगेश्वर ॥ ६६ ॥

हरितत्वेषु सर्वेषु रुचिमुत्पादयति नः ।
अतो रोचननामाऽसौ मरुदंशः प्रकीर्तितः ॥ ६७ ॥

रामावतारे हनूमान् रामकार्यार्थसाधकः ।
स एव भीमसेनस्तु जातो भूम्यां महाबलः ॥ ६८ ॥

कृष्णावतारे विज्ञेयो मरुदंशः प्रकीर्तितः ।
मणिमान्नाम दैत्यस्तु संकराख्यो भविष्यति ॥ ६९ ॥

सर्वेषां संकरं यस्तु करिष्यति न संशयः ।
तेन संकरनामाऽसौ भविष्यति खगेश्वर ॥ ७० ॥

धर्मान् भागवतान् सर्वान् विनाशयति सर्वथा ।
तदा भूमौ वायुदेवो भविष्यति न संशयः ॥ ७१ ॥

प्रज्ञया सदृशो यस्य नास्ति लोके चतुर्दशे ।
अतः स प्रज्ञया पूर्णो भविष्यति न संशयः ॥ ७२ ॥

अवतारत्रये वायोर्मतं भागवताभिधम् ।
स्थापनं दुष्टदमनं द्वयमेव प्रयोजनम् ॥ ७३ ॥

नान्यत्प्रयोजनं वायोस्तथा वैरोचनात्मके ।
अवतारत्रये वीन्द्र दुःखं गर्भादिसम्भवम् ॥ ७४ ॥

नास्ति नास्त्येव वायोस्तु तथा रोचनजन्मनि ।
शुक्लशोणितसंबन्धो ह्यवतारचतुष्टये ॥ ७५ ॥

नास्ति नास्त्येव पक्षीन्द्र यतो नास्त्यशुभं ततः ।
पूर्वं गर्भं समाशोष्य समये प्रसवस्य च ॥ ७६ ॥

प्रादुर्भवति देवेशो ह्यवतारचतुष्टये ।
त्रयोविंशतिरूपाणां वायोश्चैव खगेश्वर ॥ ७७ ॥

रूपैर्ऋजुस्वरूपैश्च ब्रह्मणः परमेष्ठिनः ।
साम्यमेव न सन्देहो ज्ञानानन्दसुखादिषु ॥ ७८ ॥

एवमेव विजानीयान्नान्यथा तु कथंचन ।
एतस्य श्रवणादेव मोक्षं याति न संशयः ॥ ७९ ॥

तदनन्तरजान्वक्ष्ये श्रुणु पक्षीन्द्रसत्तम ।
कृतौ प्रद्युम्नतश्चैव समुत्पन्ने खगेश्वर ॥ ८० ॥

स्त्रियौ द्वे यमले मध्ये यद्येका या तयोः स्मृता ।
वाणीति संज्ञका वीन्द्र ब्रह्माणीति च कीर्तिता ॥ ८१ ॥

पुरुषाख्यविरिंचस्य भार्या ह्याद्यस्य वै स्मृता ।
द्वितीया भारती नाम श्रीरित्याख्या च सैव हि ॥ ८२ ॥

सूत्राख्यमुख्यवायोश्च भार्या वै परिकीर्तिता ।
महाविरिंचिभार्या तु गायत्री परिकीर्तिता ॥ ८३ ॥

विधिसंज्ञविरिंचस्य भार्या सावित्रिनामका ॥
चतुर्मुखस्य भार्या तु सरस्वत्येव कीर्तिता ॥ ८४ ॥
एवं त्रिरूपं विज्ञेयं वाण्याश्च खगसत्तम ।
वक्ष्येऽवतारान् भारत्याः समाहितमनाः श्रुणु ॥ ८५ ॥
सर्व्ववेदाभिमानित्वात् सर्व्ववेदात्मिका स्मृता ।
महाध्यातुश्च वायोस्तु भार्या सा परिकीर्तिता ॥ ८६ ॥
सुबुद्धिजनकत्वात्सा सज्जनानां खगेश्वर ।
अतः सा बुद्धिनाम्नीति भारती परिकीर्तिता ॥ ८७ ॥
यथानुभूतं च हरिं स्मयक् दर्शयतीति च ।
अतोऽनुभूतिसंज्ञा सा भारती परिकीर्तिता ॥ ८८ ॥
ज्ञानरूपस्य वायोस्तु भार्या सा परिकीर्तिता ।
सदा सुखस्वरूपत्वात् भारती तु सुखात्मिका ॥ ८९ ॥
सुखस्वरूपवायोस्तु भार्या सा परिकीर्तिता ।
गुरुस्तु वायुरेवोक्तस्तस्मिन् भक्तियुता सती ॥ ९० ॥
ततस्तु भारती नित्यं गुरुभक्तिरिति स्मृता ।
धृतिरूपस्य वायोस्तु भार्या वै परिकीर्तिता ॥ ९१ ॥
हरौ स्नेहयुतत्वाच्च हरिप्रीतिरिति स्मृता ।
धृतिरूपस्य वायोस्तु भार्या वै परिकीर्तिता ॥ ९२ ॥
सर्वमन्त्राभिमानित्वात्सर्वमन्त्रात्मिका स्मृता ।
महाप्रभोश्च वायोश्च भार्या वै सा प्रकीर्तिता ॥ ९३ ॥
भुङ्क्ते सा सर्वभोगांस्तु हरिप्रीत्यर्थमेव च ।
अतस्तु भारती ज्ञेया भुजिनाम्ना प्रकीर्तिता ॥ ९४ ॥
चित्तरूपस्य वायोस्तु भार्या सा परिकीर्तिता ।
रोचनेन्द्रस्य भार्या च श्रद्धाख्या परिकीर्तिता ॥ ९५ ॥

हनूमांश्च तदा जज्ञे त्रेतायां पक्षिसत्तम ।
तदा शिवाख्यविप्राच्च जज्ञे सा भारती स्मृता ॥ ९६ ॥

न केवलं भारती सा शच्याद्यैश्चैव संयुता ।
तस्मिन् जन्मनि ताः सर्वा नापुर्योगं स्वभर्तृभिः ॥ ९७ ॥

अन्यगात्वं च नैवापुः कन्याजन्मनि ताः स्थिताः ।
त्रेतान्ते सैव पक्षीन्द्र शच्याद्यैश्चैव संयुता ॥ ९७ ॥

दमयन्त्यां नलाज्जाता चेन्द्रसेनेति चोच्यते ।
नलं नन्दयते यस्मात् तस्माच्च नलनन्दिनी ॥ ९८ ॥

तत्र स्वभर्तृसंयोगं नैव चाप खगेश्वर ।
तत्रान्यगात्वं विज्ञेयं मुद्गलस्थेन वायुना ॥ ९९ ॥

कंचित्कालं तथा स्थित्वा कन्यैव मृतिमाप सा ।
शच्यादिसंयुता सैव द्रुपदस्य महात्मनः ॥ १०० ॥

वेदिमध्यात्समुद्भूता भीमसेनार्थमेव च ।
तत्रान्यगात्वं नास्त्येव योगश्च सह भर्तृभिः ॥ १०१ ॥

केवला भारती ज्ञेया काशिराजस्य कन्यका ।
कालीनाम्ना तु सा ज्ञेया भीमसेनप्रिया सदा ॥ १०२ ॥

शच्यादिभिः संयुतैव द्रौपदी द्रुपदात्मजा ।
देहं त्यक्त्वा विशिष्टैव कारडीग्रामसंज्ञके ॥ १०३ ॥

संकरस्य गृहे वीन्द्र भविष्यति कलौ युगे ।
वायोस्तृतीयरूपार्थं सा कन्यैव मृतिं गता ॥ १०४ ॥

इत्याद्या वायुभार्याश्च ब्रह्मभार्याश्च सत्तम ।
स्वभर्तृभ्यां च पक्षीन्द्र गुणैश्चैव शताधमाः ॥ १०५ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे महालक्ष्म्याद्यवतारनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥**

## ॥ सप्तदशोऽध्यायः ॥

### कृष्ण उवाच

चतुर्जन्मसु वै कृष्ण शच्याद्यैः सह भारती ।
एकदेहविशिष्टैव भुवि जातेति चोक्तवान् ॥ १ ॥

कारणं ब्रूहि मे ब्रह्मन् शिष्याय तव सुव्रत ।
गरुडेनैवमुक्तस्तमुवाच मधुसूदनः ॥ २ ॥

### श्रीकृष्ण उवाच

विशिष्टदेहसंप्राप्तौ भारत्याः पक्षिसत्तम ।
वक्ष्यामि कारणं वीन्द्र सावधानमनाः श्रुणु ॥ ३ ॥

पुरा कृतयुगे वीन्द्र रुद्रभार्या च पार्वती
इन्द्रभार्या शची देवी यमभार्या च शामला ॥ ४ ॥

अश्विभार्या ह्युषादेवी भर्तृभिः सहिताः खग ।
ब्रह्मलोकं ययुस्तत्र ब्रह्माणं ददृशुस्तदा ॥ ५ ॥

हावभावं विलासं च दर्शयामासुरञ्जसा ।
दृष्ट्वा ता उद्धता ब्रह्मा शशाप खगसत्तम ॥ ६ ॥

उद्धताश्च यतो यूयं मानुषीं योनिमाप्स्यथ ।
तत्र स्वभर्तृसंयोगं नावाप्स्यथ खगेश्वर ॥ ७ ॥

एवं शप्तास्तु ताः सर्वाः आजग्मुर्मेरुपर्वतम् ।
तत्रोपविष्टं ब्रह्माणं वंचयामासुरंजसा ॥ ८ ॥

तूष्णीमेव स्थिते वीन्द्र वंचयन्त्यः स्थिताः पुनः ।
ततस्तूष्णीं स्थितं वीन्द्रं वंचयामासुरंजसा ॥ ९ ॥

त्रिवारानन्तरं ब्रह्मा शप्तवांस्ता महाप्रभुः ।
त्रिवारं वंचनं यस्मादेकवारं च दर्शनम् ॥ १० ॥

विलासं च ततः सर्वाश्चतुर्जन्मसु भूतले ।
एकदेहान्मानुषत्वं भविष्यति न संशयः ॥ ११ ॥
द्वितीये जन्मनि तथा चान्यगात्वमवाप्स्यथ ।
तृतीये जन्मनि तथा भर्तृसंयोगमाप्स्यथ ॥ १२ ॥
जन्मन्याद्ये चतुर्थे च नान्यगात्वमवाप्स्यथ ।
तथा स्वभर्तृसंयोगं नावाप्स्यथ न संशयः ॥ १३ ॥
एवं शप्तास्तु ताः सर्वा ब्रह्मणा पक्षिसत्तम ।
तदा विचारयामासुर्मिलित्वा मेरुमूर्धनि ॥ १४ ॥
ब्रह्मशापश्चानिवार्य उपायैः शतशोऽपि च ।
नीचैः समागमो निन्द्यस्तथैव च विपत्तिदः ॥ १५ ॥
उत्तमेन च देवेन संगो नानर्थदो भवेत् ।
देवानामुत्तमो वायुस्तदर्थं यत्नमाचरेत् ॥ १६ ॥
विचार्यैवमुमाद्यास्ता सेवां चक्रुश्च भारतीं ।
सहस्रवत्सरान्ते सा भारती तोषिताऽब्रवीत् ॥ १७ ॥
मत्सेवां च किमर्थं वै ह्याचरिष्यथ सुव्रताः ।
तस्यां रक्ताश्च ता देव्यस्त्वब्रुवन् स्वचिकीर्षितम् ॥ १८ ॥
पुरा वयं तु शप्ताः स्मो ब्रह्मणा क्रोधरूपिणा ।
एकदेहान्मानुषत्वं अवाप्स्यथ वरांगनाः ॥ १९ ॥
चतुर्जन्मसु चाप्येवं द्वितीये जन्मनि प्रभुः ।
समाप्स्यथान्यगात्वं चेत्येवं शप्ता ह भामिनि ॥ २० ॥
अस्माकं वायुना देवेनान्यगात्वं न दोषभाक् ।
अतस्त्वयैकदेहत्वमिच्छामो देवि जन्मसु ॥ २१ ॥
इत्युक्ता ताभिरथ च तथेत्युक्त्वा द्विजोत्तम ।
सा पार्वत्यादिभिर्युक्ता भारतीत्यभवद्भुवि ॥ २२ ॥

शिवनाम्नो द्विजस्यैव गृहे सा तु कुमारिका ।
कर्मैक्यार्थं तपश्चक्रुः विष्णोश्च शिवसंज्ञिनः ॥ २३ ॥
तपसा तोषितो विष्णुः शिवसंस्थो महाप्रभुः ।
वरं प्रादात्तृतीयेऽस्मिन् कृष्णजन्मनि भोः स्त्रियः ॥ २४ ॥
सम्यक् स्वभर्तृसंयोगो भविष्यति विना भवम् ।
यतोऽनया च पार्वत्या प्रेरिता एव सर्वशः ॥ २५ ॥
विलासं दर्शयामासुर्ब्रह्मणः परमेष्ठिनः ।
अतः सा पार्वती श्रेष्ठा ब्रह्मदेहे न संशयः ॥ २६ ॥
कृष्णादेहेऽपि तस्यास्तु न भविष्यति संगमः ।
अन्यगात्वं द्वितीयेऽस्मिन् भविष्यति न संशयः ॥ २७ ॥
रुद्रान्तस्थो हरिश्चैव वरं दत्वा स्त्रियां प्रभुः ।
अन्तर्धानं ययौ श्रीमान् स्वलोकं गतवानभूत् ॥ २८ ॥
विसृज्य ताश्च तं देहं बभूवुर्नलकन्यकाः ।
इन्द्रसेनेति संज्ञां च लब्ध्वा ताश्च तपोवनम् ॥ २९ ॥
ययुस्तत्र चरन्त्यस्ता ददृशुर्मुद्गलं त्वृषिम् ।
तस्य दर्शनमात्रेण बभूवुः काममोहिताः ॥ ३० ॥
मुद्गलस्याभिमानं च नाशयित्वा च मारुतिः ।
रमयामास तत्रस्था भारत्यादिवराङ्गनाः ॥ ३१ ॥
तद्देहं ता विसृष्टाश्च बभूवुर्द्रौपदीति च ।
यस्मात्सा द्रुपदाज्जाता तस्मात्सा द्रौपदी स्मृता ॥ ३२ ॥
वेदिमध्यात्समुद्भूता तस्मात्साऽयोनिजा स्मृता ।
कृष्णवर्णा यतस्तस्मात्सा कृष्णा भूतले स्मृता ॥ ३३ ॥
कृष्णादेहेऽपि भारत्या अभिमानः सदा स्मृतः ।
शच्यादेरभिमानस्तु तस्मिन् देहे कदाचन ॥ ३४ ॥

यस्याः स्वभर्तृसंयोगकाले च खगसत्तम ।
अभिमानस्तदैव स्यात् तस्या एव न चान्यथा ॥ ३५ ॥
एतासां रमणे काले उमायाः पक्षिसत्तम ।
अभिमानश्च नास्त्येव स्वाप एव रता सदा ॥ ३६ ॥
पार्थस्य रमणे काले द्रौपद्याश्च कलेवरे ।
भारत्याश्च तथा शच्या अभिमानद्वयं स्मृतम् ॥ ३७ ॥
उमायाः शामलायाश्च ह्यभिमानक्षतिस्तदा ।
सर्वासां स्वाप एव स्यान्नात्र कार्या विचारणा ॥ ३८ ॥
अर्जुने वीररूपेण प्रविष्टो वायुरेव च ।
भारतीं रमते नित्यं अर्जुनस्तु शचीं खग ॥ ३९ ॥
युधिष्ठिरे च सौम्येन प्रविष्टो वायुरेव च ।
रमते भारतीं नित्यं श्यामलां च युधिष्ठिरः ॥
सुन्दरेण च रूपेण प्रविष्टो नकुले मरुत् ।
रमते भारतीं नित्यं नकुलश्चाप्युषां खग ॥ ४० ॥
नीतिरूपेण चाविष्टो सहदेवे च मारुतः ।
द्रौपदीं रमते नित्यं सहदेवोऽप्युषां खग ॥ ४१ ॥
शच्याद्या द्रौपदीदेहे नापुः सङ्गं च मारुतेः ।
तासामतोऽन्यगामित्वं कृष्णादेहे न चिन्तयेत् ॥ ४२ ॥
धर्मादिदेहसङ्गं च भारत्या नैव चिन्तयेत् ।
मुद्गलस्य च देहस्य तासां सङ्गं न चिन्तयेत् ॥ ४३ ॥
अपरोक्षवतीनां तु तासां लेपो न सर्वथा ।
अथवा मुद्गलस्येव रतिकाले खगेश्वर ॥ ४४ ॥
अयं तु वायुरेवेति रमणं चक्रुरंजसा ।
कृष्णादेहेऽपि ताः सर्वा अस्माकं पतयश्च ते ॥

रमणं चक्रुरेवं ता अतो दोषो न विद्यते ।
एकस्मिन् दिवसे वीन्द्र धर्मो वायुश्च तावुभौ ॥ ४५ ॥

रमणं चक्रतुः सम्यक् कृष्णादेहेऽपि मानद ।
तथापि नान्यगामित्वं चिन्तनीयं न संशयः ॥ ४६ ॥

सुराणां सुरभोग्यानां भोगं जानन्ति देवताः ।
न जानन्त्येव मर्त्यास्तु दोषदेहयुता यतः ॥ ४७ ॥

नीरक्षीरविवेकं च हंसो वेत्ति न चापरः ।
अतः स्वभर्तृसंयोगं कृष्णादेहे विचिन्तयेत् ॥ ४८ ॥

कृष्णादेहेऽन्यगामित्वं नैव चिन्त्यं खगेश्वर ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे भारत्या विशिष्टदेहसंप्राप्त्यै कारणनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥**

## ॥ अष्टादशोऽध्यायः ॥

अथानन्तरजान्वक्ष्ये श्रुणु पक्षीन्द्रसत्तम ।
श्रुणु तान्सावधानेन श्रुत्वा तानवधारय ॥ १ ॥
पुरुषाख्यविरिंचात्तु सरस्वत्यां खगेश्वर ।
प्रधानसंज्ञकायां वै जातः शेषो महाबलः ॥
हरे रमाद्याश्रयस्य स्वस्मिन्निद्रां प्रकुर्वतः ॥ २ ॥
शयनार्थमभूदेषस्तेन कृत्यं हरेर्नतु ।
सर्वदा हरिदासोऽहं सर्वदा हरिपूजकः ॥ ३ ॥
हरे सदा नमामि त्वां बहुजन्मनि जन्मनि ।
एवं बुध्या तु गरुड ह्यभूच्च शयनं हरेः ॥ ४ ॥
सूत्रनाम्नस्तथा वायोः श्रद्धायां विनतासुत ।
कालनामा च गरुडो वाहनार्थं हरेरभूत् ॥ ५ ॥
ततो महत्तत्वतनोर्विरिंचात्तु खगेश्वर ।
अहंकारात्मको रुद्रः समभूत्सेवितुं हरिम् ॥ ६ ॥
त्रय एते महाभाग परस्परसमाः स्मृताः ।
गायत्रीभारतीभ्यां ते त्रयः शतगुणावराः ।
शेषावतारान् वक्ष्येऽहं श्रुणु पक्षीन्द्रसत्तम ॥ ७ ॥
शामलायां च धर्माच्च नरो जातस्तु भूतले ।
शेषः स एव विज्ञेयो भक्तो नारायणस्य च ।
विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्युतः सदा ॥ ८ ॥
सुमित्रायां दशरथाज्जातो यो लक्ष्मणः खग ।
सोऽपि शेषस्तु विज्ञेयो वाय्वनन्तांशसंयुतः ॥ ९ ॥
रामस्य सेवां कर्तुं स जातो भूम्यां खगाधिप ।
बलभद्रस्तु रोहिण्यां वसुदेवादभूत् खग ॥ १० ॥

सोऽपि शेषस्तु विज्ञेयो वाय्वनन्तांशसंयुतः ।
आविष्टः शुक्लकेशेन हरिणा रोहिणीसुतः ॥ ११ ॥
त्रय एते महाभाग ह्यवताराः *फणेः स्मृताः ।
न वीन्द्रस्यावतारोऽस्ति भूम्यां चाज्ञा तथा हरेः ॥ १२ ॥
न वीन्द्रस्यावतारोऽस्ति भूम्यां चाज्ञा तथा हरेः ।
रुद्रावतारान् वक्ष्येऽहं तान् श्रुणु त्वं समाहितः ।
योऽहंकारात्मको रुद्रः स एवाभूत् खगेश्वर ॥ १३ ॥
सदाशिव इति त्वाख्यामवाप स विनाशकः ।
तमोऽभिमानी स ज्ञेयस्त्वशिवत्वात्सदाशिवः ॥ १४ ॥
कपालमालामशिवां सदा धारयते यतः ।
अतः सदाशिवो ज्ञेयो न त्वभागवतः शिवः ॥ १५ ॥
गजाजिनं चापवित्रं यतो धारयते हरः ।
लोकानमंगलान्सर्वान् हरते च सदा हरः ॥ १६ ॥
हर्याज्ञया सदा लोकान् विषयासक्तचेतसः ।
विमुखान्कुरुते यस्मात् विष्णौ तस्मात्सदाशिवः ॥ १७ ॥
कदाचिदसुरावेशाद्विरुद्धं कुरुते हरः ।
अतः सदाशिवो ज्ञेयो न त्वभागवतः शिवः ॥ १८ ॥
सोऽयं श्मशानवसतिं कर्तुमैच्छद्यतो हरः ।
अतः सदाशिवो ज्ञेयो न त्वभागवतः शिवः ॥ १९ ॥
दशकल्पं तपः कर्तुं विवेश लवणाम्भसि ।
अतो रुद्रस्तपः संज्ञामवाप च खगोत्तम ॥ २० ॥
व्यासपुत्रः शुकः प्रोक्तो वायोरावेशसंयुतः ।
रुद्रावतारो विज्ञेयो ज्ञानार्थमभवद्भुवि ॥ २१ ॥

---

* फणिनः इत्यर्थः फणेः इत्यार्षप्रयोगः ।

अत्रिपत्न्यनुसूयायां जज्ञे रुद्रो महातपाः ।
दूर्वासास्तु स विज्ञेयो मानभङ्गाय भूभृताम् ॥ २२ ॥
द्रोणाज्जातो द्रौणिसंज्ञो रुद्र एव प्रकीर्तितः ।
प्रारब्धं भोक्तुकामोऽसौ परपक्षप्रकाशकः ॥ २३ ॥
ईशान्यकोणे संस्थितो यस्तु रुद्रो ह्यवाप वै वामदेवेति संज्ञाम् ।
स्ववामभागे संस्थितं वासुदेवं स्वयोग्यभक्त्या पूज्यते यः सदैव ॥ २४ ॥
अतो रुद्रो वामदेवेति संज्ञामवाप ज्येष्ठत्वमथोत्तमत्वं ।
कालात्मकत्वं च बलात्मकत्वं अवाप रुद्रो न तु सुन्दरत्वतः ॥ २५ ॥
यदा रुद्रो त्रिपुरस्थांश्च दैत्यान् विष्णुद्रुहो हन्तुकामो महात्मा ।
अघोररूपं धृतवान् रुद्र एव ततस्त्वघोरेति स आप संज्ञाम् ॥ २६ ॥
सेवां कर्तुं त्विच्छतो दैत्यसंघान् कंचित्कालं तपसा क्लिश्यामानान् ।
वरान् दातुं सद्य एवाभिजातः सद्योजातेत्येव संज्ञामवाप ॥ २७ ॥
ऊरोः पुत्रस्तु चौर्वस्तु रुद्र एव प्रकीर्तितः ।
ऊ इत्युत्कृष्टवाचित्वात् रुस्तु रोदनवाचकः ॥ २८ ॥
ऊरू रुद्र इति प्रोक्तस्तत्पुत्रश्चौर्वसंज्ञकः ।
रुदमुर्वरितं कर्तुं औवोऽभूद्रुद्र एव सः ॥ २९ ॥

**गरुड उवाच**

रोदनं कुरुते कस्मादुरुसंज्ञो हरो हरे ।
रुदमुर्वरितं कस्मात्कुरुते और्वसंज्ञकः ॥ ३० ॥
एतद्विस्तार्य मे ब्रूहि पौत्राय तव सुव्रत ।
इत्युक्तस्तेन नृहरिरुवाच करुणानिधिः ॥ ३१ ॥

**कृष्ण उवाच**

दृष्ट्वा स्वबिम्बं सुगुणैस्तु पूर्णं सङ्कर्षणाख्यं लालितपादपद्मम् ।
श्रीब्रह्मशेषेन्द्रकामैस्तथान्यैर्भारत्याद्यैः सस्त्रियैश्चापि नित्यम् ॥ ३२ ॥

दृष्ट्वा हरिं पुलकाङ्गस्तु रुद्धः स बाष्पचक्षू रुद्धकण्ठश्च हृष्टः ।
अनाद्यनन्तं ब्रह्मकल्पेषु नैव कृतं मया स्मरणं सर्वदैव ॥ ३३ ॥
पदारविन्दं सुनखैर्विभूषितं दृष्ट्वाऽहं ते केन पुण्येन देव ।
दृष्ट्वा दृष्ट्वा पादपद्मं मुरारेः पुनः पुना रुद्धकण्ठो बभूव ॥ ३४ ॥
रुरोद रुद्रो भयकम्पिताङ्गः कथं पुनर्दर्शनं मे यदा स्यात् ।
मुकुन्द नारायण विश्वमूर्ते वागिन्द्रियेण स्तवनं कथं स्यात् ॥ ३५ ॥
मद्दर्शनं सर्वदा पापयुक्तं तथा मद्वाक् सर्वदा पापयुक्ता ।
मद्दर्शनं सर्वदा स्त्रीषु सक्तमभूच्च ते दर्शनं मे ह्यसक्तम् ॥ ३६ ॥
मद्वाक् सदा पुत्रदारादिकानां सम्यक् शक्तिः स्तवने नास्ति विष्णोः ।
विष्णुस्तुतौ नावकाशोऽस्ति वाचो दृष्टोऽहं त्वं केन पुण्येन देव* ॥ ३७ ॥
अनन्तकर्णेश सुचन्द्रसंज्ञ श्रोत्रेण नित्यं न कथा श्रुता ते ।
श्रुता मया बहुधा लोकवार्ता दृष्टो मया त्वं केन पुण्येन देव ॥ ३८ ॥
श्रुत्वा स्मृत्वा पादपीठं हरेश्च पुनः पुना रुद्धकण्ठो बभूव ।
रुरोद रुद्रो भयकम्पिताङ्गः कथं पुनः श्रवणं स्यात्कथायाः ॥ ३९ ॥
त्वमीश वैकुण्ठ सुवायुसंज्ञ त्वदर्पितं गन्धपुष्पादिकं च ।
सदा न लिप्तं भुजगैर्विलिप्तं तद्विष्ठमूत्रैश्च तथा च स्वेदैः ॥ ४० ॥
स्त्रीणां कुचोदैश्च कचोदकैश्च कक्षोदकैर्गात्रजलैर्मुकुन्द ।
अनर्पितैर्वस्त्रगन्धादिकैश्च दृष्टो मया केन पुण्येन देव ॥ ४१ ॥
स्पृष्ट्वा स्पृष्ट्वा हरिनिर्माल्यगन्धं पुनः पुना रुद्धकण्ठो बभूव ।
रुरोद रुद्रो भयकम्पिताङ्गो कथं पुनः स्पर्शनं स्यात्सदा मे ॥ ४२ ॥
नृसिंह नासास्थित नासिकेश मन्नासया क्वापि सुपद्मसौरभम् ।
नाघ्रातमित्थं पुनराघ्रातमेव ह्यनर्पितं गन्धपुष्पादिकं च ॥ ४३ ॥
सुनासिकं सुष्ठुदन्तं मुरारे दृष्टं मुखं केन पुण्येन देव ।
घ्रात्वा घ्रात्वा विष्णुनिर्माल्यगन्धं पुनः पुना रुद्धकण्ठो बभूव ॥ ४४ ॥

---

*दृष्टस्त्वं मे केन पुण्येन देव इति पाठो युक्त इति भाति ।

रुरोद रुद्रो भयकम्पिताङ्गः जिघ्रामि निर्माल्यमिदं कथं ते ।
जिह्वास्थितो जिह्वसंज्ञो हि नित्यं जिह्वेन्द्रियेणापि तथार्पितं च ॥ ४५ ॥
नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तं ।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ ४६ ॥
एतादृशं तव नैवेद्यशेषं न भुक्तं वै सर्वदा दिव्यरूपम् ।
अनर्पितं तव देवस्य विष्णोर्भुक्तं मया बहुवारं मुकुन्द ॥ ४७ ॥
पदारविन्दे ह्यर्पितं भक्ष्यभोज्यं दृष्टं मया केन पुण्येन देव ।
भुक्त्वा भुक्त्वा हरिनैवेद्यजातं पुनः पुनः कण्ठसंरुद्ध एव ॥ ४८ ॥
रुरोद रुद्रो भयकम्पिताङ्गः कथं मम स्याद्धरिनैवेद्यजातम् ।
मुखं त्वदीयं रमया सुलालितं किरीटयुक्तं कुण्डलैः कुन्तलैश्च ॥ ४९ ॥
अनेकजन्मार्जितपुण्यसंचयैर्दृष्टं मया सज्जनसंगमाच्च ।
अनेकजन्मार्जितपापसंयचयैरदर्शनं यास्यसि देवदेव ॥ ५० ॥
एवं सुभक्त्या च रुरोद रुद्रो दृष्ट्वा हरिं सर्वगुणैः सुपूर्णम् ।
पदारविन्दं तव विश्वमूर्ते योगीश्वरैर्हृदये संगृहीतम् ॥ ५१ ॥
दृष्टं मया दयया वासुदेव द्रक्ष्ये कथं पुनरित्थं रुरोद ।
दृष्टं मया त्वरिबले भविनाशिशंखचक्रादिकैस्त्रिजगताऽपि च देव पूर्णम् ॥ ५२ ॥
एतादृशं त्वदुदरं च कथं रमेश द्रक्ष्ये पुनः पुनरहं त्विति संरुरोद ।
आनन्दपूर्ण नखपूर्ण सुकेशपूर्ण लोमादिपूर्ण गुणपूर्ण सुजंघपूर्ण ॥ ५३ ॥
वक्षःस्थलं तव विभोस्तु विशालभूतं सद्भूषणं विमलकौस्तुभशोभिलक्ष्म्या ।
सुकोमलं श्रीतुलस्यास्तथैव सुपुष्पितं चन्दनैश्चार्चितं च ।
एतादृशं तव वक्षःस्थलं च दृष्टं मया तव कारुण्यदृष्ट्या ॥ ५४ ।
पुनःपुनर्दर्शनं मे कथं स्यादेवं रुद्रः स चभक्त्या रुरोद ।
अतस्तूरुर्नाम संप्राप्य रुद्रस्तत्पुत्रोऽभूदौर्वसंज्ञः स एव ॥ ५५ ॥
यस्माद्रुद्रं चोर्वरिंत चकार तस्मात्स रुद्रस्त्वौर्वसंज्ञो बभूव ।
औौर्वस्तु लोकान्मोक्षयोग्यांश्च दृष्ट्वा ह्यत्यन्तं वै विषयेष्वेव निष्ठान् ॥ ५६ ॥

रुराव चौर्वो विष्णपदारविन्दं स्मृत्वा स्मृत्वा रुद्धकण्ठो बभूव ।
ते पापिष्ठा पापरूपान् भजन्तो दिने दिने दुर्विषयान् कदिन्द्रियैः ।। ५७ ।।
कदा चैतान् हेयबुध्या विमुंचे न जानेऽहं चेति सम्यग्रुरोद ।
एते हि मूर्खा : विषयानर्थलब्ध्यै कुर्वन्ति यत्नं परमादरेण ।। ५८ ।।
कदिन्दियार्थे च धनादिकं च त्यजन्ति सर्वे विषयेषु निष्ठाः ।
त्वन्मायया मोहितान्नष्टबुद्धीन् कदा चैतान् मुंचये विश्वमूर्ते ।। ५९ ।।
स्मृत्वा स्मृत्वा वासुदेवस्य मायां रुरोद चोर्वो भयकम्पिताङ्गः ।
अतीवकष्टेन च लोकवृत्त्या श्रित्वा दैन्यं स्वीयकार्यं विहाय ।। ६० ।।
अतीव दैन्येन धनादिकं च संपाद्य सर्वेऽपि सुपापशीलाः ।
कष्टार्जितं द्रव्यधनादिकं च त्यजन्ति सर्वे पशवो व्यर्थमेव ।। ६१ ।।
सत्पात्रभूते विष्णुबुध्या कदापि त्यजन्ति नैते मायया वै मुरारेः ।
एषामायुर्व्यर्थमाहुर्महान्तः कथं नष्टा इति सम्यग्रुरोद ।। ६२ ।।
एषामायुर्व्यर्थमेवं गतं च ह्येषां तृष्णा यौवनत्वं ह्यवाप ।
स्कन्धस्थमृत्युर्हसते कृष्ण विष्णो तं वै न जानन्ति विमूढचेतसः ।। ६३ ।।
गृहं मदीयं शतवर्षं च जीवेत्पुत्रो मदीयः शतवर्षं च जीवेत् ।
अहं च जीवे शतवर्षं सुखेन मदीयभार्याऽपि सुलक्षणाऽस्ति ।। ६४ ।।
गावश्च मे सन्ति सुदुग्धपूर्णा मित्राणि मे सन्ति मुदा हि युक्ताः ।
दास्ये सुतं वरणार्थं तु वध्वै पुत्रीं विवाहार्थमहं ददामि ।। ६५ ।।
दास्ये चाहं सत्सु पुत्री धनं वा दास्ये चाहं धनिकेष्वेव नित्यम् ।
अदृष्टरूपी भगवान्वासुदेवो दृष्ट्वा दृष्ट्वा हसते सर्वदैव ।। ६६ ।।
नाहं करिष्ये श्रवणं कथाया मद्भाग्यनाशश्च भविष्यतीति ।
नाहं हरिं पूजयिष्ये सदैव पुत्रादिनाशश्च भविष्यतीति ।। ६७ ।।
काले काले दिष्टनामा हरिस्तु फलप्रदो वासुदेवोऽखिलस्य ।
एतादृशान् मूर्खजनांश्च दृष्ट्वा रुरोद चौर्वो वासुदेवैकनिष्ठः ।। ६८ ।।

अस्त्वौर्वो रुद्ररूपी खगेन्द्र जानीहि नित्यं कृष्ण संशिक्षितार्थः ।
यदा सती दक्षपुत्री खगेन्द्र दक्षाध्वरे स्वशरीरं विसृज्य ॥ ६९ ॥
जज्ञे पुनर्मेनकायां हिमाद्रेस्तदा रुद्रस्त्वौर्वसंज्ञामवाप ।
ऊर्ध्वरेता भवेत्युक्त्या ऊर्ध्वरेता बभूव ह ॥ ७० ॥
पाणिग्राहं रुद्रदेवो महात्मा यदा हिमाद्रेः कन्यकायाश्चकार ।
तस्यां परं लम्पटः सम्बभूव ह्यतो रुद्रो लम्पटसंज्ञामवाप ॥ ७१ ॥
सदाशिवाद्या दशरुद्रभ्रातरः सौमित्रेयो रौहिणेयस्त्रयश्च ।
समा एते मोक्षकाले सुतौ च शतैर्गुणैर्न्यूनभूताश्च ताभ्याम् ॥ ७२ ॥

**गरुड उवाच**

आनन्द निर्णयं ब्रूहि कृष्ण पूर्णदयानिधे ।
निर्णेतुं ज्ञानिनां यद्वज्ज्ञापनार्थं तथा मम ॥ ७३ ॥
ब्रूहि शिष्याय दयया चोद्धर्तुं मां च सर्वदा ।
पूर्णकामस्य ते कृष्ण का स्पृहा विद्यते प्रभो ॥ ७४ ॥
एवमुक्तो हृषीकेशः पक्षीशेन महात्मना ।
उवाच कृपया कृष्णः प्रसन्नः कमलेक्षणः ॥ ७५ ॥

**कृष्ण उवाच**

गायत्र्याश्च शतानन्द एकानन्दस्तु वेधसः ।
एतादृशः शतानन्दो ब्रह्मणः परिकीर्तितः ॥ ७६ ॥
शेषादेश्च शतानन्दः सरस्वत्याः खगोत्तम ।
एकानन्दस्तु विज्ञेयो भारत्या विनतासुत ॥ ७७ ॥
एवं तु निर्णयो ज्ञेय आनन्दस्य सदा खग ।
एवमुक्तं मया सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ ७८ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे रुद्ररोदनहेत्वानन्दतारतम्यादिनिरूपणं नाम अष्टादशोऽध्यायः ॥ १८ ॥**

## ।। एकोनविंशोऽध्यायः ।।

**गरुड उवाच**

त्वयोक्तं कृष्ण गोविन्द रुद्राच्छतगुणैरपि ।
ब्रह्माणी भारती चोभे ह्यधिके देवसत्तम ।। १ ।।

मया श्रुतं विरिंचेन ह्युमापर्यन्तमेव च ।
अनन्तांशैर्विहीनत्वं विरिंचोक्तं सुराधिप ।। २ ।।

सहस्रांशैर्विहीनत्वं त्वयोक्तं कृष्ण माधव ।
सर्वेषां चैव पूर्वेषामवेक्ष्यैव हरे प्रभो ।। ३ ।।

ज्ञानानन्दबलादीनां वायुपर्यन्तमेव च ।
सहस्रांशैर्विहीनत्वं ज्ञानादीनां महेश्वर ।। ४ ।।

निर्णयं ब्रूहि गोविन्द सर्वज्ञोऽसि न संशयः ।
गरुडेनैवमुक्तस्तु वासुदेवोऽब्रवीद्वचः ।। ५ ।।

**कृष्ण उवाच**

अनन्तांशैर्विहीनत्वं विरिंचोक्तं खगाधिप ।
सहस्रांशैर्विहीनत्वं वायूक्तं च खगाधिप ।। ६ ।।

पूर्वेषां चैव पूर्वेषां ह्यपेक्ष्यैव खगाधिप ।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटम् ।। ७ ।।

परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।
अनन्तगुणितत्वं च ब्रह्मणा समुदीरितम् ।। ८ ।।

सहस्रगुणितत्वं च मारुतेनाप्युदीरितम् ।
यथाऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलाधिके ।। ९ ।।

सर्वैर्गुणैः शतगुणाः क्रमेणोक्तं न तेऽखिलाः ।
भारत्याश्च शतं ज्ञानं बहुलं समुदाहृतम् ।। १० ।।

एक एव च वायोश्च ज्ञानं चैवमिति स्फुटम् ।
यथा दीपाच्छतगुणाप्यग्निज्वाला न दीपवत् ॥ ११ ॥
स्फुटीभवेद्यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।
यथैव सूर्याद्विगुणः चन्द्रो नैव स्फुटीभवेत् ॥ १२ ॥
आनन्दतारतम्यं च यथोक्तं तु मया तव ।
तथैव जानीहि खग नान्यथा तु कथंचन ॥ १३ ॥
अहं विजानामि मयि स्थितान् गुणान् सर्वैर्विशेषैश्च खगेन्द्र संयुतान् ।
सुसूक्ष्मरूपांश्च सदा खगेन्द्र मयाप्यदृष्टो नास्ति नास्त्येव कश्चित् ॥ १४ ॥
सर्वावतारेष्वपि विद्यमानं हरिं विजानाति रमाऽपि देवी ।
हरेर्गुणान्सर्वविशेषसंयुतान् अशेषु रूपान्न विजानाति देवी ॥ १५ ॥
सुसूक्ष्मरूपान्सा विजानाति देवी ब्रह्मादिभ्यो मत्प्रसादात्सर्वदैव ।
स्वात्मस्वरूपं प्रविजानाति देवी सुसूक्ष्मरूपं सुविशेषैश्च युक्तम् ॥ १६ ॥
स्वान्यं प्रपंचं प्रविजानाति लक्ष्मीस्तथाप्येशेषैः सुविशेषैश्च युक्तम् ।
ब्रह्माऽपि पश्येत्सर्वगं वासुदेवं वाण्यादिभ्यो ह्यधिकान्सद्गुणांश्च ॥ १७ ॥
श्रीवन्न जानाति हरेर्गुणांश्च सुसूक्ष्मरूपांश्च विशेषसंयुतान् ।
स्पष्टत्वरूपेण यथा विदुः सदा मुक्तब्रह्माणो न तथान्येऽप्यमुक्ताः ॥ १८ ॥
स्वात्मानमन्यच्च सदा विशेषयुक्तं विजानाति विधिश्च मारुतिः ।
वाणी विजानाति हेरर्गुणांश्च स्वयंभुवन्नैव तावद्विशेषान् ॥ १९ ॥
त्रैगुण्यरूपात्परतः सदैव पश्येद्विष्णुं कृष्णरूपं खगेन्द्र ।
शेषो रुद्रो वीन्द्र एते त्रयश्च तमोमात्रे प्रविजानन्ति संस्थम् ॥ २० ॥
वाणीदृष्टान् सविशेषान् गुणांस्ते जानन्ति नो सत्यमेवोक्तमंग ।
उमा सुपर्णी वारुणी चेति तिस्रः महत्तत्वे प्रविजानन्ति संस्थम् ॥ २१ ॥
हरेर्विशेषान् रुद्रदृष्टान् खगेन्द्र जानन्ति नैताः क्वापि देशे च काले ।
इन्द्रादयः प्रविजानन्ति वीन्द्र ह्यहंकारे व्याप्तरूपं हरिं च ॥ २२ ॥

दक्षाद्या वै बुद्धितत्त्वे स्थितं तं जानन्ति ते सोमसूर्यादयश्च ।
विष्णुं हरिं भूततत्त्वे स्थितं च ये चान्ये च प्रविजानन्ति नित्यम् ॥ २३ ॥

अन्ये च पश्यन्ति यथा स्वयोग्यमण्डान्तरस्थं हरिरूपं खगेन्द्र ।
केचित्प्रपश्यन्ति हरेश्च रूपं श्वेतद्वीपस्थं हृदि केचित्सदैव ॥ २४ ॥

एवं प्रकारं प्रविजानीहि वीन्द्र ह्यतो श्रुणु त्वं मम भार्याः षडेताः ।
नीळा तु या मम भार्या खगेन्द्र सर्गे पूर्वस्मिन् कव्यवाहस्य पुत्री ॥ २५ ॥

कन्यैव सा कृष्णपत्नीत्वकामा नान्यं भर्तारं मनसाऽपि ह्यवाप ।
अतीव यत्नं कव्यवाहः खगेन्द्र पितृष्वेकः सर्वदा वै चकार ॥ २६ ॥

तथाऽपि सा नैव भर्तारमाप यतस्तु सा कृष्णनिष्ठैकचित्ता ।
तमब्रवीत्कव्यवाहश्च पुत्रीं पतिं किमर्थं नेच्छसि मूढबुद्धे ॥ २७ ॥

तदाऽब्रवीत्कव्यवाहं च पुत्री हरिं विना सर्वगुणोपपन्नम् ।
जन्मन्यस्मिन् भर्तृता नास्ति देव यतो भर्ता हरिरेवैक एव ॥ २८ ॥

यतो लोके सुस्त्रियः सर्व एव सदा ज्ञेया विधवास्ते हि नित्यम् ।
अनादिनित्यं भुवनैकसारं सुसुन्दरं मोक्षदं कामदं च ॥ २९ ॥

एतादृशं न विजानन्ति यास्तु सर्वास्ता वै विधवाः सर्वदैव ।
निमित्तभूतं भर्तृरूपं च जीवं दैन्योपेतं हरिभक्त्या विहीनम् ॥ ३० ॥

सुकश्मलं नवरन्ध्रैः स्रवन्तं दुर्गन्धयुक्तं सर्वदा कुत्सितं च ।
एतादृशे भर्तृजीवे नु तात प्रयोजनं नास्ति कृष्णं विहाय ॥ ३१ ॥

देवस्त्रियो निजभर्तॄन् विवाह्य तत्र स्थितं प्रीणयन्त्येव नित्यम् ।
अतश्च ताः सधवाः सर्वदैव लोकैर्वन्द्या नात्र विचार्यमस्ति ॥ ३२ ॥

लोके भर्तारो हरिभक्ताः यदि स्युस्तासां स्त्रीणां जन्मसाफल्यमेव ।
अनेकजन्मार्जितपुण्यसंचयैस्तद्भर्तारो हरिभक्ता भवेयुः ॥ ३३ ॥

यद्भर्तारो हरिभक्ता न सन्ति ताभिस्त्याज्यं स्वीयगात्रं भृशं हि ।
स्वभर्तृभूतं कृष्णरूपं हरिं च स्मृत्वा सम्यग् यदि गात्रं त्यजेयुः ॥ ३४ ॥

तदा नैव ह्यात्महत्यादिदोषाः स्त्रीणामेवं निर्णयोऽयं हि शास्त्रे।
यद्भर्तारो न विजानन्ति विष्णुं तासां संगो नैव कार्यः कदाऽपि ॥ ३५ ॥

अनेकजन्मार्जितपुण्यसंचयाद् तद्भर्तारो विष्णुभक्ता भवेयुः।
कलौ युगे दुर्लभा विष्णुभक्ता हरेर्भक्तिः दुर्लभा सर्वदैव ॥ ३६ ॥

हरेः कथा दुर्लभा मर्त्यलोके हरेर्दीक्षा दुर्लभा दुर्लभा च।
हरेस्तत्त्वे निर्णयो दुर्लभो हि हरेर्दासैः संगमो दुर्लभश्च ॥ ३७ ॥

प्रदक्षिणं दुर्लभो वै मुरारेर्नमस्कारो दुर्लभो वै कलौ च।
तद्भक्तानां पालनं दुर्लभं च सद्वैष्णवानां भाषणं दुर्लभं च ॥ ३८ ॥

तन्त्रोक्तपूजा दुर्लभा वै मुरारेर्नामग्रहो दुर्लभश्चैव विष्णोः।
सुवैष्णवानां पूजनं दुर्लभं हि सद्वैष्णवानां भाषणं दुर्लभं च ॥ ३९ ॥

शालग्रामस्पर्शनं दुर्लभं च सद्वैष्णवानां दर्शनं दुर्लभं हि।
गोस्पर्शनं दुर्लभं मर्त्यलोके सद्गायनं दुर्लभं सद्गुरोश्च ॥ ४० ॥

सद्भार्याः सत्पुत्रकाः दुर्लभा हि शेषाचलस्थस्य हरेश्च दर्शनम्।
सुदुर्लभं रङ्गनाथस्य तीरे कावेर्या वै दर्शनं विष्णुपद्याः ॥ ४१ ॥

काञ्चीक्षेत्रे वरदराजस्य सेवा सुदुर्लभा दर्शनं चैव लोके।
सुदुर्लभं दर्शनं रामसेतो- सुदुर्लभा मध्वशास्त्रे च सक्तिः ॥ ४२ ॥

भीमातीरे संस्थितस्यापि विष्णोः सुदुर्लभं दर्शनं चाहुरार्याः।
रेवातीरे संस्थितस्यापि विष्णोः गयाक्षेत्रे विष्णुपादस्य चैव ॥ ४३ ॥

तथा बदर्यां संस्थिस्यापि विष्णोः सुदुर्लभं मर्त्यलोके स्थितानाम्।
शेषाचले श्रीनिवासाश्रमे च तपस्विनो दुर्लभा मर्त्यलोके ॥ ४४ ॥

प्रयागाख्ये माधवस्यापि नित्यं सुदर्शनं दुर्लभं वै नृणां हि ॥ ४५ ॥
अतो नेच्छामि भर्तारं कृष्णादन्यं कदाचन ॥
एवमुक्त्वा स्वपितरं ययौ शेषाचलं प्रति ॥ ४६ ॥

कपिलाख्यमहातीर्थे स्नात्वा चारोहताचलं ।
तत्रस्थं श्रीनिवासं च दृष्ट्वा नत्वा महासती ॥ ४७ ॥
त्रिदिवं समुपोष्याथ गत्वा पापविनाशनीम् ।
तत्र स्नात्वा विवाहार्थमेकान्तं प्रययावथ ॥ ४८ ॥
तस्या उत्तरदिग्भागे क्रोशयुग्मे महातले ।
गर्तभूते हि चैकान्ते चचार तप उत्तमम् ॥ ४९ ॥
ध्यात्वा नारायणं देवं तत्रासीच्च कुमारिका ।
दिव्यवर्षसहस्रान्ते स्तोतुं समुपचक्रमे ॥ ५० ॥

**कुमार्युवाच**

त्वमेव माता च पिता त्वमेव त्वमेव भर्ता च सखा त्वमेव ।
त्वमेव पुत्रश्च गुरुर्गरीयान् मित्रं सखा त्वं मम वल्लभश्च ॥ ५१ ॥
अनाद्यनन्तेष्वपि जन्मसु प्रभो विचार्यमाणा न विजानेऽप्यहं च ।
एते हि सर्वे च निमित्तमात्रतः पित्रादयस्त्वं ह्यनिमित्तमात्रतः ॥ ५२ ॥
अतो मुरारेश्च तवैव भार्या भूयासमित्येव सदा व्रतं मे ।
दुःसंगमात्रादिसमागमं न संसिद्धिरित्येव वदान्यमूर्ते ॥ ५३ ॥
त्वद्दूषकाणां तव दासवर्य विदूषकाणां दर्शनं छिन्दि देव ।
गुरुद्रुहां दर्शनं छिन्दि विष्णो भक्तद्रुहां मित्रतां छिन्दि कृष्ण ॥ ५४ ॥
तव धुग्भिर्भाषणं छिन्दि देव त्वसंगं देहि पदारविन्दे ।
श्रीशैलवासाय नमो नमस्ते नमो नमः श्रीनिवासाय तुभ्यम् ॥ ५५ ॥
स्वामिन् परावर रमेश निदानमूर्ते कालो महानपि गतश्च न दर्शनं ते ।
अनन्तजन्मार्जितसाधनैश्च त्वद्दर्शनं स्यात् च चतुर्भुजस्य ॥ ५६ ॥
कथं मम स्यात्तव दर्शनं प्रभो सर्वैश्च दोषैश्च सुसङ्गतायाः ।
दास्यास्पदायाः तव दासदास्याः प्रसीद देवेश जगन्निवास ॥ ५७ ॥

एवं स्तुतस्तदा विष्णुः श्रीनिवासो दयानिधिः।
प्रादुरासीद्वरदराट् भक्त्या तस्या जनार्दनः ॥ ५८ ॥

वरं वरय भद्रं ते वरदोऽहमिहागतः।
हरिणोदीरितं वाक्यं श्रुत्वा प्राह स्मितानना ॥ ५९ ॥

उवाच परया भक्त्या श्रीनिवासं जगत्प्रभुम्।
अहं हि भार्या भूयासं तव माधव सुन्दर ॥ ६० ॥

इति तस्या वचः श्रुत्वा श्रीनिवासोऽब्रवीद्वचः।

**भगवानुवाच**

अहं कुमारि सुभगे कृष्णजन्मनि भूतले ॥ ६१ ॥

भवामि तव भर्ताऽहं नात्र कार्या विचारणा।
एवमुक्ता तु साकन्या पुण्यराशिं हरिं परम् ॥ ६२ ॥
उवाच परमप्रीता हर्षगद्गदया गिरा।

**कन्योवाच**

कृष्णजन्मन्यहं पत्नी भूयासं प्रथमैव हि ॥ ६३ ॥

संस्कारात्प्रथमं चाहं अंगनाभ्यः समावृणे।
ओमित्युक्तः पुनर्वाक्यमुवाच मधुसूदनः ॥ ६४ ॥

**भगवानुवाच**

कुमार्या विधृतत्वाच्च मत्प्रसादाच्च भामिनि।
कुमारिधारि भविता चेति तस्यै वरं ददौ ॥ ६५ ॥

यत्र स्नानादिकं सर्वं कुर्वन्ति मनुजा भुवि।
तेषां मनोऽभीष्टसिद्धिर्भविष्यति न संशयः ॥ ६६ ॥

इति तस्यै वरं दत्वा तत्रैवान्तरधीयत।
देहं तत्रैव संत्यज्य कुमारी चैव पुत्रिका ॥। ६७ ॥

कुम्भकस्य गृहे जाता नीला नाम्ना तु सा स्मृता ।
कुम्भकस्तु महाभाग नन्दगोपस्य शालकः ।। ६८ ।।

कव्यवाहः स विज्ञेयः पितृणां प्रथमः स्मृतः ।
तस्य गत्वा गृहमहं वृषभाचलवासिनः ।। ६९ ।।

शिवस्य वरतश्चैव त्वजेयः खगसत्तम ।
दितिजान्विनिहत्यैव नीलामाप खगेश्वर ।। ७० ।।

ततो नाग्निजितो राज्ञो गृहे जाता कुमारिका ।
नाग्निजित्कव्यवाहोऽभूत् कन्या नीलाह्वयाऽभवत् ।। ७१ ।।

तस्याः स्वयंवरे चाहं गोवृषान् सप्तसंख्यकान् ।
शिवस्य वरतश्चैवाप्यवध्यान् देवमानुषैः ।। ७२ ।।

बद्ध्वा वृषान्नृपान्जित्वा प्राप्ता नीला मया खग ।
कुम्भकस्य सुता नीला देहेऽस्याः प्राविशं भृशम् ।। ७३ ।।

एक एव यतो यस्मात् तस्मात्तत्रैव साऽविशत् ।
भूमौ द्विधा संप्रजाता कुमार्येव न संशयः ।
भद्राजन्म प्रवक्ष्यामि श्रुणु पक्षीन्द्रसत्तम ।। ७४ ।।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे नीलाविवाहनिर्णयो नाम एकोनविंशोऽध्यायः ।। १९ ।।**

## ॥ विंशोऽध्यायः ॥

### कृष्ण उवाच

या पूर्वसर्गे नलसंज्ञस्य वीन्द्र पुत्री भूत्वा विष्णुपत्नी सकामा ।
प्रदक्षिणं भ्रमणं वै चकार गुणेन भद्रा भद्रसंज्ञा बभूव ॥ १ ॥

कन्याभावे संस्थितां भद्रसंज्ञां पिता नलस्त्वब्रवीत्तां स पश्यन् ।
भद्रे किमर्थं गात्रपीडां करोषि फलं ब्रूहि नमनादेः पितुर्मे ॥ २ ॥

### भद्रोवाच

श्रुणु त्वं मे तात नमस्क्रियादेः फलं वक्तुं कः समर्थो भवेच्च ।
तथाऽप्यहं तव वक्ष्यामि तात यथाशक्त्या श्रुणु सम्यग्घिताय ॥ ३ ॥

सदा हरिर्मम नाथो दयालुरहं हरेस्तव दासानुदासी ।
मां पाहि विष्णोस्तव वन्दे पदे इत्युक्त्वा प्रणामं चाकरोद्दण्डरूपम् ॥ ४ ॥

हरेः प्रणामं त्वितिकर्तव्यशून्यं व्यर्थं तमाहुर्ज्ञानिनस्तच्छ्रुणु त्वम् ।
रमेश मध्वेश सरस्वतीशेत्येवं वदन् प्रणमेद्विष्णुदेवम् ॥ ५ ॥

यथा प्रसन्नाद्देवदेवस्तथा न तुष्टः पूजनात्कर्मतश्च ।
यथानामस्मरणाद्वन्दनाद्वा पापं गच्छेन्न तथान्येन तात ॥ ६ ॥

देहं तु ये पोषयन्त्येव तात हरेः प्रणामैः शून्यभूतं च पुष्टं ।
तदेवाहुर्व्यर्थमेवेति तात तत्पोषकाणां नरके दुःखमाहुः ॥ ७ ॥

यमोऽपि तद्गात्रमुलूखलेषु निधाय पिष्टं मुसलैः करोति ।
यो वा परं न करोत्येव तात प्रदक्षिणं देवदेवस्य विष्णोः ॥ ८ ॥

तस्यैव पादौ तिलयन्त्रे निधाय यमश्च नित्यं प्रकरोति पिष्टं ।
येषां जिह्वा हरिकृष्णेति नाम न वक्ति नित्यं व्यर्थमेवेति चाहुः ॥ ९ ॥

तेषां जिह्वां यमलोके यमस्तु निष्कास्य पिष्टं प्रकरोति नित्यम् ।
काशीनिवासेन च किं प्रयोजनं किं वा प्रयागे मरणेन तात ॥ १० ॥

किं वा रणाग्रे मरणेन सौख्यं किं वा मखादेः समनुष्ठितेन ।
समस्ततीर्थेष्वटनेन किं किमधीतशास्त्रेण सुतीक्ष्णबुध्द्या ॥ ११ ॥
येषां जिह्वाग्रे हरिनामैव नास्ति येषां गात्रैर्नमनं नापि विष्णोः ।
येषां पद्भ्यां नास्ति हरेः प्रदक्षिणं तेषां सर्वं व्यर्थमाहुर्महान्तः ॥ १२ ॥
हर्यर्पणाद्रहितं नाम कस्मात्प्रदक्षिणं नमनं चाहुरार्याः ।
अतो विष्णोर्नमनं कार्यमेव हरेनार्मस्मरणं तात कार्यम् ॥ १३ ॥
जन्म ह्येतद्दुर्लभं नश्वरं तु यथा जलस्थं बुद्बुदं तत्तथैव ।
नो विश्वासं कुरु गात्रे त्वदीये जीवेष्वपि स्वः परश्चेति तात ॥ १४ ॥
सद्यः कृतं नमनं न त्वदीयं सद्यः कृतं स्मरणं न त्वदीयम् ।
कदा प्राप्स्ये मरणं तन्न जाने न विश्वासं कुरु गात्रे महात्मन् ॥ १५ ॥
एतच्छ्रुत्वा नलो वीन्द्र पुत्रीवाक्यं सुनिर्मलम् ।
नमस्कारं च कृतवान् यथाशक्त्या प्रदक्षिणम् ॥ १६ ॥
साऽपि प्रदक्षिणं चक्रे नमस्कारं सदा हरेः ।
एवं बहुदिनं कृत्वा ध्यात्वा नारायणं परम् ॥ १७ ॥
कलेवरं च तत्याज मरणे हरिचिन्तया ।
मत्पितुर्वसुदेवस्य भगिन्या उदरे खग ॥ १८ ॥
कैकेयीति च नाम्ना सा त्वभवद्भद्रसंज्ञका ।
यस्माद्भद्रगुणैर्युक्ता भद्रा सा भद्रनामिका ॥ १९ ॥
तस्यात्मजैश्च कैकेयैः पंचभिः खगसत्तम ।
भक्त्या दत्तामिमां भद्रां प्राप्तवान् खगसत्तम ॥ २० ॥
वक्ष्येऽहं मित्रविन्दायाः पाणिग्रहणकारणम् ।
सावधानमना भूत्वा श्रुणु पक्षीन्द्रसत्तम ॥ २१ ॥
या पूर्वसर्गे पितृपुत्रिका सती ह्यग्निष्वात्ताख्यस्य मित्रानुविन्दा ।
मित्रं हरिं प्राप्तुकामा सदैव तत्रोपायं चिन्तयामास देवी ॥ २२ ॥

हरिप्राप्तौ साधनाः सन्ति तेषु मुख्यं किंस्विच्चिन्तयामास देवी ।
तेषां मध्ये श्रवणं श्रेष्ठमाहुः पुराणानां सात्त्विकानां सदाऽपि ॥ २३ ॥
विष्णोरुत्कर्षो वर्तते यत्र वायोस्तथोत्कर्षः सज्जनानां पुराणे ।
श्राव्यं सदा विष्णुबुध्द्या सदैव नान्यच्छ्राव्यं साधनं तत्र नैव ॥ २४ ॥
यस्मिन् दिने श्रवणं नास्ति विष्णोः तेषां जन्म व्यर्थमाहुः महान्तः ।
स्नानं जपः पञ्चयज्ञं व्रतं वै चेष्टापूर्तं कृच्छ्रचान्द्रे च दत्तम् ॥ २५ ॥
सर्वं व्यर्थं वैष्णवानां च दीक्षा कथां विना सम्यगनुष्ठिता वै ।
यैर्न श्रुतं भागवतं पुराणं ससंप्रदायैर्गुरुभिः संयुतैश्च ॥ २६ ॥
यैर्न श्रुतं भागवतं पुराणं यैर्न श्रुतं ब्रह्मकाण्ड पुराणम् ।
तेषां जन्म व्यर्थमाहुर्महान्तः तस्माच्छ्राव्या हरिवार्ता सदैव ॥ २७ ॥
न यत्र गोविन्दकथामहानदी न यत्र नारायणपादसंश्रयः ।
न यत्र विष्णोः सततं वचोऽस्ति न संवसेत्क्षणमात्रं कथंचित् ॥ २८ ॥
यस्मिन् ग्रामे भागवतं न शास्त्रं न वर्तन्ते भागवता रसज्ञाः ।
यस्मिन् गृहे नास्ति गीतार्थसारः यस्मिन् गृहे नामसहस्रकं च ॥ २९ ॥
तयो रसज्ञा यत्र न सन्ति तत्र न संवसेत्क्षणमात्रं कथंचित् ।
यस्मिन् दिने दिव्यकथा च विष्णोर्न वास्ति जन्तोस्तस्य चायुर्वृथैव ॥ ३० ॥
गतं गतं नात्र विचार्यमस्ति जन्म ह्येतद्दुर्लभं मर्त्यलोके ।
कर्णाकल्पैर्भूषितं सुन्दरं च न सुन्दरं चाहुरार्या रसज्ञाः ॥ ३१ ॥
विष्णोः कथाख्याभरणैश्च युक्तं तदेव कर्णं सुन्दरं चाहुरार्याः ।
तस्मात्सदा भागवतार्थसारं श्रुण्वन्ति ये सततं वाचयन्ति ॥ ३२ ॥
तेषां जन्म स्वस्थमाहुर्महान्तो महत्फलं चास्ति तथैव तेषाम् ।
सर्वेऽपि ते पूजनीया हि लोके न वै शिश्ने चोदरे चैव सक्ताः ॥ ३३ ॥
ये दाक्षिण्यादर्थलोभाद्वदन्ति सदा पुराणं भगवत्तत्वसारम् ।
प्रच्छादयन्ते तत्वगोप्यानि ये तु तेषां गतिः सूर्यसूनुः सदैव ॥ ३४ ॥

ये धर्मकाण्डे कर्मकाण्डे सदैव ह्युत्पादयन्ते सुरुचिं तत्र नित्यम् ।
मौल्येन ये कथयेयुः पुराणं तेषां गतिः सूर्यसूनुः सदैव ॥ ३५ ॥
मौल्येन ये भागवतं पुराणं श्रुण्वन्ति वै हरिशास्त्रार्थतत्त्वम् ।
मौल्येन वेदाध्ययनं प्रकुर्वते तेषां गतिः सूर्यसूनुः सदैव ॥ ३६ ॥
यदृच्छया प्राप्तधनेन ये तु संतुष्टास्ते ह्यत्र योग्याः सदैव ।
धनार्जने ये त्वतितृष्णाभियुक्तास्तेषां न वै भागवतेऽधिकारः ॥ ३७ ॥
मत्वा लोके हरिरेवेति नित्यं अन्तर्यामी नास्ति तदन्य ईशः ।
एवं सदा ये प्रविचिन्तयन्ति योगक्षेमं विभृयाद्विष्णुरेषाम् ॥ ३८ ॥
सद्वैष्णवानामशुभं नास्ति नास्ति प्रदृश्यते संशयज्ञानरूपात् ।
कर्मानुसारेण हरिर्ददाति फलं शुभानामशुभस्य चैव ॥ ३९ ॥
अतस्तदर्थं नैव यत्नं च कुर्याद्धनार्थं वै हरितत्त्वे च कुर्यात् ।
प्रातः स्नात्वा दिव्यमन्त्रश्च जप्त्वा विसृज्य भक्त्या विष्णुनिर्माल्यगन्धम् ॥ ४० ॥
शुचिर्भूत्वा भागवतं पुराणं संश्रावयेत्सर्ववेत्तापि नित्यम् ।
कर्मानुसारेण धनार्जनं च वेदार्जनं शास्त्रसमार्जनं च ॥ ४१ ॥
भविष्यति श्रवणं चापि विष्णोरत्यादरात् श्रवणं दुर्घटं च ।
अत्यादराद् भागवतस्य सारमास्वादयेद्दुर्घटं मर्त्यलोके ॥ ४२ ॥
आस्वाद्य तद्भागवतं पुराणं आनन्दबाष्पैर्युक्तता दुर्घटा च ।
श्रुत्वा तत्त्वानां निर्णयं धारणं च सुदुर्घटं चाहुरार्याः समस्तम् ॥ ४३ ॥
श्रुत्वा तत्त्वानां धारणानन्तरं च कामक्रोधोज्झारणं दुर्घटं च ।
श्रुत्वा तत्त्वानां धारणानन्तरं च तथा योगे दुर्घटं संगतं च ॥ ४४ ॥
श्रुत्वा तत्वानां धारणानन्तरं च सद्वैष्णवानां स्पर्शनं दुर्घटं च ।
एते दोषा ज्ञानपूतानपीह कुर्वन्ति सन्देहयुतान् सदैव ॥ ४५ ॥
अतो ह्यहं श्रवणं सत्कथायाः सदा करिष्ये नात्र विचार्यमस्ति ।
तेनाप्यहं हरिभार्या भवामीत्येवं निश्चित्य श्रवणं संचकार ॥ ४६ ॥

आदेहमेवं श्रवणं च कृत्वा त्यक्त्वा देहं भूतले संप्रजाता ।
मत्पितुर्वसुदेवस्य भगिन्या उदरे खग ।
सुमित्रासंज्ञकायां च जाता वै मित्रविन्दका ॥ ४८ ॥

श्रवणेन हरिं मित्रं प्राप्ता सा मित्रविन्दका ।
अतः सा मित्रविन्देति संज्ञया सम्बभूव ह ॥ ४९ ॥

स्वयंवरे मित्रविन्दा राज्ञां मध्ये तु भामिनी ।
ममांसे व्यसृजन्मालां तां गृहीत्वा खगेश्वर ॥
विधूय नृपतीन्सर्वान् पुरीं प्राप्तः खगेश्वर ॥ ५० ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे भद्राकृतभगवत्पतित्व प्रापकतपश्चर्यादिनिरूपणं नाम विंशोऽध्यायः॥ २० ॥**

## ।। एकविंशोऽध्यायः ।।

### कृष्ण उवाच

कालिन्द्या अपि चोत्पत्तिं प्रवक्ष्यामि खगेश्वर ।
विवस्वान्नाम सूर्योऽभूत्तस्य पुत्री व्यजायत ।। १ ।।

कालिन्दीसंज्ञका वीन्द्र यमुना याऽनुजा स्मृता ।
कृष्णपत्नीत्वकामेन चचार तप उत्तमम् ।। २ ।।

तप आलोचनं प्रोक्तं चित्तं निग्रह उच्यते ।
पूर्वार्जितानां पापानामनुतापस्तपः स्मृतम् ।। ३ ।।

प्रायो नाम तपः प्रोक्तं चित्तं निग्रह उच्यते ।
प्रायश्चित्तमिति प्रोक्तं न तु क्षौरं खगेश्वर ।। ४ ।।

अनुतापयुतं भूतं तच्छृणु त्वं खगेश्वर ।
पूर्वं न तप्तं दिव्यमन्त्रं मुकुन्द तप्तं सदा क्लेशदावानलेन ।। ५ ।।

न वै स्मृतं हरिनामामृतं च सदा स्मृतं हरिदोषादिकं च ।
न तु स्मृतं हरितत्त्वामृतं च सम्यक् श्रुतं लोकवार्तादिकं च ।। ६ ।।

न पूजितं हरिपादारविन्दं सुपूजिताः पुत्रमित्रादिकाश्च ।
न वन्दितं हरिपादारविन्दं सुवन्दितो मित्रपादः सुघोरः ।। ७ ।।

न दृष्टं वै धूपधूम्रैरुपेतं हरेर्वक्त्रं कुन्तलैः संवृतं च ।
पुत्रादिकं लालितं वै मुकुन्द न लालितं तव वक्त्रं मुरारे ।। ८ ।।

सुलालितं भूषणैः पुत्रमित्रं न लालितं सर्वपापापहारि ।
न भुक्तं वै हरिनैवेद्यशेषं मित्रालये षड्रसान्नं च भुक्तम् ।। ९ ।।

सुपुष्पगन्धा नार्पितास्ते मुरारे समर्पिताः पुत्रमित्रादिकेभ्यः ।
सन्तप्ताऽहं पुत्रमित्रादिकेषु कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ।। १० ।।

अवैष्णवान्नैः शिग्रुशाकादिकैश्च ह्यनर्पितान्नैश्च तथाप्यसंस्कृतैः ।
सदाप्यभक्षै रसना च दग्धा कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ।। ११ ।।

अष्टाक्षरैः पूजया दिव्यतीर्थैः विष्णोः परिभ्रामितैः शङ्खतीर्थैः ।
न पावितं मच्छरीरं मुरारे कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ १२ ॥
अनर्पितैर्गन्धपुष्पादिकैश्च ह्यनर्पितैर्भूषणैर्वस्त्रजालैः ।
अवैष्णवैर्दिग्धगन्धादिदोषैः दग्धं गात्रं ह्युद्धरिष्ये कदाहं ॥ १३ ॥
दग्धौ च हस्तौ मम वासुदेव न पूजितं तव विष्णोः प्रतीकम् ।
नेत्रे च दग्धे मम सर्वदाऽपि नालोकितं तव देव प्रतीकम् ॥ १४ ॥
दग्धौ च पादौ मम वासुदेव न गच्छन्तौ क्षेत्रपथं हरेश्च ।
मया कृतं पापजातं मुरारे कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ १५ ॥
मदीयदोषानगणय्य पूर्णदयां कुरु त्वं शुद्धदास्यान्मुकुन्द ।
यावन्ति लोमानि मदीयगात्रे सन्ति प्रभो सर्वदोषैर्विदूर ॥ १६ ॥
तावन्ति पापानि मदीयगात्रे कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ।
अनन्तदेहैः पतिपुत्रैर्गृहैश्च मित्रैर्धनैः पशुभृत्यादिकैश्च ॥ १७ ॥
सुखं नाप्तं ह्यणुमात्रं मुकुन्द सेवा त्यक्ता तव देवस्य विष्णोः ।
इतः परं पुत्रमित्रादिकं च यास्ये नाहं तव दासी भवामि ॥ १८ ॥
ये ये ब्रूयुः पुत्रमित्रादिकैश्च सम्यक् सुखं जायते मर्त्यलोके ।
तेषामास्ये मूत्रविष्ठादिकं च सम्यक्सदा पतितं चेति जाने ॥ १९ ॥
मित्रादीनां यत्कृतं द्रव्यजातं वृथा गतं मलरूपं च जातम् ।
सद्वैष्णवानां यत्कृतं द्रव्यजातं हरिप्राप्तेः कारणं स्यात्सदैव ॥ २० ॥
एतादृशं तत्तुजातं मुकुन्द अलं ह्यलं तेन दुःखं च भुक्तम् ।
संगाद्दत्तात् सज्जनानां सदा त्वं विना च त्वं दुर्जनानां च संगात् ॥ २१ ॥
संगैः सदा दुर्जनानां मुरारे गात्रं दग्धं न विरागेण युक्तम् ।
एतादृशाहं कां गतिं वा मुकुन्द यास्ये न जाने दयया मां च पाहि ॥ २२ ॥
एतादृशो ह्यनुतापः खगेन्द्र प्रायश्चित्तं न च क्षौरादिकं च ।
भानोः कन्या ह्यनुतापं च कृत्वा विचारयामास हरेः सुतत्त्वम् ॥ २३ ॥

सर्वोत्तमो हरिरेकः सदैव यतः पूर्णः सर्वगुणैस्ततश्च ।
सृष्टौ यस्माज्जायते विश्वजातं अतो हरिः सर्वगुणैश्च पूर्णः ॥ २४ ॥

यो देवानां नामधा एक एव यतो ब्रह्माद्या नैव पूर्णाः समस्ताः ।
लक्ष्मीप्रसादाच्चिरपुण्येन जातो यथायोग्यं गुणपूर्णो विरिंचः ॥ २५ ॥

न लक्ष्मीवद्गुणपूर्णो विरिंचो न विष्णुवद्गुणपूर्णा रमाऽपि ।
न वायुवद्भारती चापि पूर्णा न शेषवद्वारुणी चापि पूर्णा ॥ २६ ॥

न रुद्रवत्पार्वती पूर्णरूपो ह्यन्येऽप्येवं नैव पूर्णाः सदैव ।
आलोचनं चैवमेषा हि कृत्वा तपश्चक्रे यमुनायाश्च तीरे ॥ २७ ॥

तदा चाहं यमुनायाश्च तीरं पार्थेन साकं मृगयामनश्च ।
दृष्ट्वा च तां तत्र तपश्चरन्तीं तदाऽब्रुवं मत्सखायं च पार्थम् ॥ २८ ॥

हे पार्थ शीघ्रं गच्छ कन्यासमीपं त्वं पृच्छ कस्माद्धि तपः करोषि ।
एवं प्रोक्तस्तत्समीपं स गत्वा पृष्ट्वा चैतत्कारणं शीघ्रमेव ॥ २९ ॥

आगत्य मामवदत्फाल्गुनोऽयं सर्वं वृत्तान्तं ह्यंजसा मत्समीपे ।
ततस्त्वहं सुमुहूर्ते च तस्याः पाणिग्रहं कृतवांस्तत्र सम्यक् ॥ ३० ॥

तस्याश्च तापात्सन्ततं मद्विचारात्प्रसन्नोऽहं सन्ततं सुप्रसन्नः ।
पूर्णानन्दे रममाणस्य नित्यं तया च मे किं सुखं स्यात्खगेन्द्र ॥ ३१ ॥

मया विवाहोऽनुग्रहार्थं हि तस्या अंगीकृतो न तु सौख्याय वीन्द्र ।
तथा वक्ष्ये लक्षणायाः स्वरूपं पाणिग्रहे कारणं चापि वीन्द्र ।
श्रुणुष्व तत्तव वक्ष्यामि गोप्यं सच्छिष्यके नास्ति गोप्यं गुरोश्च ॥ ३२ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे कालिन्द्या विवाहहेतुनिरूपणं नाम एकविंशोऽध्यायः ॥ २१ ॥**

## ॥ द्वाविंशोऽध्यायः ॥

### कृष्ण उवाच

या लक्षणा पूर्वसर्गे खगेन्द्र पुत्री ह्यभूद्धर्हिषदस्य वेत्तुः ।
सुलक्षणैः संयुतत्वाद्यतः सा सुलक्षणेति प्रथिता खगेन्द्र ॥ १ ॥

यथा लक्ष्मीर्लक्षणैः सा सुपूर्णा यथा हरिर्लक्षणैर्वै सुपूर्णः ।
यथा वायुर्लक्षणैः पूर्ण एव यथा गायत्री लक्षणैः सा सुपूर्णा ॥ २ ॥

तथा रुद्राद्या लक्षणैर्नैव पूर्णा रुद्रादिवल्लक्षणा नैव पूर्णा ।
गुणेनैव धर्मतः किंचिदेव तथाऽनुसन्धानात् विव्रियते नाम चापि ॥ ३ ॥

तस्मादाहुर्लक्षणेत्येव सर्वे तल्लक्षणं श्रुणु चादौ खगेन्द्र ।
नारायणे पूर्णगुणे रमेशे द्वात्रिंशत्संख्यानि सुलक्षणानि ॥ ४ ॥

सन्त्येव पक्षीन्द्र वदाम्यनुक्रमान्मत्तः श्रुत्वा मोक्षमाप्नोति नित्यम् ।
यः सप्तपादः षण्णवत्यङ्गुलो यश्चतुर्हस्तः पुरुषो दुर्घटश्च ॥ ५ ॥

एतत्सर्वं मिलितं चैकमेव हरेर्विष्णोर्लक्षणं चाहुरार्याः ।
मुखं स्निग्धं वर्तुलं पुष्टिरूपं द्वितीयं तल्लक्षणं चाहुरार्याः ॥ ६ ॥

हनुर्यस्यानुन्नतं चास्ति वीन्द्र तल्लक्षणं प्राहुरार्यास्तृतीयम् ।
यद्दन्ता वै तीक्ष्णसूक्ष्माश्च सन्ति तल्लक्षणं चाहुरार्याश्चतुर्थम् ॥ ७ ॥

यस्याधरे रक्तिमा त्वस्ति वीन्द्र तल्लक्षणं पंचमं चाहुरार्याः ।
हस्ता रक्ताः सन्ति वै वीन्द्र यस्य तल्लक्षणं प्राहुरार्याश्च षष्ठम् ॥ ८ ॥

यस्मिन्नखाः सन्ति रक्ताः सुशोभाः तल्लक्षणं सप्तमं चाहुरार्याः ।
यस्मिन्कपोले रक्तिमा त्वस्ति वीन्द्र तल्लक्षणं ह्यष्टमं प्राहुरार्याः ॥ ९ ॥

यस्मिन् करे शंखचक्रादिरेखा वर्तन्ते तन्नवमं प्राहुरार्याः ।
यस्योदरं तन्तुरूपं सुपुष्टं वलित्रयैरंकितं सुन्दरं च ॥ १० ॥

तल्लक्षणं दशमं प्राहुरार्या एकादशं निम्ननाभिं तदाहुः ।
ऊरुद्वयं यस्य च मांसलं वै तल्लक्षणं द्वादशं प्राहुरार्याः ॥ ११ ॥

कटिर्हि दीर्घा पृथुलाऽस्ति यस्य त्रयोदशं लक्षणं चाहुरार्याः ।
यस्यास्ति वक्षः सुपरिष्ठितं वै चतुर्दशं लक्ष्म तदाहुरार्याः ॥ १२ ॥

समुन्नतं शिश्नमथो हि लक्ष्म यस्यास्ति तत्पंचदशं वदन्ति ।
सुताम्रकं पादतलं खगेन्द्र तल्लक्षणं षोडशं प्राहुरार्याः ॥ १३ ॥

निम्नौ च गुल्फौ सप्तदशं तदाहुर्ग्रीवारूपं प्राहुरष्टादशं च ।
एकोनविंशं त्वक्षिपद्मं सुरक्तं प्राहुर्बाहुं जानु विंशं तथैव ॥ १४ ॥

विस्तीर्णोरश्चैकविंशं तदाहुः सिंहास्कन्धं ह्युत्तरं विंशमाहुः ।
त्रयोविंशं सूक्ष्ममास्यं तदाहुश्चतुर्विंशं सुप्रसन्ने च दृष्टी ॥ १५ ॥

ह्रस्वं लिंगं मार्दवं चापि वीन्द्र तल्लक्षणं पंचविंशं वदन्ति ।
समौ च पादौ कटिजानु चोरू षड्विंशमाहुश्च समे च जंघे ॥ १६ ॥

समानहस्तौ समकर्णौ मिलित्वा द्वात्रिंशत्कं लक्षणं प्राहुरार्याः ।
द्वात्रिंशत्कं लक्षणं वै मुकुन्दे द्वात्रिंशत्कं लक्षणं वै रमायाम् ॥ १७ ॥

द्वात्रिंशत्कं लक्षणं ब्रह्मणोऽपि तद्भारत्याः प्रवदन्त्येव सत्यम् ।
तथा च शंका सममेव चक्रिणेत्येवं सदा मा कुरु निर्णयं ब्रुवे ॥ १८ ॥

एकस्य वा लक्षणस्यापि विष्णोर्लक्ष्मीरन्तं नैव सम्यक् प्रपेदे ।
अतोऽनन्तैर्लक्षणैः संयुतं च हरिं चाहुर्लक्षणज्ञाः सदैव ॥ १९ ॥

जानाति लक्ष्मीर्लक्षणं वायुदेवः स्वापेक्षया ह्यतिरिक्तं खगेन्द्र ।
स्वलक्षणापेक्षया भारती तु शतैर्गुणैरधिकं वेधसोऽपि ॥ २० ॥

खगेन्द्र तस्माल्लक्षणे साम्यचित्तं विष्ण्वादीनां सर्वदा मा कुरुष्व ।
अष्टाविंशतिं चापि रुद्रादिकानां भ्रूनेत्रयोर्लक्षणेनैव हीनाः ॥ २१ ॥

अलक्षणं मन्यते यद्धि तस्य दुर्लक्षणं नैव तच्चिन्तनीयम् ।
अष्टाविंशतिं लक्षणं वै हरस्य न भारतीवच्चिन्तनीयं खगेन्द्र ॥ २२ ॥

अतो हरः क्रोधरूपी सदैव [1]तेषामभावात्सत्यमुक्तं मयैतत् ।
अतो द्वयं नास्ति रुद्रे खगेन्द्र शिश्नोदरे किंचिदाधिक्यमस्ति ॥ २३ ॥

सप्ताधिकैर्विंशतिलक्षणैस्तु सम्यग् युताः स्वस्त्रियो लक्षणाद्याः ।
षड्विंशत्या लक्षणैश्चापि युक्ता वारुण्याद्या पंचविंशैश्च चेन्द्रः ॥ २४ ॥

चतुर्विंशतिभिश्चैव युक्तो नासावायोर्ध्यधिका विंशतिश्च ।
लक्षणैश्चैकविंशत्या शची युक्ता न संशयः ॥ २५ ॥

प्रवहो विंशकैर्युक्तो यम एकोनविंशकैः ।
पाश्यष्टादशभिर्युक्तो दशसप्तयुतोऽनलः ॥ २६ ॥

वैवस्वतो षोडशभिः मित्रः पंचदशैर्युतः ।
चतुर्दशैस्तु धनपः पावकस्तु त्रयोदशैः ॥ २७ ॥

गङ्गा द्वादशभिर्युक्ता बुध एकादशैर्युतः ।
शनिस्तु दशसंख्याकैः पुष्करो नवभिर्युतः ॥ २८ ॥

अथ षोडशसाहस्रं भार्यास्तु मम वल्लभाः ।
अष्टभिश्चैव संयुक्ताः सप्तभिः पितरस्तथा ॥ २९ ॥

षड्भिश्च देवगन्धर्वाः पंचभिस्तदनन्तराः ।
चतुर्भिः क्षितिपाः प्रोक्ताः त्रिभिरन्ये च संयुताः ॥ ३० ॥

उदरे किंचिदाधिक्यं ह्रस्वे पादे च कर्णयोः ।
शिखाधिक्यं विना विप्र भार्यायां च शिवस्य च ॥ ३१ ॥

लक्षणायां पंच दोषाः शिरोगुल्फादिकं विना ।
नाभ्याधिक्ये सहैवाष्टौ दोषाः सन्त्यातिवाहिके ॥ ३२ ॥

---

१. तयो ।

जंघाधिक्ये सहैवाष्टौ दोषाः शच्याः सदा स्मृताः।
एवमेव हि दोषाश्चाप्यूहनीयाः खगेश्वर ॥ ३३ ॥

दुर्लक्षणैः सदा वीन्द्र संयुतः कलिरेव हि।
महोदरो लम्बनाभिरीषामात्रोग्रदंष्ट्रकः ॥ ३४ ॥

अन्धकूपगभीराक्षो लम्बकर्णोष्ठनासिकः।
लम्बगुल्फो वक्रपादः कुनखी श्यावदन्तकः ॥ ३५ ॥

दीर्घजंघो दीर्घशिश्नस्त्वेकांडश्चैकनासिकः।
रक्तश्मश्रू रक्तरोमा वक्रास्यः संप्रकीर्तितः ॥ ३६ ॥

दग्धपर्वतसंकाशो रक्तपृष्ठः कलिः स्मृतः।
अलोमशीर्षा संप्रोक्तः रक्तगण्डकपोलकः ॥ ३७ ॥

ललाटे पाण्डुता नित्यं वामस्कन्धे करे खग।
कूर्मदृष्टिर्दोषवादी तथा वै घर्घरस्वरः ॥ ३८ ॥

अत्याशी चातिपानश्च स्तनौ शुष्कफलोपमौ।
ऊरौ नवांकितारोमस्तथा पृष्ठे च मस्तके ॥ ३९ ॥

ललाटे त्रीणि दीर्घे तु समे द्वौ संप्रकीर्तितौ।
सर्पाकारस्तु यो मत्स्यस्तस्य शिश्ने प्रकीर्तितः ॥ ४० ॥

पादत्राणसमो मत्स्यो रसनाग्रे प्रकीर्तितः।
शिश्नाकारश्च यो मत्स्यो गुदे तस्य प्रशस्यते ॥ ४१ ॥

वृश्चिकाकारमत्स्यस्तु पदोस्तस्य प्रशस्यते।
श्वाकारश्चापि मत्स्यो वै मुखे तस्य प्रकीर्तितः ॥ ४२ ॥

हस्ते तु बहुरेखाः स्युर्लोमनासापुटे स्मृतम्।
अतिदीर्घं तु चाङ्गुष्ठं कनिष्ठं चातिदीर्घकम् ॥ ४३ ॥

दुर्लक्षणं त्वेवमादि कलावस्ति ह्यनेकशः ।
सुलक्षणान्यनेकानि मयि सन्ति खगेश्वर ।। ४४ ।।

द्वात्रिंशल्लक्षणो विष्णुर्ब्रह्मणोऽपेक्षयैव तत् ।
इत्यभिप्रायगर्भेण ब्रह्मणोक्तं तव प्रभो ।। ४५ ।।

ब्रह्मोक्तस्य मयोक्तस्य विरोधो नास्ति सत्तम ।
मयोक्तस्यैव व्यत्यासः कम्बुग्रीवे प्रदृश्यते ।। ४६ ।।

रक्ताधरं रक्ततालु चैकीकृत्य मयोदितम् ।
अतो विरोधो नास्त्येव तथाऽज्ञानात्प्रतीयते ।। ४७ ।।

सप्ताधिकैर्विंशतिलक्षणैस्तु समायुताः याः स्त्रियो लक्षणाद्याः ।। ४८ ।।

भगे नेत्रे च हस्ते च स्तने कुक्षौ तथैव च ।
भारत्यपेक्षया पंचभिर्न्यूना त्वस्ति लक्षणैः ।। ४९ ।।

न रुद्रवन्न चान्यानि लक्षणानि खगेश्वर ।
षड्विंशत्या लक्षणैश्चापि युक्ता वारुण्याद्याः षड्लक्षणैश्चापि हीनाः ।। ५० ।।

कर्णे कुक्षौ नासिकाकेशपाशे गुल्फे भगे किंचिदाधिक्यमस्ति ।
इन्द्रो युक्तः पंचविंशत्या खगेन्द्र सदा हीनो लक्षणैः सप्तसंख्यैः ।। ५१ ।।

हस्ते पादे उदरे कर्णयोश्च शिश्ने गुल्फे त्वधरोष्ठेऽधिकं च ।
चतुर्विंशत्या लक्षणैश्चापि युक्तो नासिक्यवायुस्तद्वदेवाष्टभिश्च ।। ५२ ।।

नाभ्यां गुल्फे हनुरंघ्र्योश्च स्कन्धे द्विजे नेत्रे ह्यधरोष्टेऽधिकं च ।
त्रयोविंशत्या लक्षणैश्चापि युक्ता शची तथा नवदोषैश्च युक्ता ।। ५३ ।।

भगे केशे ह्यधरोष्ठे च कर्णे जंघे गण्डे वक्षसि गुल्फयोश्च ।
तथोत्तरोष्ठे किंचिदाधिक्यमस्ति चैवं विजानीहि खगेन्द्रसत्तम ।। ५४ ।।

द्वाविंशत्या लक्षणैः संयुतस्तु दशभिर्दोषैः प्रवहो नाम वायुः ।
एकाधिकैर्विंशतिलक्षणैस्तु तथा चैकादशभिर्दोषतोऽर्कः ।। ५५ ।।

तद्विंशत्या लक्षणैः संयुतस्तु तदा दोषैर्द्वादशभिश्च चापः।
एकोनविंशत्या लक्षणैश्चापि युक्तस्त्रयोदशभिस्तदभावैर्युतोऽग्निः ॥ ५६ ॥

अष्टादशभिर्लक्षणैः संयुतस्तु वैवस्वतस्तदभावैश्चतुर्दशभिः।
मित्रस्तु सप्तदशभिर्लक्षणैः संयुतः खग ॥ ५७ ॥

सदोषैः पंचदशभिः संयुक्तो नात्र संशयः।
तैश्च षोडशभिर्युक्तो धनपो नात्र संशयः ॥ ५८ ॥

तदभावैः षोडशभिः संयुक्तः संप्रकीर्तितः।
तैः पंचदशभिश्चैव युक्तोऽग्रेः ज्येष्ठपुत्रकः ॥ ५९ ॥

तैः सप्तदशभिर्दोषैः संयुक्तो नात्र संशयः।
तैश्चतुर्दशभिश्चैव गंगा संपरिकीर्तिता ॥ ६० ॥

तथाष्टादशभिर्दोषैः संयुता नात्र संशयः।
तैस्त्रयोदशभिश्चैव संयुतो बुध एव तु ॥ ६१ ॥

दोषैरेकोनविंशत्या संयुतो नात्र संशयः।
शनिर्विंशतिदोषेण युतो द्वादशलक्षणैः ॥ ६२ ॥

लक्षणैश्चैकादशभिः पुष्करः परिकीर्तितः।
एकविंशतिसंख्याकैरसद्भावैः प्रकीर्तितः ॥ ६३ ॥

दशभिर्लक्षणैर्युक्ताः पितरो ये चिराः खग।
त्रयो विंशतिदोषैश्च संयुता नात्र संशयः ॥ ६४ ॥

अष्टभिर्लक्षणैर्युक्ता देवगन्धर्वसत्तमाः।
दोषैश्चतुर्विंशतिभिः संयुक्ताः परिकीर्तिताः ॥ ६५ ॥

सप्तलक्षणसंयुक्ता गन्धर्वा मानुषात्मकाः।
यैस्तु पंचविंशतिभिर्दोषैः संयुक्ताः संप्रकीर्तिताः ॥ ६६ ॥

षड्गुणैः क्षितिपा युक्ता षड्विंशत्या च दोषतः ।
तदन्ये पंचभिर्युक्ताश्चतुर्भिः केचिदेव हि ।। ६७ ।।

त्रिभिः केचित्ततो हीना न सन्ति खगसत्तम ।
यस्मिन्नरे क्षितिपे वा खगेन्द्र ह्याधिक्यं यद्दृश्यते लक्षणस्य ।। ६८ ।।

न ते नरा नैव ते वै क्षितीशाः सर्वे ते वै ह्युत्तमाः सर्व एव ।
ये देवा ये च दैत्याश्च सर्वेऽप्येवं खगाधिप ।। ६९ ।।

लक्षणालक्षणैश्चैव क्रमेणोक्ता न संशयः ।
लक्षणा सप्तविंशत्या लक्षणैः संयुता खग ।। ७० ।।

अतः सा लक्षणा ज्ञेया द्वात्रिंशल्लक्षणैर्न हि ।
पितुर्गृहे वर्धमाना सदाऽपि पितुः कुटुम्बं पोषयितुं खगेन्द्र ।। ७१ ।।

उवाच सा पितरं दीयमानमन्नादिकं पुत्रमित्रादिकेषु ।
सदाऽपि ये त्वनुसन्धानेन युक्ता अन्तर्गते तत्र तत्र स्थिते च ।। ७२ ।।

अज्ञात्वैव चान्नपानादिकं च दत्तं सन्तो व्यर्थमेवं वदन्ति ।
हरिं वक्ष्ये तत्र तत्र स्थितं च तं वै श्रुणु त्वादरेणाद्य नित्यम् ।। ७३ ।।

बालो हरिर्बालरूपेण कृष्णः क्षीरादिकं नवनीतं घृतं च ।
गृह्णाति नित्यं भूषणं वस्त्रजातमेवं दद्यात्सर्वदा विष्णुतुष्ट्यै ।। ७४ ।।

मित्रैर्हरिः केशवाख्यो मुकुन्दो भुंक्ते दत्तं ह्यन्नपानादिकं च ।
पूर्वं दद्यात्सर्वदा वै गृहस्थो धन्यो भवेदन्यथा व्यर्थमेव ।। ७५ ।।

गृह्णाति नित्यं माधवाख्यो हरिश्चेत्येवं ज्ञात्वा देयमन्नादिकं च ।
एवं ज्ञात्वा दीयमानेन नित्यं प्रीणाति विष्णुर्नान्यथा व्यर्थमेव ।। ७६ ।।

गृहे नित्यं वासुदेवो हरिस्तु प्रीणाति नित्यं तत्र तिष्ठन् सुपर्ण ।
एवं ज्ञात्वा स्वगृहं सर्वदैव ह्यलंकुर्याद्धातुरूपैः सदैव ।. ७७ ।।

गोविन्दाख्यस्तिष्ठति वैष्णवानां पुत्रैर्युतस्तिष्ठति वासुदेवः ।
मित्रे मुकुन्दः शालके चानिरुद्धः नारायणो द्विजवर्ये सदाऽऽस्ति ॥ ७८ ॥
गोष्ठे च नित्यं विष्णुरूपी हरिस्तु ह्यश्वे सदा तिष्ठति वामनाख्यः ।
संकर्षणः शूद्रवर्णे सदाऽस्ति वैश्ये प्रद्युम्नस्तिष्ठति सर्वदैव ॥ ७९ ॥
जनार्दनः क्षत्रजातौ सदाऽस्ति दाशेषु नित्यं महिदासो हरिस्तु ।
मह्यां नित्यं तिष्ठति सर्वदैव ह्युपेन्द्राख्यो हरिरेकः सुपर्ण ॥ ८० ॥
गजे सदा तिष्ठति चक्रपाणिः सदाऽन्तरे तिष्ठति विश्वरूपः ।
नित्यं शुनि तिष्ठति भूतभावनः पिपीलिकायामपि सर्वदैव ॥ ८१ ॥
त्रिविक्रमो हरिरूप्यन्तरिक्षे सर्वत्र जातावनन्तरूपी हरिस्तु ।
हरेर्नवर्णोऽस्ति न गोत्रमस्ति न जातिरीशे सर्वरूपे विचित्रे ॥ ८२ ॥
एवं ज्ञात्वा सर्वदा लक्षणा तु हरिं सदा प्रीणयामास देवी ।
भक्त्या मयेत्थं क्रियमाणया हरिः पतिर्मम स्यादिति चिन्तयाना ॥ ८३ ॥
तत्याज देहं विष्णुपत्नीत्वकामा मद्रेषु वै वीन्द्र पुत्री प्रजाता ।
स्वयंवरे लक्षणाया अहं च भित्वा लक्ष्यं भूपतीन् द्रावयित्वा ॥ ८४ ॥
पाणिग्राहं लक्षणायाश्च कृत्वा गत्वा पुरीं रमयामास देवीम् ।
तथैवाहं जाम्बवत्या विवाहं मत्पत्नीत्वे कारणं त्वां ब्रवीमि ॥ ८५ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे लक्षणाविवाहहेतुनिरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥**

## ॥ त्रयोविंशोऽध्यायः ॥

### कृष्ण उवाच

सोमस्य पुत्री पूर्वसर्गे बभूव भार्या मदीया जाम्बवती मम प्रिया ।
तासां मध्ये ह्यधिका किंचिद्रुद्रादिभ्यः पंचगुणैर्विहीना ॥ १ ॥
रमावेशो बलवान्स्याच्च तासु तदा तासां प्रीयते केशवोऽलम् ।
यदावेशो ह्रासमुपैति लक्ष्म्याः कामादिभ्यो विंशगुणाधिकाः स्युः ॥ २ ॥
यदावेशो बलवान्स्याद्रमायास्तदा जाम्बवती शेषतुल्या प्रियत्वे ।
यदावेशो ह्रासमुपैति वीन्द्र तदा तासां साम्यमाहुर्महान्तः ॥ ३ ॥
लक्ष्म्यावेशः किंचिदस्त्येव नित्यमतस्ताभ्यः किंचिदाधिक्यमस्ति ।

### गरुड उवाच

तासां मध्ये जाम्बवती तु कृष्ण ह्याराधनं कीदृशं सा चकार । ४ ॥
तन्मे ब्रूहि कृपया विश्वमूर्ते चाधिक्ये वै कारणं ताभ्य एव ॥
गरुडेनैवमुक्तस्तु भगवान् देवकीसुतः ।
मेघगम्भीरया वाचा चोवाच विनतासुतम् ॥ ५ ॥

### कृष्ण उवाच

या पूर्वसर्गे सोमपत्री बभूव पितुर्गृहे वर्तमानाऽपि साध्वी ।
जन्म स्वकीयं सार्थकं वै चकार पित्रा साकं विष्णुशुश्रूषणेन ॥ ६ ॥
शुश्राव नित्यं सत्पुराणानि चैव सदा चक्रे विष्णुपादप्रणामम् ।
चक्रे सदा तारकस्यापि विष्णोः प्रदक्षिणं स्मरणं कुर्वती सा ॥ ७ ॥
पित्रा साकं सा तु कन्या खगेन्द्र वैराग्ययुक्ता श्रवणात्संबभूव ।
कोशं च मित्रं द्विरदादिकं च ह्यनर्घ्यरत्नानि गृहादिकं च ॥ ८ ॥
सर्वं ह्येतन्नश्वरं चैव मेने ममाधीनं हरिणा वै कृतं च ।
येनैव दत्तं पुत्रमित्रादिकं च तेनाहृतं वेदनां नैव चक्रे ॥ ९ ॥

अद्यैव विष्णुः परमो दयालुः दयां कृतवांस्तेन सुष्ठु ।
पित्रा साकं कन्यका सा तु वीन्द्र सदात्मनि ह्यमले वासुदेवे ॥ १० ॥

एकान्तत्वं सुष्ठु भक्त्या गता सा यदृच्छया सोपपन्नेन देवी ।
अकल्पयत्स्वात्मनो वीन्द्रवृत्तिं महीं चचार बधिरान्धा यथैव ॥ ११ ॥

सा वै वित्तं विष्णुपादारविन्दे दुःखार्णवोत्तारके संचकार ।
वागिन्द्रियं खग सम्यक् चकार हरेर्गुणानां वर्णने सा सदैव ॥ १२ ॥

हस्तौ च विष्णोर्गृहमार्जनादौ चकार देवी गात्रमलापहारम् ।
श्रोत्रं च चक्रे हरिसत्कथोदये मोक्षादिमार्गे ह्यमृतोपमे च ॥ १३ ॥

नेत्रं च चक्रे प्रतिमादिदर्शने ह्यनादिकालीनमलापहारणे ।
सद्वैष्णवानां स्पर्शने चैव संगे निर्माल्यगन्धानुविलेपने त्वक् ॥ १४ ॥

घ्राणेन्द्रियं सा हरिपादसौरभे चकार संसारविमुक्तिदे च ।
जिह्वेन्द्रियं हरिनैवेद्यशेषे श्रीमत्तुलस्यादिविमिश्रिते च ॥ १५ ॥

पादौ हरेः क्षेत्रपथानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं तु दास्ये नतु काम्यकामया तथोत्तमश्लोकजनाश्रयां रतिम ॥ १६ ॥

निष्कामरूपे च मतिं चकार वागिन्द्रियं संस्तवने चकार ।
एवं सदा कर्मसमूहमात्मनः समर्पयित्वा परमेशपादयोः ॥ १७ ॥

तीर्थाटनार्थन्तु जगाम पित्रा साकं हरेः प्रीणनाद्यर्थमेव ।
आराध्य विष्णुं ब्राह्मणान्विष्णुभक्तानादौ गृहे वस्त्रसंभूषणाद्यैः ॥ १८ ॥

पश्चात्संकल्पं कारयामास देवी विष्णोरग्रे तीर्थयात्रार्थमेव ।
यावत्कालं तीर्थयात्रा मुकुन्दं तावत्कालं तूर्ध्वरेता भवामि ॥ १९ ॥

यावत्कालं तीर्थयात्रां करिष्ये तावद्देहि वैष्णवानां च सङ्गम् ।
हरेः कथाश्रवणं स्यान्मुकुन्द नावैष्णवानां सङ्गिनामङ्गसङ्गम् ॥ २० ॥

सुहृज्जनैः पुत्रमित्रादिकैश्च तीर्थाटनं नैव कुर्यां मुकुन्द
कुर्वन्ति ये काम्यया तीर्थयात्रां तेषां सङ्गं कुरु दूरे मुकुन्द ॥ २१ ॥

शालिग्रामं ये विहायैव यात्रां कुर्वन्ति तेषां किं फलं प्राहुरार्याः ।
यदा तीर्थानां दर्शनं स्यात्तदैव शालग्रामं पुरतः स्थापयित्वा ॥ २२ ॥

तीर्थाधिपं प्रणमेद्विष्णुमूर्तिं तथा प्रतीकं विष्णुदेवस्य नान्यत् ।
तीर्थाटनं पादचारैः कृतं चेत् पूर्णं फलं प्राहुरार्याः खगेन्द्र ॥ २३ ॥

पादत्राणं पादरक्षां च कृत्वा तीर्थाटनं पादहीनं तदाहुः ।
यो वाहने तुरगे चोपविष्टस्तीर्थाटनं कुरुते चार्धहीनम् ॥ २४ ॥

वृषादीनां वाहने पादमाहुः परान्नानां भोजने व्यर्थमाहुः ।
महात्मनां वेदविदां यतीनां परान्नानां भोजने नैव दोषः ॥ २५ ॥

सङ्कल्पयित्वा परमादरेण जगाम सा तीर्थयात्रार्थमेव ।
आदौ स्नात्वा हरिनिर्माल्यगन्धं विसर्जयित्वा श्रवणं संचकार ॥ २६ ॥

पित्रा साकं भोजनं चापि कृत्वा ह्यग्रे दिने क्रोशमेकं जगाम ।
तत्र द्विजान् पूजयित्वान्नपानै रात्रौ तत्त्वं श्रावयामास देवी ॥ २७ ॥

एवं यात्रां ये प्रकुर्वन्ति नित्यं तेषां यात्रां सफलां प्राहुरार्याः ।
विना कथां तीर्थयात्रां खगेन्द्र यात्राफलं व्यर्थमाहुर्महान्तः ॥ २८ ॥

दिवारात्रौ ये न श्रुण्वन्ति दिव्यां हरेः कथां तीर्थमार्गे खगेन्द्र ।
व्यर्थं व्यर्थं तस्य चायुर्गतं वै अश्वादिवद्गमनं विद्धि तस्य ॥ २९ ॥

गङ्गादीनां दर्शनात्पापनाशः ह्यश्वादीनां अपराधं वदस्व ॥
क्षेत्रस्थविष्णोर्दर्शनात् पापनाशः क्षेत्रस्थानामपराधं क्षमस्व ॥ ३० ॥

क्षेत्रस्थविष्णोः पूजनात्पापनाशः पूजावतां अपराधं वदस्व ।
जपादीनां कुर्वतां पापनाशो विष्णोर्ध्यानात् सद्य एवाघनाशः ॥ ३१ ॥

अनुसन्धानाद्रहितं सर्वमेव कृतं कर्म व्यर्थमेवेति चाहुः ।
अतो हरेः पापविनाशिनीं कथां श्रुत्वा विष्णोर्भक्तिमान्स्यात्खगेन्द्र ॥ ३२ ॥

दृष्ट्वा दृष्ट्वा हरिपादाङ्कितं च स्मृत्वा स्मृत्वा भक्तिमान्स्यात्खगेन्द्र ।
पित्रा साकं कन्यका सापि वीन्द्र शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ॥ ३३ ॥

जगाम सा मार्गमध्ये हरिं च सन्तर्पयामास रमापतिं च ।
कदा द्रक्ष्ये श्रीनिवासस्य वक्षः श्रीवत्सरत्नैर्भूषितं विस्तृतं च ॥ ३४ ॥

कदा द्रक्ष्ये श्रीनिवासस्य कुक्षिं वलित्रयेणाङ्कितं सुन्दरं च ।
कदा द्रक्ष्ये श्रीनिवासस्य कण्ठं महर्लोकस्याश्रयं सर्वदैव ॥ ३५ ॥

कदा द्रक्ष्ये श्रीनिवासस्य नाभिं सदान्तरिक्षस्याश्रयं वै सुपूर्णम् ।
कदा द्रक्ष्ये वदनं वै मुरारेर्जनोलोकस्याश्रयं सर्वदैव ॥ ३६ ॥

शिरः कदा श्रीनिवासस्य द्रक्ष्ये सत्यस्य लोकास्याश्रयं सर्वदैव ।
कटिं कदा श्रीनिवासस्य द्रक्ष्ये भूमेर्लोकस्याश्रयं सर्वदैव ॥ ३७ ॥

कदा द्रक्ष्ये श्रीनिवासस्य चोरू तलातलस्याश्रयं सर्वदैव ।
कदा द्रक्ष्ये श्रीनिवासस्य जानु सुकोमलं सुतलस्याश्रयं च ॥ ३८ ॥

कदा द्रक्ष्ये श्रीनिवासस्य जंघे रसातलस्याश्रयं सर्वदैव ।
कदा द्रक्ष्ये पादतलं हरेश्च पाताललोकस्याश्रयं सर्वदैव ॥ ३९ ॥

इत्थं मार्गे चिन्तयन्ती च देवी शेषाचले शेषदेवं ददर्श ।
फणैः सहस्रैः सुविराजमानं नानाद्रुमैर्वानरैर्वानरीभिः ॥ ४० ॥

अनन्तजन्मार्जितपुण्यसंचयान्मयाद्य दृष्टः परमाचलो हि ।
तद्दर्शनात्बाष्पकलाकुलेक्षणा सद्यः समुत्थाय ननाम मूर्ध्ना ॥ ४१ ॥

मुखं च दृष्ट्वा नमनं च कार्यं पृष्ठादिभागे नमनं न कार्यम् ।
साऽपि द्विषट्कं नमनं च चक्रे शालग्रामं स्थापयित्वा पुरोऽस्य ॥ ४२ ॥

इत्थं कार्यं वैष्णवैः पर्वतस्य ह्यवैष्णवैर्विपरीतं च कार्यम् ।
मध्वान्तस्थः पर्वताग्रेऽस्ति नित्यं रमाब्रह्माद्यैः पूजितः श्रीनिवासः ॥ ४३ ॥

सुसत्तमं परमं श्रीनिवासं द्रक्ष्येऽथाहं ह्यारुरुक्षेऽचलं च ।
इत्येवमुक्त्वा कपिलाख्यतीर्थे स्नानं चक्रे सा स्वपित्रा सहैव ॥ ४४ ॥

अत्रैवास्ते श्रीनिवासो हरिस्तु द्रवेण रूपेण न चान्यथेति ।
आदौ स्नात्वा मुण्डनं तत्र कृत्वा तीर्थश्राद्धं कार्यमस्मिन् सुतीर्थे ॥ ४५ ॥

गोभूहिरण्यादिसमस्तदानं दत्वा शैलं चारुरोहाथ साध्वी ।
शालग्रामं स्थापयित्वाऽस्य चाद्रेः पुनः प्रणामं साऽपि चक्रे सुभक्त्या ॥ ४६ ॥

सोपानानां शतपर्यन्तमेवमारुह्य सा ह्युपविष्टा तु तत्र ।
शुश्राव सा भागवतं पुराणं शुश्राव वै वेंकटाद्रेः प्रशंसाम् ॥ ४७ ॥

जैगीषव्याद्रुद्ररूपात्सकाशात् शुश्राव तत्त्वं वेंकटाद्रेश्च सर्वम् ॥ ४८ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे वेंकटगिरियात्राक्रमनिरूपणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**

## ॥ चतुर्विंशोऽध्यायः ॥

### जैगीषव्य उवाच

कन्ये श्रुणु त्वं वेंकटाख्याचलस्य सोपानानां पुण्यमारोहणस्य ।
श्रीगीतायाः पठनं चैव कुर्वन्नारोहणं कुरुते सर्वलोकः ॥ १ ॥
पदे पदे श्रीनिवासश्च देवस्त्वलं ह्यलं प्रीयते भक्तवर्गः ।
तं प्रीणयन्मोक्षमायान्ति सर्वे हरौ तुष्टे किमलभ्यं च कन्ये ॥ २ ॥
सोपानदेशे यः पुराणं श्रुणोति तदा कृता सर्वतीर्थादियात्रा ।
तदा देवाः प्रस्तुवन्तीह मार्गे सदा हरिं श्रीनिवासं गुरुं च ॥ ३ ॥
सोपानानां महिमानं च श्रुत्वा शालग्रामं स्थापयित्वा च तत्र ।
नमस्कृत्वा पुनरेवापि सा तु सोपानानि त्वारुहोहाथ साध्वी ॥ ४ ॥
सोपानानां वीन्द्र चारोहणेन ह्यवैष्णवानां हरितोषो न चैव ।
तेनैव तेषां साधनं भूय एव तमस्यन्धे पातयितुं खगेन्द्र ॥ ५ ॥
स्थले स्थले चैवमेवाऽपि कार्यं जैगीषव्यं पुनरेवाह देवी ।

### कन्योवाच

जैगीषव्यः श्रीनिवासो हरिस्तु ब्रह्मादीनां दृश्यते श्रीनिवासः ॥ ६ ॥
वदस्व मे मानुषाणां यथैव संसारिणां मानुषाणां यथैव ।
यादृक्प्रकाशो दृश्यते श्रीनिवासे वदस्व त्वं कृपया जैगिषव्य ॥ ७ ॥
एवं पृष्टो जैगिषव्यो हरस्तु ह्युवाच कन्यां सोमपुत्रीं सतीं च ।

### जैगीषव्य उवाच

ब्रह्मादीनां दृश्यते श्रीनिवासो ह्यनन्तसूर्याधिककान्तिवच्च ॥ ८ ॥
रुद्रादीनां दृश्यते श्रीनिवासः स सूर्यलक्षाधिकान्तिवच्च ।
स विद्युद्वन्मानुषाणां रमेशो ऋष्यादीनां चन्द्रवद्दृश्यते च ॥ ९ ॥

*अपरोक्षीणां मानुषाणां हरिस्तु नक्षत्रवद्दृश्यते वासुदेवः ।
*अपरोक्षीणां ऋषीणां सर्वदैव सूर्यैकवद्दृश्यते वेंकटेशः ॥ १० ॥
संसारिणां वेंकटेशः खगेन्द्र सदेहवद्दृश्यते वै प्रकाशः ।
मिथ्यावतां दृश्यते श्रीनिवासः पाषाणवन्नैल्यरूपप्रकाशः ॥ ११ ॥
शिलामात्रं दृश्यते वै कलौ च नृणां सर्वेषां श्रीनिवासो हरिस्तु ।
कलौ स्वरूपं श्रीनिवासस्य देवि न मानुषाः प्रविजानन्ति सर्वे ॥ १२ ॥
यतः कलौ तामसा राजसाश्च तत्सङ्गिनः सात्त्विकाः केचिदेव ।
अतो भक्ताः दुर्लभा वै कलौ च ये दृश्यन्ते भक्तवत्तेन भक्ताः ॥ १३ ॥
शिश्नोदरे भरणे चैव निष्ठास्तदर्थं वै ते च कुर्वन्ति यात्राम् ।
भक्तिर्ज्ञानं दुर्लभं वै कलौ च [1]भक्त्या हरेर्दर्शनं दुर्लभं च ॥ १४ ॥
भक्तिस्वरूपं तव वक्ष्ये च देवि यो ज्ञानपूर्वः परमस्नेह एव ।
नवद्वेषैर्विधुरो भक्तियुक्तो नव द्वेषाञ्छृणु भद्रे च सम्यक् ॥ १५ ॥
जीवाभिदा हरिणाऽप्राकृतेन स्वतन्त्रेण ह्यस्वतन्त्रस्य नित्यम् ।
ज्ञानानन्दैः परिपूर्णे हरौ च गुणैरपूर्णो हरिरित्येव चिन्ता ॥ १६ ॥
श्रीब्रह्मरुद्रादिदिवौकसां सदा तथा द्विजानां साम्यरूपस्य चिन्ता ।
विष्णोः सकाशाद् ब्रह्मरुद्रादिकानां सदाऽधिक्यालोचनं द्वेष एव ॥ १७ ॥
विष्णोर्देहे हस्तपादादिकानां भेदज्ञानं द्वेषमाहुर्महान्तः ।
अवताराणां छेदभेदादिकं च तथोत्पत्तिर्मरणस्यापि चिन्ता ॥ १८ ॥
तद्भक्तानां द्वेषणं चाहुरार्यास्तद्वाक्यानां दूषणं द्वेष एव ।
नवद्वेषैः संयुता एव लोके कन्ये दृश्यन्ते न तु भक्ताः कदाचित् ॥ १९ ॥

## कन्योवाच

जैगीषव्य ब्रूहि मे के च भक्ता भक्तिं कथं दर्शयामासुरेते ।
तेषां हरिः श्रीनिवासो महात्मा त्राता सदा भक्तवर्गे दयालुः ॥ २० ॥

---

** अपरोक्षीणामिति छान्दसं रूपम् । १. तेषाम् ।

जैगीषव्यस्त्वेवमुक्तो महात्मा ह्युवाच कन्यां संस्मरन् भक्तवर्यः ।

**जैगीषव्य उवाच**

प्रह्लादाद्या श्रीनिवासस्य भक्ताः कृत्वा नृसिंहे चोत्तमां भक्तिमेव ।। २१ ।।
अवाप साम्राज्यमनुत्तमं च ज्ञानं नृसिंहात्समवाप पश्चात् ।
पराशरः श्रीनिवासस्य भक्तो भक्तिं कृत्वा व्यासरूपं हरिं च ।। २२ ।।
स्तुत्वा तेन ज्ञानतत्त्वं ह्यवाप्य जगाम मोक्षं भक्तिसंवर्धितात्मा ।
यो नारदः श्रीनिवासस्य भक्तो भक्तिं कृत्वा गर्भवासे हरौ च ।। २३ ।।
तया भक्त्या ब्रह्मपुत्रत्वमाप ज्ञानप्राप्त्या तेन मुक्तिं जगाम ।
यो ह्यंबरीषः श्रीनिवासस्य भक्तः कृत्वा भक्तिं परदेवे हरौ च ।। २४ ।।
जप्त्वा ज्ञानं प्राप्य दुर्वासकश्चाप्यवाप मोक्षं तेन संवर्धितात्मा ।
मुचुकुन्दो वै श्रीनिवासस्य भक्तो वैराग्यतो भक्तिदार्ढ्यं च कृत्वा ।। २५ ।।
तत्त्वज्ञानं प्राप्य विष्णोर्महात्मा ह्यवाप मोक्षं तेन संवर्धितात्मा ।
स पुण्डरीकः श्रीनिवासस्य भक्तः पित्रादिष्टो विष्णुभक्तिं च कृत्वा ।। २६ ।।
हरिप्रसादाज्ज्ञानमनुत्तमं चाप्यवाप मोक्षं भक्तिसंवर्धितात्मा ।
ब्रह्मा च वायुश्च सरस्वती च ज्ञातव्याः सर्वे ऋजुयोगिनश्च ।। २७ ।।
अच्छिन्नभक्ताश्च सदा मुरारेर्न काम्यभक्ताः शुद्धरूपा हि ते च ।
गिरीशनागेशखगेशदेवास्तथा कामो गुरुचन्द्रेन्दुसूर्याः ।। २८ ।।
जलेशोऽग्निर्मनुधर्मौ कुबेरः विघ्नेशनासत्यमरुद्गणाश्च ।
पर्जन्यमित्रादय एव सर्वे सदा ह्येते श्रीनिवासस्य भक्ताः ।। २९ ।।
विश्वामित्रो भृगुरौर्वश्च कुत्सो मरीचिरत्रिः पुलहः क्रतुश्च ।
शक्तिर्वसिष्ठो गौतमो वै पुलस्त्यो भारद्वाजः श्रीनिवासस्य भक्ताः ।। ३० ।।
मान्धाता नहुषोऽम्बरीषसगरौ राजा पृथुर्हैहयो
इक्ष्वाकुर्भरतो ययातिसुनलौ धर्मो विकुक्षिस्तथा ।

उत्तानश्च विभीषणो दशरथो ह्येते महाज्ञानिनः
श्रीमद्वेंकटनायकस्य च गुरोर्भक्ताः सदा संस्मृताः ॥ ३१ ॥

भागीरथी समुद्रश्च यमुना च सरस्वती ।
गोदावरी नर्मदा च कृष्णा भीमरथी तथा ॥ ३२ ॥

सरयूफल्गुकावेरी गण्डकीकपिला तथा ।
इत्येताश्च हरेर्भक्ताः सन्ति चात्रैव भामिनि ॥ ३३ ॥

अभिप्रायं त्वत्र वक्ष्ये श्रुणु कन्ये महासति ।
यत्र प्रवर्तते मार्गे कथा विष्णोर्महात्मनः ॥ ३४ ॥

वर्तन्ते वैष्णवा यत्र हरितत्त्वार्थबोधकाः ।
तत्रैव भक्ताः सर्वेऽपि सन्ति विष्णोस्तथैव च ॥ ३५ ॥

ये देवयात्रां परमात्मवार्तया कुर्वन्ति ते हरिभक्ताशच नान्ये ।
यतौ हरौ परमे वैष्णवानां सर्वं निष्ठामेति कृत्यं खगेन्द्र ॥ ३६ ॥

शेषाचलं समारभ्य ह्यन्नवस्त्रादिभूषणं ।
यो न दद्यादभक्तः स ततः को नु परः पशुः ॥ ३७ ॥

भक्ता हरेः श्रीनिवासाचले च [1]गङ्गादिरूपेण च तत्र तत्र ।
तिष्ठन्ति सेवार्थमुरुक्रमस्य तेषां पूजा नैव कार्या च देवि ॥ ३८ ॥

अभिप्रायं तत्र वक्ष्ये श्रुणु त्वं तत्र स्थले वस्त्रगन्धादिधूपैः ।
पुराणोक्ता अपि [2]भेदेन पूज्या दृष्ट्वा च तान्वन्दयेत्प्राज्ञ एव ॥ ३९ ॥

सद्ब्राह्मणान्वन्दयेत्पादमूले हस्तौ च द्वौ सम्पुटीकृत्य देवि ।
साष्टाङ्गरूपं वन्दनं चैव विष्णोः कुर्यात्तथा गुरवे विष्णुबुध्द्या ॥ ४० ॥

गङ्गादीनां वन्दनं कार्यमेव साष्टाङ्गं वै तुलसीनां तथैव ।
अश्वत्थानां नमनं कार्यमेव गवादीनां नमनं मानसेन ॥ ४१ ॥

---

१. लिङ्गादिरूपेण । २. भद्रे न ।

पूजा सदा देवदेवस्य विष्णोः कार्या भक्त्या वैष्णवैरेव नान्यैः ।
ये नामकाः विष्ण्वभक्ताः सदैव पूजां विष्णोर्नैव कुर्याच्च देवि ॥ ४२ ॥
मोहाद्यो वै पूजयेद्देवदेवं महाऽधर्माद्याति चान्धं तमो वै ।
ब्रह्मादिनामानि हरेर्हि देवि विष्णुः स्वनामानि ददौ दिवौकसाम् ॥ ४३ ॥
नादाद्धरिः केशवादीनि कन्ये स्वकं पुरं प्रविहायैव राजा ।
एवं मयोक्तं कन्यके सर्वमेतदेतत्परं सम्यगारोहणीयम् ॥ ४४ ॥
गोविन्द नारायण माधवेति मया युष्माभिराराधनीयम् ।
सर्वे मिलित्वा पुनरेवं खगेन्द्र समारुहन्वेङ्कटाद्रिं गृणन्तः ॥ ४५ ॥
हरेर्नामान्यत्र पूर्वं गृणन्तस्त्वासादयन्तः श्रीनिवासस्य नाम ।
द्रष्टुं सर्वे श्रीनिवासं तथैव कुर्वन्तस्ते तलशब्दं नदन्तः ॥ ४६ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे कन्याजैगिषव्यसंवादे जैगिषव्येन श्रीनिवासगुणानुवर्णनं नाम चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥**

## ॥ पंचविंशोऽध्यायः ॥

इति कृष्णवचः श्रुत्वा तार्क्ष्यः कृष्णमुवाच ह ।
कथं आस्वादनं चक्रुरेतद्विस्तार्य मे वद ॥ १ ॥

### श्रीकृष्ण उवाच

भोः श्रीनिवास तव नामैव चैतन्नामस्वामिन् नतु नामैव नामि ।
यां ब्रह्माद्या आश्रयन्तीति यस्मात्तस्माद्रमा श्रीरिति नाम चाप ॥ २ ॥

रमाश्रयत्वान्नितरां सर्वदा चेत्यतो हरिः श्रीनिवासाभिधानः ।
भो श्रीनिवासेति तु नर्तयन्तो रोमांचमात्रास्तलशब्दकारिणः ॥ ३ ॥

अद्यैव द्रक्ष्ये तव वक्त्रं मुकुन्द ह्यद्यैवाहं कृतकृत्यो भवानि ।
भोः केशवाद्यैव पदारविन्दं सन्दर्शयित्वा सुदयां कुरुष्व ॥ ४ ॥

ब्रह्माणमाहुश्च पुराणमाहुः कशब्दवाच्यं सर्वलोकेशमाहुः ।
ईशं चाहू रुद्रमित्येव चाहुस्तत्प्रेरकं सृष्टिसंहारकार्ये ॥ ५ ॥

अतो हरिः केशवनामधेयो भोः केशवेति च नर्तयन्तः ।
आनन्दबाष्पैः संस्तुवन्तोऽनुजग्मुर्नारायणेति वदन्त एव ॥ ६ ॥

अरा दोषास्तद्विरुद्धा गुणाश्च नाराश्च तेषामाश्रयत्वान्मुरारिः ।
नारायणेति वदन्ति लोके नरानुबन्धात्सर्वमुक्ताः खगेन्द्र ॥ ७ ॥

नाराः प्रोक्ता आश्रयत्वाच्च तेषामतोऽपि नारायण एव वीन्द्र ।
मुक्ताश्रयेति ननृतुश्च सर्वे नरेण चाण्डादिकमेव सर्वम् ॥ ८ ॥

यदुत्पन्नं तेन नारं खगेन्द्र सदा तस्याप्याश्रयत्वाच्च वीन्द्र ।
नारायणेति प्रवदन्ति लोके ह्यनन्तब्रह्माण्डविसर्जकत्वात् ॥ ९ ॥

गोविन्द देहि तव दर्शनं च वेदाश्च सर्वेऽपि गोशब्दवाच्याः ।
गोभिश्च सर्वैः प्रतिपाद्यतो यतो ह्यतश्च गोविन्द इति स्मृतः सदा ॥ १० ॥

भो वेदवेद्येति ननृतुश्च सर्वे ह्यानन्दबाष्पैश्च समन्विताश्च ।
देहि प्रभो वै तव दासदासाश्चतुर्दशे भुवने सर्वदाऽपि ॥ ११ ॥

यतस्त्वेवं वसतीति वासुश्चात्रैव नित्यं क्रीडते सर्वदैव ।
यतो देवे त्येवमाहुर्महान्तस्त्वतो हरिं वासुदेवेति चाहुः ॥ १२ ॥

भो वासुदेवेति ननृतुः सदैव भो माधवेति ननृतुश्च सर्वे ।
लक्ष्मीपते चेति वदन्ति सर्वे धनीति शब्दः स्वामिवाची यतो हि ॥ १३ ॥

भो माधवेति प्रननृतुश्च सर्वे लक्ष्मीस्तु मेति प्रवदन्ति लोके ।
धवः शब्दः स्वामिवाची यतो हि लक्ष्म्या धवं माधवं चाहुरार्याः ॥ १४ ॥

अतः प्राज्ञा माधवेति ब्रुवन्ति लक्ष्मीपते पाहि सदैव भक्तान् ।
ते वै ब्रुवन्तो ननृतुश्च जग्मुर्विष्णो सदाऽस्मान् परिपाहि नित्यम् ॥ १५ ॥

सर्वत्र यस्माद्विततोऽसि तस्मादित्यादिनामानि गृणन्त एव ।
जग्मुश्च सर्वे ददृशुश्च तीर्थं भक्त्योपेताः श्रीनिवासं स्मरन्तः ॥ १६ ॥

## कन्योवाच

किं नामकं तीर्थमिदं मुनीन्द्र किं कार्यमत्र प्रवदास्मान् कृतीश ।
कस्मै प्रसन्नो भगवान् श्रीनिवासो ह्यस्मिंस्तीर्थे वद विस्तरेण ॥ १७ ॥

## जैगीषव्य उवाच

कन्ये श्रुणु त्वं ह्यभवत्सुबुद्धिमान् प्रह्लादसंज्ञो हरिभक्तवर्यः ।
निष्कामबुध्या तु यदा जगाम शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ॥ १८ ॥

अस्मिंस्थले दैत्यकुमारकान् प्रति हरेश्च तत्त्वं ह्युपदिष्टवान्प्रभुः ।
नृसिंहरूपं श्रीनिवासं भजध्वं सुदुर्लभं मानुषं जन्म चैव ॥ १९ ॥

तत्रापि विष्णोर्नृहरेश्च तत्त्वं सुदुर्लभं सुष्ठु यात्रा तथैव ।
यस्यां यात्रायां यत्र कुत्रापि देशे हरेः कथा वर्तते दैत्यवर्याः ॥ २० ॥

तत्र स्थले हरिरास्ते सदैव यतो व्याप्तः सर्वतो वै नृसिंहः ।
एतच्छ्रुत्वा दैत्यकुमारकास्ते प्रह्लादमूचुर्भक्तवर्यं हरेश्च ॥ २१ ॥

व्याप्तो हरिश्चेत्कथमत्र वै सखे न दृश्यते जलरूपी नृसिंहः ।
स चैवमुक्तो दानवानां सुतैश्च तुष्टाव विष्णुं परमादरेण ॥ २२ ॥

तव स्वरूपं दर्शय मेऽत्र विष्णो स्वयोग्यरूपं दैत्यकुमारकाणाम् ।
इति स्तुतः श्रीनिवासो हरिस्तु तस्मिंन्नन्तर्जलरूपी समायात् ॥ २३ ॥

अस्मिन् स्नानं ये प्रकुर्वन्ति तीर्थे तेषां ज्ञानं परमं दृढं स्यात् ।
अत्र स्नाने मानुषाणां च तात बुद्धिर्न हि स्यात्कलिकाले विशेषात् ॥ २४ ॥

दत्वा वरं दैत्यवराय विष्णुरन्तर्दधे जलपूर्णे सुकुण्डे ।
अद्याप्यास्ते जलमध्ये नृसिंहः प्रह्लादोऽपि दैत्यकुमारकैः सह ॥ २५ ॥

तस्मिंस्तीर्थे परितस्तत्र तत्र जयेति शब्दः श्रूयते चापराह्णे ।
इदं तीर्थं नारसिंहाभिधं च कन्ये स्नानं ह्यत्र कार्यं मनुष्यैः ॥ २६ ॥

स्नानं चक्रुस्तत्र तीर्थे च सम्यग् दीपं दत्वा द्विजवर्याय मुख्यम् ।
द्रष्टुं पुनः श्रीनिवासं प्रजग्मुर्गोविन्द गोविन्द इति ब्रुवन्तः ॥ २७ ॥

मुख्यप्राणाधिष्ठितं स्थानमाप्य ह्युपाविशत्तत्र देवी ह्युवाच ।
जैगीषव्यः प्राह संहृष्टचित्तो ब्रवीमि श्रुत्वा कुरु सर्वं समग्रम् ।
आद्यद्वारं श्रीनिवासस्य दृष्ट्वा संप्रार्थयेद्देवदेवं रमेशम् ॥ २८ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ २९ ॥

मानसान् वाचिकान् दोषान् कायिकानपि सर्वशः ।
वैष्णवद्वेषहेतून्मे भस्मसात्कुरु माधव ॥ ३० ॥

आद्यद्वारे श्रीनिवासस्य देवि सम्यक् स्मरेद्विजयं वै जयं च ।
दक्षद्वारे श्रीनिवासस्य देवि चण्डं प्रचण्डं संस्मरेत्सम्यगेव ॥ ३१ ॥

पाश्चात्यभागे श्रीनिवासस्य देवि नन्दं सुनन्दं संस्मरेद्देवभक्त्या ।
सव्यद्वारे श्रीनिवासस्य कन्ये स्मरेत्कुमुदं कुमुदाक्षं तथैव ॥ ३२ ॥

पश्चादग्रे प्रविशेद्भक्तिपूर्वं कदा द्रक्ष्ये सादरेणैव देवम् ।
प्रदक्षिणद्वादशकं च कृत्वा पदे पदे संस्मरेत् श्रीनिवासम् ॥ ३३ ॥

श्रीस्वामितीर्थे सम्यगाचम्य नत्वा स्नात्वा नत्वा भूवराहं च देवि ।
आद्यद्वारं प्रविशेद्भक्तिपूर्वं गोविन्द गोविन्द इति ब्रुवन्वै ॥ ३४ ॥

पश्चाद्धरेर्नमनं कार्यमेव साष्टाङ्गरूपं प्रविशेद्देवगेहम् ।
पुनर्विशन् दूरदेशे स्थितः सन् पीठस्थदेवान् मनसा हि चिन्तयेत् ॥ ३५ ॥

मध्ये पीठं श्रीनिवासं च देवी नारायणं प्रणमेत् पूर्वमेव ।
देवस्य सव्ये पीठभागाद्बहिश्च नमस्कार्यं गुरवे वायवे वै ॥ ३६ ॥

पीठाद्बहिर्दक्षिणे ब्रह्मविष्णुरुद्रादिभ्यः सर्वदेवेभ्य एव ।
पीठस्याग्राच्चाप्यधस्ताप्रदेशे ह्याग्नेयकोणे प्रणमेद्वाहनाय ॥ ३७ ॥

नैर्ऋत्यभागे वासुदेवाय सुभ्रु नमस्कुर्याद्वैष्णवैः सर्वदाऽपि ।
वायव्यकोणे भक्तिपूर्वं सुदुर्गां नमस्कुर्याद्भक्तिसंवर्धितात्मा ॥ ३८ ॥

पीठस्योर्ध्वं ह्यग्निकोणे च देवि धर्माधिभूताय नमो यमाय ।
पीठस्योर्ध्वं नैर्ऋते कोणदेशे ज्ञानाधिपं प्रणमेद्वायुदेवम् ॥ ३९ ॥

पीठस्योर्ध्वं वायुकोणे च सुभ्रु वैराग्याणामधिपं चैव रुद्रम् ।
पीठस्योर्ध्वं त्वीशकाले च देवि ऐश्वर्याणामधिपं चेन्द्रदेवम् ॥ ४० ॥

पीठस्य पूर्वे प्रणमेन्निर्ऋतिं च ह्यधर्माणामधिपं चैव सुभ्रु ।
देवस्य पीठस्य च दक्षिणे च दुर्गां नमेदुग्ररूपाभिधां च ॥ ४१ ॥

पीठस्य कन्ये प्रणमेत्पश्चिमे चावैराग्याणामधिपं कामदेवम् ।
देवस्य पीठस्योत्तरे रुद्रदेवमनैश्वर्याणामधिपं संस्मरेच्च ॥ ४२ ॥

पीठस्य मध्ये प्रणमेद्धै वराहं सदा कन्ये परमं पूरुषाख्यम् ।
तस्योपरिष्टाच्छक्तिसंज्ञां च लक्ष्मीमाधाररूपां प्रणमेच्चैव नित्यम् ॥ ४३ ॥

तस्योपरिष्टाद्वायुकूर्मं नमेच्च तस्योपरिष्टात् शेषकूर्मं नमेच्च ।
तस्योपरिष्टादभिमानिनीं भुवो भूदेवतां प्रणमेच्चैव सुभ्रूः ॥ ४४ ॥

तस्योपरिष्टाद्वरुणं संस्मरेच्च क्षीरोदधेरधिपं चैव देवम् ।
तस्योपरिष्टात्प्रणमेच्च लक्ष्मीं श्वेतद्वीपाख्यां कन्यके पूजयेच्च ॥ ४५ ॥

तस्योपरिष्टात्प्रणमेच्च लक्ष्मीं महादिव्यां मण्टपसंज्ञकां च ।
पीठस्य मध्ये पद्मसंज्ञां च लक्ष्मीं सम्यङ् नमेत्पद्ममध्ये च देवीम् ॥ ४६ ॥

पद्मस्थदेवस्य च दक्षिणे च सूर्यं नमेद्दीपरूपं च भद्रे ।
पद्मस्थदेवस्य च वामभागे श्रियं नमेद्दीपरपां च देवीम् ॥ ४७ ॥

पद्मस्थदेवस्य तु चाग्रभागे हुताशनं दीपरूपं नमेच्च ।
देवस्याग्रे भूमिनाम्नीं नमेच्च सत्त्वाभिमानां संस्मरेच्चैव नित्यम् ॥ ४८ ॥

पर्यङ्करूपां श्रीनिवासस्य विष्णोस्तमोभिमानां सन्नमेच्चैव दुर्गाम् ।
पूर्वादिदिक्पीठसोपानरूपमात्मानमेकं प्रणमेच्च देवम् ॥ ४९ ॥

दक्षस्थदिक्पीठसोपानरूपमन्तरात्मानरूपं च देवम् ।
पश्चाच्च दिक्पीठसोपानरूपं परात्मानं सन्नमेच्चैव देवम् ॥ ५० ॥

सव्यस्थदिक्पीठसोपानरूपं ज्ञानात्मानं प्रणमेच्चैव देवि ।
पद्मस्य पूर्वस्थदले च देवीं स्त्रीरूपभूतां विमलाख्यां रमां च ॥ ५१ ॥

ब्रह्मादिदेवान् प्रणमेच्चैव नित्यं ह्याग्नेयकोणस्थदले श्रुणु त्वम् ।
उत्कर्षनाम्नीं परमां च देवीं नमेद्रमां ब्रह्मवायू च शेषम् ॥ ५२ ॥

दक्षस्थपद्मस्य दलाष्टके च नारायणश्रीकेरशेषादिकानाम् ।
स्त्रीरूपेभ्यो नमनं कार्यमेव सुवायुकोणस्थदलादिकेषु ॥ ५३ ॥

योगाख्यनारायणब्रह्मवायुविपादिकानां शेषरुद्रादिकानां ।
स्त्रीरूपेभ्यो नमनं कार्यमेव हीशानकोणस्थदलेषु चैव ॥ ५४ ॥

प्राह्वयाख्यनारायणब्रह्मवायुविपादिकानां शेषरुद्रादिकानाम् ।
स्त्रीरूपेभ्यो नमनं कार्यमेव तथैव पद्मस्य च मध्यभागे ॥ ५५ ॥

सत्याख्यनारायणब्रह्मवायुविपादिकानां शेषरुद्रादिकानाम् ।
स्त्रीरूपेभ्यो नमनं कार्यमेव सव्यस्थपद्मस्य दलेषु चैव ॥ ५६ ॥

अनुग्रहाख्या विष्णुलक्ष्मीश्च देवी वायोर्वियच्छेषरुद्रादिकानाम् ।
स्त्रीरूपाणां नमनं कार्यमेव सुयोगपीठस्थस्वरूपभूतम् ॥ ५७ ॥

सदा नमेच्छ्रीमदनन्तसंज्ञमेवं नमेच्छ्रीनिवासं च देवम् ।
श्रीनिवासाय वामे तु लक्ष्मीं च प्रणमेद्बुधः ॥ ५८ ॥

श्रीनिवासस्य सव्ये तु धरायै प्रणमेच्छुभे ।
पीठाद्बहिः पूर्वभागे कृद्धोल्कं प्रणमेच्छुभम् ॥ ५९ ॥

महोल्कं दक्षिणे चैव वीरोल्कं पश्चिमे तथा ।
उत्तरे च नमस्कुर्याद् द्यूल्काय च महात्मने ॥ ६० ॥

चतुर्ष्वपि च कोणेषु सहस्रोल्कं नमेत्सुधीः ।
पूर्वे तु वासुदेवाय नमस्कुर्याच्च दक्षिणे ॥ ६१ ॥

संकर्षणाय देवाय प्रद्युम्नाय च पश्चिमे ।
उत्तरे ह्यनिरुद्धाय नमस्कुर्यादतन्द्रितः ॥ ६२ ॥

आग्नेये च नमस्कुर्यादेकदा कन्यके शुभे ।
जयायै च नमस्कुर्यान्नैर्ऋत्ये चापि वायवे ॥ ६३ ॥

कृत्यै चैव नमस्कुर्यात् ईशान्ये शान्तिसंज्ञकाम् ।
केशवाय नमः पूर्वे तथा नारायणाय च ॥ ६४ ॥

माधवाय नमस्कुर्यादाग्नेये कन्यके शुभे ।
गोविन्दाय नमस्कुर्याद्दक्षिणे विष्णवे तथा ॥ ६५ ॥

मधुसूदनाय भो कन्ये नमस्कुर्याच्च नैर्ऋते ।
पश्चिमे त्रिविक्रमायैव वामनाय तथैव च ॥ ६६ ॥

वायव्ये श्रीधरायैव नमस्कुर्याच्च भामिनि ।
उत्तरे तु महाकन्ये हृषीकेशाय वै नमः ॥ ६७ ॥

तथा वै पद्मनाभाय नमस्कुर्यादतन्द्रितः ।
दामोदराय चैशान्ये नमस्कुर्याच्च भामिनि ॥ ६८ ॥

चतुर्थावरणे पूर्वे मत्स्यकूर्माय वै नमः ।
वराहाय नमस्कुर्यादाग्नेये कन्यके शुभे ॥ ६९ ॥

दक्षिणे श्रीनृसिंहाय वामनाय नमो नमः ।
भार्गवाय नमस्कुर्यान्नैर्ऋते शुद्धतेजसे ॥ ७० ॥

पश्चिमे राघवायाथ तथा कृष्णाय वै नमः ।
बुद्धाय च नमस्कुर्यात् वायवे कन्यके शुभे ॥ ७१ ॥

उत्तरे कल्किरूपाय चानन्ताय नमो नमः ।
ईशान्ये विश्वरूपाय नमस्कुर्यादतन्द्रितः ॥ ७२ ॥

पंचमावरणे पूर्वे अनन्ताय नमो नमः ।
दक्षिणे ब्रह्मणे चैव पश्चिमे वायवे ततः ॥ ७३ ॥

उत्तरे चैव चेशान्ये नमस्कुर्यादतन्द्रितः ।
आग्नेये वारुणीं चैव गायत्रीं चैव निर्ऋतौ ॥ ७४ ॥

वायव्ये भारतीं चैव चेशान्ये गिरिजां नमेत् ।
गिरिजावामभागे तु सौपर्णीं चैव संनमेत् ॥ ७५ ॥

प्रागिन्द्राय नमस्कुर्यात्सायुधाय तथैव च ।
सपरिग्रहाय श्रीविष्णोः पार्षदाय च संनमेत् ॥ ७६ ॥

आग्नेये चाग्नये तुभ्यं सायुधायेति पूर्ववत् ।
दक्षिणे तु यमायैव नैर्ऋत्यां निर्ऋतिमेव च ॥ ७७ ॥

पश्चिमे वरुणायैव वायव्ये वायवे नमः ।
उत्तरे च कुबेराय ईशान्ये च शिवाय च ॥ ७८ ॥

ईशानशक्रयोर्मध्ये ब्रह्मणे सायुधाय च ।
निर्ऋत्यप्पतिमध्ये तु शेषाय च नमो नमः ॥ ७९ ॥

एवं कृत्वा नमस्कारं प्रणमेच्च पुनः पुनः ।
इत्येतत्सर्वमाख्यातं विधिपूर्वं तु दर्शनम् ॥ ८० ॥

इतः परं तु गन्तव्यं दर्शनार्थं रमापतेः ।
एवमुक्ता तु सा देवी तैः सार्धं तु ययौ मुदा ॥ ८१ ॥

यदुक्तः श्रीनिवासस्य दर्शनस्य विधिः खग ।
कस्यचिन्नैव वक्तव्यो गोप्यत्वाच्च कदाचन ॥ ८२ ॥

समागमो दुर्घट एव वीन्द्र सतां च सत्तत्वविबोधकानां ।
अनेकजन्मार्जितपुण्यसंचयादभूद्गुरोः संगम एव तस्याः ॥ ८३ ॥

पयो विकारं च निजं जहाति शेषः स्वरोषं नलिनं च पङ्कम्
मा चंचलं पंकजनाभयोगात् सत्संगयोगादशुभानि न स्युः ॥ ८४ ॥

**इति श्रीगरूडपुराणे ब्रह्मकाण्डे श्रीवेंकटेशगिर्यारोहणक्रम तद्भक्ततत्पर्वतनामादिनिरूपणं नाम पंचविंशोऽध्यायः ॥ २५ ॥**

## ॥ षड्विंशोऽध्यायः ॥

सा द्वारदेशे श्रीनिवासस्य देवी स्वामिपुष्करिणीं ददृशे तैश्च सार्धम् ।
स्वामिन्हरे श्रीनिवासेति सा तं ब्रह्मादीनां तारकं संप्रदध्यौ ॥ १ ॥

देवैः सार्धं पालनार्थं स विष्णुरस्त्येव नित्यं पुष्करिण्यां जलेषु ।
अतः स्वामिपुष्करिणीति चाहुस्तत्र स्नानं कन्यकाश्चैव चक्रुः ॥ २ ॥

शुचिर्भूत्वा श्रीनिवासं च द्रष्टुं देवालयं विविशुः शुद्धभक्त्या ।
यथोपदिष्टं गुरुणा तत्तथैव चक्रे कन्या पितृसार्धं खगेन्द्र ॥ ३ ॥

तदा हरिर्दर्शयामास तस्यै स्वकं रूपं सुप्रतीके सुपूर्णम् ।
सा कन्यका श्रीनिवासस्य रूपं ददर्श भक्त्या स्वमनोऽभिरामम् ॥ ४ ॥

सुवर्णचित्रं वसनं वसानं सोष्णीकं कंचुकं सन्दधानं ।
मृगोत्थमदगन्धेन सुरभीकृतदिङ्मुखम् ॥ ५ ॥

पुण्डरीकविशालाक्षं कम्बुग्रीवं महाभुजम् ।
हेमयज्ञोपवीताङ्गं साक्षात्कन्दर्पसन्निभम् ॥ ६ ॥

जगन्मोहनसौन्दर्यं कोमलाङ्गं मनोहरम् ।
दृष्ट्वा च कन्या मुमुदे रोमांचितसुगात्रका ॥ ७ ॥

तद्दर्शनाह्लादपरिप्लुताशया प्रेम्णाथ रोमाश्रुकलाकुलेक्षणा ।
ननर्त देवी पुरतस्तस्य विष्णोः सा ध्वस्तदोषा परमादरेण ॥ ८ ॥

आनन्द मां पाहि सुखं च दत्वा मुकुन्द मां पाहि विमुक्तिदानात् ।
मां पाहि नित्यं ह्यरविन्दनेत्र प्रसन्नदृष्ट्या करुणासुधार्द्र ॥ ९ ॥

गोविन्द गोविन्द सुदुःखितां मां ज्ञानादिदानेन हि पाहि नित्यम् ।
जनार्दन त्वं हि सुदुष्टसङ्घान् कामादिरूपान् सततं वर्जयित्वा ॥ १० ॥

हरे च मां पाहि हरे च पाहि दैत्यान् समाहृत्य सुविघ्नरूपान् ।
रमेश मां पाहि चतुर्मुखेश विश्वेश मां पाहि सरस्वतीश ॥ ११ ॥

रुद्रेश मां पाहि निदानमूर्ते वृन्दारकैर्वन्दितपादपद्म ।
एवं तु नत्वा परमादरेण तुष्टाव विष्णुं परमं पुराणम् ॥ १२ ॥

लक्ष्म्या सदा ये विदिता गुणाश्च ह्यसंख्याताः सन्ति विष्णौ त्वयीश ।
तेषां सकाशादतिबाहुल्यसंख्या गुणा हरौ तेऽविदिता वै रमायाः ॥ १३ ॥

अतो हरे स्तवने क्वास्ति शक्तिस्तथापि यत्नं स्तवने करिष्ये ।
तव प्रसादाच्च रमाप्रसादात् विधिप्रसादाद्भारतीशप्रसादात् ॥ १४ ॥

रुद्रप्रसादात् स्तवनं करिष्ये तथापि विष्णोः माऽपहासं कुरुष्व ।
यदि प्रसन्नोऽसि मयि त्वयीश त्वत्पादमूले देहि भक्तिं सदैव ॥ १५ ॥

त्वद्दर्शनादेव शुभाशुभांश्च नष्टं मदीयं च शुभं ह्यनिष्टम्
त्वन्मायया नष्टमिदं च लोकं मदेन मत्तं बधिरं चान्धभूतम् ॥ १६ ॥

ऐश्वर्ययोगेन च एडमूको जातः सदा दीनगुर्वादिकेषु ।
मा देहि ऐश्वर्यमनुत्तमं त्वत्पादारविन्दस्य विरुद्धभूतम् ॥ १७ ॥

त्वं देव मे देहि सतां च सङ्गं तव स्वरूपप्रतिपादकानाम् ।
पुत्रादीनमैहिकं वासुदेव दग्ध्वा च मे देहि पदारविन्दम् ॥ १८ ॥

सद्वैष्णवे क्रियमाणं च कोपं दग्ध्वा च मे देहि पदारविन्दम् ।
द्रव्यादिके क्रियमाणं च लोभं दग्ध्वा च मे देहि पदाब्जमूलम् ॥ १९ ॥

पुत्रादिके क्रियमाणं च मोहं दग्ध्वा च मे देहि पदारविन्दम् ।
विद्यां पुत्रं द्रव्यजातं मदं च दग्ध्वा च मे देहि पदाब्जजातम् ॥ २० ॥

सद्वैष्णवासहमानस्वरूपं दग्ध्वा मात्सर्यं पाहि मां वेङ्कटेश ।
मन्त्रं च मे देहि निदानमूर्ते येनैव मे स्यात्तव सङ्गश्च भूयः ॥ २१ ॥

नान्यं वृणे तव पादाब्जसङ्गात्तदेव मे देहि मम प्रसन्नः ।
इतीरितः श्रीनिवासः प्रसन्नो ह्युवाच देवो ह्यमृतस्रवं च ॥ २२ ॥

अत्रैव कन्ये प्रजपस्व मन्त्रं सुगोप्यरूपं परमादरेण ।
वक्ष्यामि मन्त्रं परमादरेण श्रुणुव भक्त्या परमादरेण ॥ २३ ॥

अन्तस्थमन्त्यं ह्याद्यसंयुक्तमेव सबिन्दु तद्वत्स्पर्शकाद्येन युक्तम् ।
टकारयुक्तं च समात्रकेण ह्यूष्माद्ययुक्तं प्रथमांतस्थयुक्तम् ॥ २४ ॥

नकारयुक्तं स्पर्शान्त्यस्थयुक्तं आद्यं तमोंकारसमन्वितं च ।
अनेन मन्त्रेण तवेप्सितं च भवेद्धि कन्ये नात्र विचार्यमस्ति ॥ २५ ॥

एवं स चोक्त्वा श्रीनिवासो हरिस्तु प्रतीकवद्दर्शयामास रूपम् ।
नत्वा तु सा श्रीनिवासं च देवी ह्युवास ह स्वामिसरः समीपे ॥ २६ ॥

तस्मिन् दिने ब्राह्मणार्दींश्च सर्वान् सन्तर्पयामास च षड्रसान्नैः ।
सायंकाले श्रीनिवासं च दृष्ट्वा उत्साहरूपे श्रीनिवासप्रतीके ॥ २७ ॥

साकं च भक्त्या प्रचकार देवी प्रदक्षिणं श्रीनिवासस्य सुष्ठु ।
ननर्त देवी सुप्रतीकस्य चाग्रे लज्जां च त्यक्त्वा जय देवेति चोक्त्वा ॥ २८ ॥

आर्तिक्यकाले च हरेश्च वक्त्रं दृष्ट्वा च दृष्ट्वा च ननर्त देवी ।
ममाद्य गात्रं पावितं श्रीनिवास ममाद्य नेत्रं सार्थकं चैव जातम् ॥ २९ ॥

ममाद्य पादौ सार्थकौ चैव जातौ प्रदक्षिणं कुर्वतः श्रीनिवास ।
हस्तौ च मे सार्थकावद्य जातौ अग्रे हरेः कुर्वतो हस्तशब्दम् ॥ ३० ॥

एवं वदन्ती प्रीणयन्ती च देवं जगाम सा वाद्यशब्दैः सहैव ।
देवास्तदा दुन्दुभयो विनेदिरे तन्मस्तके पुष्पवृष्टिं च चक्रुः ॥ ३१ ॥

तस्मिन्काले ह्युभयोः पार्श्वयोश्च नृत्यं चक्रुर्देवतावारनार्यः ।
तथैव तास्तलशब्दं च कृत्वा तदा सर्वा नमनं चापि चक्रुः ॥ ३२ ॥

आनन्दशैले सर्वदा त्वित्थमेव सा सर्वदा नर्तयन्ती च वीन्द्र ।
आनन्दमग्ना सापि देवी जगाम स्वमाश्रमं जैगिषव्येण सार्धम् ॥ ३३ ॥

यात्रामेवं ये न कुर्वन्ति वीन्द्र तेषां यात्रा निष्फला चाहुरार्याः ।
गत्वाश्रमं जैगिषव्येण सार्धं गुरुं त्वपृच्छद्वेंकटेशस्य मन्त्रम् ।। ३४ ।।

मन्त्रस्यार्थं ब्रूहि मे जैगिषव्य मन्त्रावृत्तिं कुर्वतां वै फलाय ।

**जैगीषव्य उवाच**

श्रुणुष्व भद्रे व्यङ्कटेशस्य नाम्नस्त्वर्थं श्रुत्वा हृदये सन्निधत्स्व ।। ३५ ।।

वीति ह्युत्तमवाची स्याद्येति ज्ञानमुदाहृतम् ।
ककारः सुखवाची स्याट्टेति चित्तमुदाहृतम् ।। ३६ ।।

ईशित्वमात्मवाची स्यादेवं ज्ञेयं तु कन्यके ।
पूर्णज्ञानं सुखं चित्त्वं आत्मत्वाद्व्यङ्कटाभिधः ।। ३७ ।।

व्यामिन्द्रियात्मकं प्रोक्तं व्यङ्गभूतं हरौ यतः ।
कटश्च समुदायार्थो व्यंकटश्चेन्द्रिया गणाः ।। ३८ ।।

स्वस्मिन् प्रेरयते यस्माद् तस्मात् व्यंकटनामकः ।
विषयेष्वेव वा नित्यमतो व्यंकटनामकः ।। ३९ ।।

विशिष्टज्ञानरूपत्वात् व्येति मुक्ताः सदा स्मृताः ।
मुक्तानां च समूहस्तु व्यंकटेति प्रकीर्तितः ।। ४० ।।

सदा मुक्तसमूहानामीशत्वाद् व्यङ्कटाभिधः ।
लिङ्गदेहयुतो जीवो व्यङ्कटेति समाहृतः ।। ४१ ।।

लिङ्गिनां चैव स्वामित्वाद् व्यङ्कटेशेति संज्ञितः ।
दैत्यानां च समूहस्तु ज्ञानादिविधुरो यतः ।। ४२ ।।

अतो दैत्यसमूहस्तु व्यङ्कटेति प्रकीर्तितः ।
तेषां संहरणेऽपीशस्त्वतो व्यङ्कटनामकः ।। ४३ ।।

आनन्दस्य विरुद्धत्वात्कामक्रोधादयो गुणाः ।
व्यङ्कटा इति संप्रोक्तास्तेषां नाशयिता प्रभुः ।। ४४ ।।

अतस्तु व्यंकटेशाख्य एवं ज्ञात्वा जपं कुरु ।
एवं व्यंकटमाहात्म्यं श्रुत्वा देवी खगेश्वर ।। ४५ ।।

निद्रां चकार तत्रैव रात्रौ पित्रा सहैव च ।
ब्राह्मे मुहूर्ते चोत्थाय हृदि[1] सस्मार कन्यका ।। ४६ ।।

श्रीव्यङ्कटेशश्च नृसिंहमूर्तिः श्रीवरदराजश्च नृसिंहमूर्तिः ।
श्रीरङ्गशायी च ह्यनन्तशायी कुर्वन्तु सर्वे मम सुप्रभातम् ।। ४७ ।।

श्रीकृष्णमूर्तिश्च गदाधरस्तु श्रीविष्णुपादस्तु प्रयागवासः ।
नारायणः श्रीबदरीनिवासः कुर्वन्तु सर्वे मम सुप्रभातम् ।। ४८ ।।

दामोदरो वै त्रिजगन्निवासः श्रीपाण्डुरङ्गश्च नृसिंहदेवः ।
श्रीरामदेवश्च ह्ययोध्यवासः कुर्वन्तु सर्वे मम सुप्रभातम् ।। ४९ ।।

श्रीधर्मपुर्यस्थनृसिंहमूर्तिः श्रोकोप्पलस्थो मुद्गल्लवासः ।
कोल्हानृसिंहः शूर्पकारस्थसिंहः कुर्वन्तु सर्वे मम सुप्रभातम् ।। ५० ।।

चतुर्मुखश्चारुसरस्वती च सुभारती शर्वसुपर्णशेषाः ।
उमा महेन्द्रश्च शचीमुखाद्याः कुर्वन्तु सर्वे मम सुप्रभातम् ।। ५१ ।।

द्वारावती काशिकावन्तिका च प्रयागकांच्यौ मथुरापुरी च ।
मायापुरी हस्तिपुरी निवासिनः कुर्वन्तु सर्वे मम सुप्रभातम् ।। ५२ ।।

भागीरथी चैव सरस्वती च गोदावरी कृष्णवेणी च सिन्धुः ।
कलिंकन्या यमुना च नर्मदा कुर्वन्तु सर्वे मम सुप्रभातम् ।। ५३ ।।

वितस्तिकावेरिसतुङ्गभद्राः सुवंजरा भीमरथी विपाशा[2] ।
सुताम्रपर्णी च पिनाकिनी च कुर्वन्तु सर्वे मम सुप्रभातम् ।। ५४ ।।

स्वामिपुष्करिणी चैव सुवर्णमुखरी तथा।
श्रीपाण्डवी तुम्बुरुस्च कपिला पापनाशिनी ॥ ५५ ॥

गुरुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः।
रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ५६ ॥

सप्तार्णवाः सप्तकुलाचलाश्च द्वीपाश्च सप्तोपवनानि सप्त।
भूरादिकानि भुवनानि सप्त कुर्वन्तुं सर्वे मम सुप्रभातम् ॥ ५७ ॥

मान्धाता नहुषोंऽबरीषसगरौ राजा नलो धर्मराट्
प्रह्लादः क्रतुराड् विभूषणगयौ व्यासो हनूमानपि
अश्वत्थामकृपावुमा द्रुपदजा श्रीजानकी तारका
मन्दोदर्यखिलाः प्रभातसुमहं कुर्वन्तु नित्यं हरे ॥ ५८ ॥

अश्वत्थस्य वनानि यानि तुलसीधात्रीवनानि प्रभो
पुन्नागस्य वनानि चम्पकवनान्यन्यानि पुष्पाणि च।
मन्दारस्य वनानि यानि च हरेः सौगन्धिकान्यप्यहो
नित्यं तानि दिशन्तु प्रभातमतुलं श्रीवेंकटेश प्रभो ॥ ५९ ॥

एवं स्मृत्वा श्रीनिवासस्य देवी कृत्वा शौचं जैगिषव्येण साकम्।
स्नातुं ययौ पुष्करिर्णी हरेश्च स्नानं सम्यक् तत्र चकार देवी ॥
सम्यग् जस्वा व्यङ्कटेशस्य मन्त्रमुवाच सा जैगिषव्यं गुरुं च ॥ ६० ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे देवीकृतवेङ्कटेशदर्शनतत्स्तुत्यादिवर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥**

## ।। सप्तविंशोऽध्यायः ।।

### कन्योवाच

श्रीनिवासः किमर्थं वा आगतोऽत्र वदस्व मे ।
शेषाचलोऽपि कुत्राभूत्कदाऽयातश्च पापहा ।। १ ।।
स्वामिपुष्करिणी चात्र किमर्थं ह्यागता वद ।

### जैगीषव्य उवाच

श्रुणु भद्रे महाभागे वेंकटेशस्य चागमम् ।। २ ।।
श्रवणादेव पापानि विलयं यान्ति भामिनि ।
आसीत्पुरा हिरण्याक्षः काश्यपिर्दितिनन्दनः ।। ३ ।।
सनकादेश्च शापात्तु विजयो द्वारपालकः ।
बभूव दैत्ययोनौ तु देवानां कण्टको बली ।। ४ ।।
सज्जीवो विजयः प्रोक्तो हरिभक्तो महाप्रभुः ।
हिरण्याक्षः स्वयं दैत्यो हरितद्भक्तदूषकः ।। ५ ।।
एतादृशो हिरण्याक्षः तपस्तप्तुं समुद्यतः ।
तदा माता दितिर्देवी हिरण्याक्षमुवाच सा ।। ६ ।।

### दितिरुवाच

वत्स तात महाभाग मा तपस्वाष्टहायन ।
त्वं मा ददस्व दुःखं मां पालयिष्यति को वद ।। ७ ।।
क्षणमात्रं न जीवामि त्वां विना जीवनं नहि
मा तप त्वं महाभाग मम जीवनहेतवे ।। ८ ।।
एवमुक्तस्तु मात्रा स विजयावेशतोऽब्रवीत् ।
मातर्मूढे मोहजालं च दग्ध्वा हरिं भज स्नेहजालं कुरुष्व ।। ९ ।।
मयि स्नेहं पुत्रनिमित्तभूतं सुदुःखदं चेह लोके परत्र ।
यावत्स्नेहं मयि मातः करोषि तावत्क्लेशं शाश्वतं यास्यसि त्वम् ।। १० ।।

मातश्च ते मयि पुत्रत्वबुद्धिस्त्वय्यप्येषा मातृबुद्धिममापि ।
या कश्यपे पितृबुद्धिर्ममापि तस्मिंस्तु ते भर्तृबुद्धिस्तु मिथ्या ॥ ११ ॥
निर्माति यस्माद्धरिरेव सर्वं सम्यक् पाता नियतोऽसौ मुरारिः ।
अतो हि माता हरिरेव सर्वदा त्वन्यासां वै मातृता चोपचारात् ॥१२ ॥
निर्मातृत्वं यदि मुख्यं त्वयि स्यात् द्रोणादीनां जननी का वदस्व ।
मातृत्वं वै यदि मुख्यं त्वयि स्यात् धात्रादीनां जननी का वदस्व ॥ १३ ॥
भर्तृत्वं वै यदि मुख्यं त्वयि स्यात् मान्धातृपूर्वान् रक्षिता को वदस्व ।
यतः सदा पाति जगत्ततो हरिः सदा पिता विष्णुरजः पुराणः ॥ १४ ॥
न तारकोऽहं नरकाच्च सुभ्रूर्न वै भर्ता नापि मित्रादयश्च ।
न वै माता नानुजादिश्च सर्वः सर्वत्राता विष्णुरतो न चान्यः ॥ १५ ॥
यदा पिता मुख्यपिता यदि स्यात् गर्भस्थानां पालकः को वदस्व ।
मातापित्रोः पालकस्त्वं यदि स्यात्कूर्मादीनां पालकः को वदस्व ॥ १६ ॥
माया तदीयां ज्ञानशस्त्रेण छित्वा भक्त्या हरेः स्मरणं त्वं कुरुष्व ।
यद्भक्तिपूर्वं स्मरणं नाम विष्णोः तत्सर्वथा पापहरं च मातः ॥ १७ ॥
यो वा भक्त्या स्मरणं नाम विष्णोः करोत्यसौ पापहरो भविष्यति ।
अयं देहो दुर्लभः कर्मभूमौ तत्रापि विष्णोः स्मरणं दुर्लभं च ॥ १८ ॥
आयुर्गतं व्यर्थमेव त्वदीयं शीघ्रं भज(स्व) श्रीनिवासस्य पादम् ।
उपदिश्यैवं मातरं पुत्रवर्यो दैत्यावेशात्सोऽभवद्वै तपस्वी ॥ १९ ॥
चतुर्मुखं प्रीणयित्वा च भक्त्या ह्यवध्यत्वं प्राप तस्मान्महात्मा ।
ततो भूमिं कटवद्वेष्टयित्वा निन्ये तदा दैत्यवर्यो महात्मा ॥ २० ॥
श्रीमुष्णदेशे प्रादुरासीद्धरिस्तु वराहात्मा विष्णुरेवाशु सुभ्रु ।
भित्वा चाब्धिं विविशे तं महात्मा रसातले संस्थितं भूतलं च ॥ २१ ॥
स्वदंष्ट्राग्रे स्थापयित्वा जगाम तदागमादागतो दैत्यवर्यः ।
तं कर्णमूले ताडयित्वा जघान [1]प्रसादयामास च पूर्ववद्भुवम् ॥ २३ ॥

सदिग्गजान् स्थापयित्वा च विष्णुः श्रीमुष्णे वै संस्थितः श्रीवराहः ॥
तदा हरिश्चिन्तयामास विष्णुः भक्ता मदीया मानुषं देहमाप्य ॥ २४ ॥
आराधयिष्यन्ति च मां क्व चैते तेषां दया कुत्र वाऽहं करिष्ये ।
एवं हरिश्चिन्तयित्वा सुकन्ये वैकुण्ठलोकादचलं शेषसंज्ञम् ॥ २५ ॥
वीन्द्रस्कन्धे स्थापयित्वा स्वयं च समागतोऽभूद्भूतलं भूतलेशः
सुवर्णमुखरीतीरमारभ्य गरुडध्वजः ।
कृष्णवेण्याश्च पर्यन्तं स्थापयामास तं गिरिम् ॥ २६ ॥
गिरेः पुच्छे तु श्रीशैलं मध्यमेऽहोबलं स्मृतम् ।
मुखं तु श्रीनिवासस्य क्षेत्रं च समुदाहृतम् ॥ २७ ॥
अल्पेन तपसाभीष्टं सिध्यत्यस्मिन् महाचले ।
गङ्गादिसर्वतीर्थानि पुण्यानि ह्यत्र सन्ति वै ॥ २८ ॥
य एनं सेवते नित्यं श्रद्धाभक्तिसमन्वितः ।
ज्ञानार्थी ज्ञानमाप्नोति द्रव्यार्थी द्रव्यमाप्नुयात् ॥ २९ ॥
पुत्रार्थी पुत्रमाप्नोति नृपो राज्यं च विन्दति ।
यं यं कामयते मर्त्यस्तं तमाप्नोति सर्वदा ॥ ३० ॥
चिन्तितं साध्यते यस्माच्चिन्तामणिमिमं विदुः ।
केचिद् ज्ञानप्रदत्वाच्च ज्ञानाद्रिरिति तं विदुः ॥ ३१ ॥
सर्वतीर्थमयत्वाच्च तीर्थाद्रिरिति तं विदुः ।
पुष्करिण्यास्तु बाहुल्यात् गिरावस्मिन् सरांस्युत ॥ ३२ ॥
पुष्कराद्रिरिति प्राहुरेवं तत्त्वार्थवेदिनः ।
शातकुम्भस्वरूपत्वात्कनकाद्रिं च तं विदुः ॥ ३३ ॥
वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः ।
अमृतैश्वर्यसंयुक्तो व्यङ्कटाद्रिरिति स्मृतः ॥ ३४ ॥

वेङ्कटेशस्य शैलस्य माहात्म्यं यावदस्ति हि ।
तावद्वक्तुं समग्रेण न समर्थश्चतुर्मुखः ॥ ३५ ॥
वेङ्कटाद्रौ परां भक्तिं ये कुर्वन्ति दिने दिने ।
पंगुर्जंघाल एव स्यादचक्षुः पद्मलोचनः ॥ ३६ ॥
मूको वाग्मी भवेद्देवि बधिरः श्रावको भवेत् ।
वन्ध्या तु बहुपुत्री च निर्धनः सधनो भवेत् ॥ ३७ ॥
एतत्सर्वं गिरौ भक्तिमात्रेणैव भवेद् ध्रुवम् ।
तत्त्वतो वेंकटाद्रेस्तु स्वरूपं वेत्ति कः कविः ॥ ३८ ॥
तस्मादस्य गिरेः पुण्यं माहात्म्यं वेत्ति कः पुमान् ।
मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ॥
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥ ३९ ॥
कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ।
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय ते नमः ॥ ४० ॥
श्रीस्वामिपुष्करिण्याश्च माहात्म्यं श्रुणु कन्यके ।
स्वामिपुष्करिणीमध्ये श्रीनिवासोऽस्ति सर्वदा ॥ ४१ ॥
स्नानं कुर्वन्ति ये तत्र तेषां मुक्तिः करे स्थिता ।
तिस्रः कोट्यर्धकोटीश्च तीर्थानि भुवनत्रये ॥ ४२ ॥
तानि सर्वाणि तत्रैव सन्ति तीर्थे हरेः सदा ।
तत्तीर्थं श्रीनिवासाख्यं सर्वदेवनमस्कृतम् ॥ ४३ ॥
तदेव श्रीनिवासस्य मन्दिरं परिकीर्तितम् ।
तद्दर्शनादेव हे कन्ये यान्ति पापानि भस्मसात् ॥ ४४ ॥
एकैकस्नानमात्रेण सत्सङ्गो भवति ध्रुवम् ।
सत्सङ्गात् ज्ञानमासाद्य ज्ञानान्मोक्षं च विन्दति ॥ ४५ ॥

अधिकारिणां भवेदेवं विपरीतमयोगिनाम् ।
तीर्थानां स्नानमात्रेण मोक्षं यान्तीति ये विदुः ॥ ४६ ॥
ते सर्वे ह्यसुरा ज्ञेयास्ते यान्ति ह्यधमां गतिम् ॥ ४७ ॥
श्रीनिवासस्य तीर्थेऽस्मिन् वायुकोणे च कन्यके
आस्ते वायुः सदा विष्णोः पूजां कर्तुमनुत्तमाम् ॥ ४८ ॥
वायुतीर्थं च तत्प्रोक्तं हस्तद्वादशकान्तरम् ।
हस्तषट्कप्रमाणं च पश्चिमे समुदाहृतम् ॥ ४९ ॥
ये वैष्णवा वैष्णवदासवर्याः स्नानं कुर्युस्तत्र पूर्वं सुकन्ये ।
मध्वान्तस्थः श्रीनिवासस्तु नित्यमत्र स्नानात्प्रीयते वै दयालुः ॥ ५० ॥
ये मध्वतीर्थे स्नातुमिच्छन्ति देवि रुद्रादयो वायुभक्ता महान्तः ।
सदा स्नानं तत्र कुर्वन्ति देवि प्रातः काले चोदयात्पूर्वमेव ॥ ५१ ॥
ये वायुतीर्थे विसृजन्ति देहजं मलं मूत्रं वमनं श्लेश्मकं च ।
येऽपानशुद्धिं लिङ्गशुद्धिं च कन्ये कुर्वन्ति ते ह्यसुरा कीर्तिताश्च ॥ ५२ ॥
श्रुण्वन्ति ये भागवतं पुराणं किं वर्णये तस्य पुण्यं तु देवि ।
ये कृष्णमन्त्रं तु जपन्ति देवि *ह्यष्टाक्षरं मन्त्रवरं सुगोप्यम् ॥ ५३ ॥
तेषां हरिः प्रीयते केशवोऽलं मध्वान्तस्थो नात्र विचार्यमस्ति ।
एवं दानं तत्र कुर्वन्ति ये वै द्विजाग्र्याणां वैष्णवानां विदां च ॥ ५४ ॥
तेषां पुण्यं नैव जानन्ति देवा जानात्येव श्रीनिवासो हरिस्तु ।
शालग्रामं वायुतीर्थे ददन्ति तेषां पुण्यं वेत्ति स व्यंकटेशः ॥ ५५ ॥
सुदुर्लभो वायुतीर्थेऽभिषेको निष्कामबुध्द्या वैष्णवानां च देवि ।
तथैव तीर्थे दुर्लभं तत्र देवि श्रीमद्भागवतश्रवणं विष्णुदासैः ॥ ५६ ॥
तथैव तीर्थे दुर्लभं तत्र देवि शालग्रामस्य द्विजवर्ये च दानम् ।
जम्बूफलाकारसुनीलवर्णं मुखद्वयं चक्रचतुष्टयान्वितम् ॥ ५७ ॥

*षडक्षरं इति पाठश्चेत्साधु इति भाति ।

सुकेसरैः संयुतं स्वणचिह्नध्वजाङ्कुशैर्वज्रचिह्नैर्यवैश्च ।
जानार्दनीं मूर्तिमाहुर्महान्तो दानं तस्या दुर्लभं तत्र तीर्थे ॥ ५८ ॥

अत्युत्तमं मूर्तिदानं तु भद्रे सुदुर्लभं परमं नात्र लोभः ।
सुदुर्लभं बहुदोग्ध्र्याश्च गृष्टेर्दानं तथा वस्त्ररत्नादिकानाम् ॥ ५९ ॥

अत्युत्तमं द्रव्यदानं च देवि स्वापेक्षितं दानमाहुर्महान्तः ।
स्वस्यानपेक्षं फल्गुभूतं च वस्तु दानं तस्य व्यर्थमाहुर्महान्तः ॥ ६० ॥

अत्युत्तमं गृष्टिदानं च पुण्यं नैवाप्नोति दुग्धदोहां च गां च ।
अत्युत्तमे वस्तुनि त्यागबुद्धिः सुदुर्घटा परमा वै जनानाम् ॥ ६१ ॥

अत्युत्तमं भागवतस्य पुस्तकं सुदुर्घटं वायुतीर्थे च कन्ये ।
सुदुर्लभं वैष्णवैस्तत्त्वविद्भिः हरेर्विचारं वायुतीर्थे च देवि ॥ ६२ ॥

श्रीनिवासस्य तीर्थस्य चोत्तरस्यां दिशि स्थितम् ।
चन्द्रतीर्थमिति प्रोक्तं तत्रास्ते चन्द्रमाः सदा ॥ ६३ ॥

श्रीनिवासस्य पूजां च तत्र स्थित्वा करोत्ययम् ।
तत्र स्नानं प्रकुर्वन्ति संगवे ये च कन्यके ॥ ६४ ॥

गुरुतल्पादिपापेभ्यो मुच्यन्ते नात्र संशयः ।
तत्र स्नात्वा पूर्वभागे शालग्रामं ददाति यः ॥ ६५ ॥

ज्ञानद्वारा मोक्षमेति नात्र कार्या विचारणा ।
दधिवामनमूर्तेश्च दानं तत्र सुदुर्लभम् ॥ ६६ ॥

बदरीफलमात्रं तु वर्तुलं नीलवर्णकम् ।
प्रसन्नवदनं सूक्ष्मं सुस्निग्धं कन्यके शुभे ॥ ६७ ॥

चक्रद्वयसमायुक्तं गोपुरैः पंचभिर्युतम् ।
चापबाणसमायुक्तं आसने कुण्डलाकृतिम् ॥ ६८ ॥

वनमालामुखयुतं मूर्धसाहस्रसंयुतम् ।
रौप्यबिन्दुसमायुक्तं सव्ये भद्रार्धमात्रकम् ।। ६९ ।।

चन्द्रेण सहितं देवि दधिवामनमुच्यते ।
एतादृशं कलौ नृणां दुर्लभं बहुभाग्यकम् ।। ७० ।।

लक्ष्मीनारायणसमां तां मूर्तिं विद्धि भामिनि ।
सुदुर्लभं तस्य मूर्तेश्च दानं तच्चन्द्रतीर्थे श्रवणं दुर्घटं च ।
सम्यक् स्वरूपं दधिवामनस्य सुदुर्घटं श्रवणं वैष्णवाच्च ।। ७१ ।।

तत्र स्नात्वा वामनस्य स्वरूपश्रवणाद्धिदुर्दानफलं समं च ।
दशहस्तप्रमाणं तु चन्द्रतीर्थमुदाहृतम् ।। ७२ ।।

तत्र स्नानं नृणां देवि कलावत्यन्तदुर्लभम् ।
ईशानचन्द्रयोर्मध्ये कौबेरं तीर्थमुत्तमम् ।। ७३ ।।

अष्टहस्तप्रमाणं च तत्तीर्थं समुदाहृतम्
मध्याह्ने दुर्लभं स्नानं नृणां तत्र सुदुर्लभम् ।। ७४ ।।

तत्र स्थित्वा कुबेरस्तु सदा भजति वै हरिम् ।
वराहमूर्तिदानं तु शालग्रामस्य दुर्लभम् ।। ७५ ।।

जम्बुफलप्रमाणं तु पृष्ठं वै कुक्कुटांडवत् ।
वदनं वलयाकारं प्रमाणं चणकादिवत् ।। ७६ ।।

देवस्य वामभागे च मध्यदेशं विहाय च ।
चक्रद्वयसमायुक्तं ऊर्ध्वदेशे च भामिनि ।। ७७ ।।

सुवर्णबिन्दुना युक्तं भूवराहमिति स्मृतम् ।
तादृशं भूवराहं च दुर्लभं च कलौ नृणाम् ।। ७८ ।।

तत्र स्नात्वा भूवराहस्य मूर्तेर्दानं दत्वा श्रवणं चापि कृत्वा ।
तत्र स्थितं भूवराहं च दृष्ट्वा स वै नरः कृतकृत्यो हि लोके ।। ७९ ।।

तत्र स्नात्वा भूवराहस्य मूर्तेः श्रुणोति यो लक्षणं सम्यगेव ।
स तेन पुण्यं समुपैति देवि स मुक्तिभाङ्नात्र विचार्यमस्ति ॥ ८० ॥

ईशानकोणे श्रीनिवासस्य देवि रौद्रं तीर्थं परमं पावनं च ।
तत्र स्थित्वा रुद्रदेवो महात्मा पूजां करोति श्रीनिवासस्य मूर्तिम् ॥ ८१ ॥

हस्ताष्टकं तत्प्रमाणं वदन्ति तत्र स्नानं वैष्णवैः कार्यमेव ।
तत्र स्नात्वा प्रयतो वै मुरारेः कथां दिव्यां श्रुणुयादादरेण ॥ ८२ ॥

स्नानं पानं तत्र दानं च कुर्याल्लक्ष्मीनृसिंहप्रीतये देवि नित्यं ।
बदरीफलमात्रं च वर्तुलं बिन्दुसंयुतम् ।
देवस्य वामभागे तु चक्रद्वयसमन्वितम् ॥ ८३ ॥

सुवर्णरेखासंयुक्तं किंचिद्रक्तसमन्वितम् ।
नीलवर्णं सवदनं पद्मरेखादिचिह्नितम् ॥ ८४ ॥

लक्ष्मीनृसिंहं तं विद्धि भुक्तिमुक्तिप्रदायकम् ।
एतादृशं गण्डिकायाः शिलाया मूर्तेर्दानं दुर्घटं विद्धि देवि ॥ ८५ ॥

तत्र स्नात्वा श्रीनृसिंहस्वरूपं लक्ष्मीपतेः श्रुणुयाद्भक्तिनम्रः ।
मूर्तेर्दानात्फलमाप्नोति देवि सत्यं सत्यं नात्र विचार्यमस्ति ॥ ८६ ॥

ईशानशक्रयोर्मध्ये ब्रह्मतीर्थमुदाहृतम् ।
दुर्लभं मानुषाणां तु स्नानं सर्वार्थसाधकम् ॥ ८७ ॥

शालग्रामस्य दानं तु दुर्लभं तत्र वै नृणाम् ।
लक्ष्मीनारायणस्यैव मूर्तेर्दानं सुदुर्लभम् ॥ ८८ ॥

स्थूलमौदुम्बरसमं तत्प्रमाणमुदाहृतम् ।
सव्ये दक्षिणपार्श्वे च समयोः पुष्कलान्वितम् ॥
गोखुरैश्च समायुक्तं वज्रपुंखैश्च संयुतम् ॥ ८९ ॥

चणकप्रवेशमात्रं तु वदनं समुदाहृतम् ।
सव्ये दक्षिणपार्श्वे च समयोः पुष्कलान्वितम् ॥ ९० ॥

गोयूथवत्सवर्णं च चतुश्चक्रसमन्वितम् ।
गोखुरैश्च समायुक्तं सुवर्णकिणसंयुतम् ॥ ९१ ॥

वनमालासमायुक्तं वज्रपुंखैश्च संयुतम् ।
एतादृशीं हरेर्मूर्तिं लक्ष्मीनारायणं विदुः ॥ ९२ ॥

कलौ नृणां तस्य लाभो दुर्लभः संस्मृतो भुवि ।
दानं च सुतरां देवि दुर्लभं किं वदामि ते ॥ ९३ ॥

ब्रह्मतीर्थे च संस्नात्वा श्रोतव्या वै हरेः कथा ।
गण्डिकायाः शिलायाश्च लक्ष्मीनारायणस्य तु ॥ ९४ ॥

लक्षणं यो विजानाति तदा तत्सदृशं भुवि ।
प्राप्नोत्येव न सन्देहो नात्र कार्या विचारणा ॥ ९५ ॥

श्रीनिवासस्य तीर्थस्य पूर्वे स्यादिन्द्रतीर्थकम् ।
श्रीनिवासस्य पूजां तु कर्तुमास्ते शचीपतिः ॥ ९६ ॥

शालग्रामशिलादानं कर्तव्यं श्रोत्रियाय वै ।
शालग्रामशिलादानं हत्याकोटिविनाशनम् ॥ ९७ ॥

तस्मिंस्तीर्थे तु यो देवि सीतारामाभिधां शिलाम् ।
ददाति भूतले भद्रे भूपतेः सदृशो भवेत् ॥ ९८ ॥

सीतारामशिला देवि द्विविधा संप्रकीर्तिता ।
पंचचक्रयुता काचित् षट्चक्रेण च संयुता ॥ ९९ ॥

तत्रापि षट्चक्रयुता ह्युत्तमा संप्रकीर्तिता ।
पंचचक्रयुतायाश्च फलं द्विगुणमीरितम् ॥ १०० ॥

कुक्कुटांडप्रमाणं च सुस्निग्धं नीलवर्णकम् ।
वदनत्रयसंयुक्तं षट्चक्रैः केसरैर्युतम् ॥ १०१ ॥

स्वर्णरेखासमायुक्तं ध्वजवज्रांकुशैर्युतम् ।
एतादृशं तु वै भद्रे सीतारामाभिधं स्मृतम् ॥ १०२ ॥

वदने वदने देवि सीतारामं सकोशकं ।
दुर्लभं तु कलौ नृणां स्वसाम्राज्यप्रदं शुभम् ॥ १०३ ॥

इन्द्रतीर्थे महादेवि सीतारामाभिधा शिला ।
या तद्दानं दुर्लभं तन्नाल्पस्य तपसः फलम् ॥ १०४ ॥

दानस्य शक्त्यभावे तु श्रोतव्यं लक्षणं हरेः ।
शालग्राशिलादानाद्यत्फलं तत्फलं भवेत् ॥ १०५ ॥

आग्नेयकोणे श्रीनिवासस्य देवि तीर्थं त्वास्ते वह्निसंज्ञं प्रशस्तम् ।
स वह्निदेवः श्रीनिवासस्य पूजां कर्तुं ह्यास्ते सर्वदा तीर्थमध्ये ॥ १०६ ॥

यो वा तीर्थे वह्निसंज्ञे च देवि भक्त्या स्नानं कुरुतेऽजं स्मरन् हि ।
ज्ञानद्वारा मोक्षमाप्नोति देवि तत्र स्नानं दुर्लभं वै नृणां च ॥ १०७ ॥

ज्ञात्वा स्नानं दुष्करं तीर्थराजे भक्तिस्तस्मिन् दुर्लभा चैव देवि ।
शालग्रामं तच्छिलायाश्च दानं सुदुर्लभं वासुदेवाभिधायाः ॥ १०८ ॥

ह्रस्वं तथा वर्तुलं नीलवर्णं सूक्ष्मं मुखं मुखचक्रं सुशुद्धम् ।
सुवेणुयुक्तं वासुदेवाभिधेयं दानं कलौ दुर्लभं तस्य भद्रे ॥ १०९ ॥

दाने तस्याः शक्त्यभावे च भद्रे स्नात्वा तीर्थे वासुदेवाभिधस्य ।
सम्यक् श्राव्यं लक्षणं वै शिलायास्तयोस्तुल्यं फलमाहुर्महान्तः ॥ ११० ॥

दक्षिणे श्रीनिवासस्य यमतीर्थं च संस्मृतम् ।
तत्रास्ते यमराजस्तु पूजां कर्तुं हरेः सदा ॥ १११ ॥

तत्र स्नानं च दानं चाप्यक्षयं परमं स्मृतम् ।
शालग्रामशिलादानं कार्यं तत्र शुभानने ॥ ११२ ॥

पट्टाभिरामसंज्ञायाः शिलाया दानमिष्यते ।
तच्चूतफलवत्स्थूलं वदनत्रयसंयुतम् ॥ ११३ ॥

शिरश्चक्रेण रहितं सप्तचक्रैः समन्वितम् ।
नीलवर्णं स्वर्णरेखं गोखुराद्यैः समन्वितम् ॥ ११४ ॥

पट्टवर्धनरामं तु दुर्लभं बहुभाग्यदम् ।
पट्टवर्धनरामं तु यो ददाति च तत्र वै ॥ ११५ ॥

पट्टाभिषिक्तो भवति नात्र कार्या विचारणा ।
श्रीनिवासस्य नैर्ऋत्ये नैऋत्यं तीर्थमुत्तमम् ॥ ११६ ॥

आस्ते हि निर्ऋतिस्तत्र पूजां कर्तुं च सर्वदा ।
तत्र स्नानं प्रकर्तव्यं पुनर्जन्म न विद्यते ॥ ११७ ॥

शालग्राशिलायाश्च पुरुषोत्तमसंज्ञिकाम् ।
मूर्तिं ददाति यो मर्त्यः स याति परमां गतिं ॥ ११८ ॥

औदुम्बरफलाकारं प्रसन्नवदनं शुभम् ।
चक्रद्वयसमायुक्तं शिरश्चक्रसमन्वितम् ॥ ११९ ॥

सुवर्णबिन्दुसंयुक्तं वज्राङ्कुशसमन्वितम् ।
तन्मूर्तिदानं दुर्लभं तत्र देवि प्रीणाति यस्माच्छ्रीनिवासो महात्मा ॥ १२० ॥

यदा दानं दुर्घटं स्याच्च देवि तदा श्रोतव्यं लक्षणं तस्य मूर्तेः ।
पाशिनैर्ऋतयोर्मध्ये शेषतीर्थं परं स्मृतम् ॥ १२१ ॥

तत्र स्नात्वा शेषमूर्तिं प्रददाति द्विजातये ।
स याति परमं लोकं पुनरावृत्तिवर्जितम् ॥ १२२ ॥

औदुम्बरफलाकारं कुण्डलाकृतिमेव च ।
शेषवद्वन्दनं तस्य तस्मिंश्चक्रद्वयं स्मृतम् ॥ १२३ ॥
फणान्तमेकचक्रेण संयुतं च सवल्मिकं ।
किंचिद्रक्तसमायुक्तं नैल्यवर्णं सगोखुरम् ॥ १२४ ॥
सुप्ता प्रबुद्धा द्विविधा शेषमूर्तिरुदाहृता ।
फणोन्नता प्रबुद्धा स्यात् सुप्ता ह्रस्वफणोन्नता ॥ १२५ ॥
तत्रापि दुर्लभा सुप्ता महाभाग्यकरी स्मृता ।
इह लोके परत्रापि मोक्षदा नात्र संशयः ॥ १२६ ॥
नवचक्रादुपक्रम्य विंशत्यन्तं च यत्र सः ।
अनन्त इति विज्ञेयो ह्यनन्तफलदायकः ॥ १२७ ॥
विश्वम्भरः स विज्ञेयो विंशत्यूर्ध्वं वरानने ।
तत्रापि केसरैश्चक्रैर्लक्षणैश्च समन्वितम् ॥ १२८ ॥
कलौ तु दुर्लभं नृणां तद्दानं चातिदुर्लभम् ।
स्नानं कृत्वा शेषतीर्थे विशुद्धेनैव चेतसा ॥ १२९ ॥
एतेषां लक्षणं श्रुत्वा प्रयाति परमां गतिम् ।
ततः परं महाभागे वारुणं तीर्थमुत्तमम् ॥ १३० ॥
तत्रास्ते वरुणो देवः पूजां कर्तुं हरेः सदा ।
तत्र स्नानं प्रकर्तव्यं दातव्यं दानमुत्तमम् ॥ १३१ ॥
शिंशुमारं च मत्स्यं च त्रिविक्रममथापि वा ।
दातव्यं भूतिकामेन तीर्थेऽस्मिन्वरवर्णिनि ॥ १३२ ॥
जम्बूफलसमाकारा पुच्छे सूक्ष्मा सबिन्दुका ।
चक्रत्रया च वदने पुच्छोपरि सचक्रका ॥ १३३ ॥
श्रीवत्सबिन्दुमालाढ्या मत्स्यमूर्तिरुदाहृता ।
पुच्छादधश्चक्रयुतं शिंशुमारमुदाहृतम् ॥ १३४ ॥

वक्रचक्रयुतश्चेत्स्यात् त्रिविक्रम उदाहृतः ।
एतेषां लक्षणं श्रुत्वा वारुणे तीर्थ उत्तमे ।। १३५ ।।

एतद्दानफलं प्राप्य मोदते विष्णुमन्दिरे ।
पूर्वोक्ता मूर्तयो यस्मिन् गृहे तिष्ठन्ति भामिनि ।। १३६ ।।

भागीरथी तीर्थवरा सन्निधत्ते न संशयः ।
स्वामिपुष्करिणीस्नानं दुर्घटं तु कलौ नृणाम् ।। १३७ ।।

तत्र स्थितानां तीर्थानां स्नानं चाप्यतिदुर्घटम् ।
शालग्रामशिलादानं दुर्घटं च तथा स्मृतम् ।। १३८ ।।

स्वामिपुष्करिणीतीरे कन्यादानं सुदुर्घटम् ।
दुर्घटं कपिलादानं भक्ष्यदानं सुदुर्घटम् ।। १३९ ।।

स्वामिपुष्करिणीतीर्थे तीर्थेवन्येषु भामिनि ।
स्नानं कुरु यथान्यायं शय्यादानं तथा कुरु ।। १४० ।।

जैगीषव्येन मुनिना त्वेवमुक्ता च कन्यका ।
स्वामिपुष्करिणीस्नानं सा चकार घृतव्रता ।। १४१ ।।

तीर्थेष्वन्येषु सुस्नाता दानं चक्रे सुभामिनी ।
उवास तत्र सा देवी त्रिसप्तकदिनानि च ।। १४२ ।।

स्वामिपुष्करिणीतीर्थमहिमानं श्रुणोति यः ।
स याति परमां भक्तिं श्रीनिवासे जगन्मये ।। १४३ ।।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे (वें)व्यङ्कटगिरिमाहात्म्ये स्वामिपुष्करिण्यादितीर्थ-तत्रत्यदेव-तदीयशालग्रामलक्षण- तद्दानादिवर्णनं नाम सप्तविंशोऽध्यायः ।। २७ ।।**

## ॥ अष्टाविंशोऽध्यायः ॥

### श्रीकृष्ण उवाच

सा गता स्नातुकामाऽथ नदीं पापविनाशिनीम् ।
पप्रच्छ तं गुरुं विप्रं विनयावनता सुधीः ॥ १ ॥
किंनामेयं नदी विप्र किं कार्यं वद चात्र मे ।
जैगीषव्यस्त्वेवमुक्तो वाक्यमेतदुवाच ह ॥ २ ॥

### जैगीषव्य उवाच

श्रुणु भद्रे प्रवक्ष्यामि माहात्म्यं पापनाशनम् ।
इयं नदी महाभागे सदा पापविनाशिनी ॥ ३ ॥
ब्रह्महत्यादिपापौघो यत्र स्नानेन नश्यति ।
प्रत्यक्षं दृश्यते ह्यत्र स्नानं कर्तुं समुद्यतैः ॥ ४ ॥
जलं चाशुभ्ररूपेण पापैश्च परिदृश्यते ।
यावच्छुभ्रोदकं नैव तावत्स्नानं च कारयेत् ॥ ५ ॥
यावच्छुभ्रोदकं नैव तावत्पापं न नश्यति ।
शुद्धोदके समायाते पापं नष्टमिति ध्रुवम् ॥ ६ ॥
कलावित्थं विशालाक्षि महिमा दृश्यते भुवि ।
अत्र स्नानं प्रकर्तव्यं दातव्यं दानमुत्तमम् ॥ ७ ॥
ततश्च ज्ञानमासाद्य विष्णुलोकं स गच्छति ।
गुरुस्त्रीगमनाच्चन्द्र अहल्यायां गतो हरिः ॥ ८ ॥
सुरापानाच्च शुक्रस्तु सुवर्णहरणाद्बलिः ।
ब्रह्महत्याश्च रुद्रस्तु नृगो दत्तापहारतः ॥ ९ ॥
सूतस्य हननाद्रामो निर्मुक्तो ह्यत्र भामिनि ।
नानेन सदृशं तीर्थं न भूतं न भविष्यति ॥ १० ॥

स्नानं कुरु महाभागे तेन सिद्धिं ह्यवाप्स्यसि ।
जैगीषव्येण मुनिना पित्रा च सह कन्यका ॥ ११ ॥
स्नानं चकार विधिवदुदतिष्ठच्च भामिनी ।
यावच्च पौरुषं सूक्तं तावत्कालं व्यतिष्ठत ॥ १२ ॥
पश्चाज्जप्त्वा महामन्त्रं वेंकटेशाभिधं परम् ।
द्विजातीन् प्रीणयित्वा सा वस्त्रद्रव्यादिभूषणैः ॥ १३ ॥
तस्माच्च प्रययौ देवी कुमारीतीर्थमुत्तमम् ।
कुमारीमहिमानं च श्रुत्वा स्नानं चकार सा ॥ १४ ॥
पुनरावृत्य सा देवी ह्यन्तरा विरजा नदीम् ।
दृष्ट्वा पप्रच्छ सा देवी जैगीषव्यं गुरुं प्रभुम् ॥ १५ ॥
किंसंज्ञकेयं विप्रेन्द्र किं कार्यं ह्यत्र मे वद ।
जैगीषव्यः पृष्ट एवमुवाच करुणानिधिः ॥ १६ ॥
इयं भागीरथी कन्ये आयाति ह्यन्तरेण तु ।
अतः सा प्रोच्यते ह्यन्तर्गङ्गेति परमर्षिभिः ॥ १७ ॥
कन्ये ह्यस्यास्ति सलिलं श्रीनिवासप्रियं सदा ।
अत्र स्नानं यः करोति स याति परमां गतिम् ॥ १८ ॥
स्नानं चकार सा कन्ये जले परमपावने ।
दानादिकं तथा ज्ञात्वा जजाप परमं मनुम् ॥ १९ ॥
श्रीनिवाससमीपं तु पुनरागत्य भामिनी ।
अङ्गप्रदक्षिणं चक्रे भक्त्या वेंकटनायकम् ॥ २० ॥
ब्राह्मणादीन् प्रीणयित्वा वस्त्रगन्धादिभूषणैः
पुनः परदिने प्रातः स्वामिपुष्करिणीजले ॥ २१ ॥
स्नानं कृत्वा महाभाग ययौ तुम्बुरुसंज्ञकम् ।
पप्रच्छ तं गुरुं देवी तीर्थं किन्नामकं वद ॥ २२ ॥

**जैगीषव्य उवाच**

इदं तुम्बुरुकाभिज्ञं नारि वै वरवर्णिनि ।
पुरा तुम्बुरुणा साकं नारदस्तपसि स्थितः ॥ २३ ॥
अत्र प्रादुरभूद्विष्णुर्नारदस्य हिताय च ।
स्नानं यः कुरुते ह्यत्र स याति परमां गतिम् ॥ २४ ॥
अत्र स्नानं मनुष्याणां सर्वेषां दुर्लभं कलौ
अत्र स्नानं मनुष्याणां नाल्पस्य तपसः फलम् ॥ २५ ॥
तत्र स्नात्वा च पीत्वा च दत्वा दानान्यनेकशः ।
पुनरागत्य सा देवी श्रीनिवासं ननाम ह ॥ २६ ॥
तस्मिन् दिने ब्राह्मणांश्च तर्पयामास भामिनी ।
स्वामिपुष्करिणीं प्राप्य दीपान्प्राज्वालयत्सती ॥ २७ ॥
सोपानेषु महाभागा दीपावलिभिरंजसा ।
प्रीणयामास देवेशं श्रीनिवासं जगद्गुरुम् ॥ २८ ॥
पुनः परदिने प्राप्ते शक्रतीर्थमनुत्तमम् ।
कपिलाख्योर्ध्वदेशे तु तत्तीर्थं पावनं स्मृतम् ॥ २९ ॥
तत्र स्नात्वा महाभागा तदूर्ध्वं सा ययौ खग ।
विष्वक्सेनसरस्तत्र सर्वपापविनाशनम् ॥ ३० ॥
तत ऊर्ध्वं महाभागा ययौ तत्र ददर्श सा ।
पंचायुधानां तीर्थानि तेषु स्नानं चकार सा ॥ ३१ ॥
तदूर्ध्वं चाग्निकुण्डं स्याद्दुरारोहं ततोऽग्रतः ।
तस्योपरि ब्रह्मतीर्थं ब्रह्महत्याविमोचनम् ॥ ३२ ॥
सप्तर्षीणां तदूर्ध्वं तु पुण्यतीर्थं च सत्फलम्
दशाधिकफलं तेषां तीर्थानामुत्तरोत्तरम् ॥ ३३ ॥

एतेषां चैव माहात्म्यं को वा वक्तुमिहार्हति ।
ऋषितीर्थेषु सा कन्या चचार तप उत्तमम् ॥ ३४ ॥
ममावतारपर्यन्तं चरित्वा तप उत्तमम्
योगधारणया देहं त्यक्त्वा जाम्बवतो गृहे ॥ ३५ ॥
जाता जाम्बवती नाम ववृधे तस्य वेश्मनि ।
तस्याः पिता जाम्बवान्स ममाऽदात्कन्यकां तदा ॥ ३६ ॥
रुद्रानन्तरजा ज्ञेया मम भार्या खगेश्वर ।
य इदं परमाख्यानं वेङ्कटाद्रेर्महागिरेः ॥ ३७ ॥
को वा वर्णयितुं शक्तो मदन्यः पुरुषो भुवि ।
वेङ्कटेशस्य नैवेद्यं सदा लक्ष्मीः करोति वै ॥ ३८ ॥
ब्रह्मा पूजयते नित्यमेवं शास्त्रस्य निर्णयः ।
नैवेद्यभक्षिणां पुंसामुपहासं न कारयेत् ॥ ३९ ॥
स्वस्य प्रशस्त्यभावे तु नैवेद्यं च गुडादिकं ।
ग्राह्यमेव न सन्देहो ह्यन्यथा नरकं व्रजेत् ॥ ४० ॥
श्रीनिवासात्परो देवो न भूतो न भविष्यति ।
स्वयं वा पाचयित्वान्नं घृतपक्वादिकं तथा ॥ ४१ ॥
श्रीनिवासस्य नैवेद्यं दत्वा भोजनमाचरेत् ।
इदं तु परमं गोप्यं तवोक्तं च खगेश्वर ॥ ४२ ॥
न च कस्यापि वक्तव्यं गोप्यत्वात्खगसत्तम ।
इतः परं प्रवक्ष्यामि तारतम्यं श्रुणु प्रभो ॥ ४३ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे कन्याकृतनानातीर्थयात्रानिरूपणं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥**

## ।। एकोनत्रिंशोऽध्यायः ।।

या पूर्वसर्गे दक्षपुत्री सती तु रुद्रस्य पत्नी दक्षयज्ञे स्वदेहम् ।
विसृज्य सा मेनकायां च जज्ञे धराधराद्धिमवतो वै सकाशात् ।। १ ।।
सा पार्वती रुद्रपत्नी खगेन्द्र या शेषपत्नी वारुणी नाम पूर्वा ।
सैवागता बलभद्रेण रन्तुं द्विरूपमास्थाय महापतिव्रता ।। २ ।।
श्रीरित्याख्या चेन्दिरावेशयुक्ता तस्या द्वितीया प्रतिमा पेयरूपा ।
यदा शेषो नररूपेण वीन्द्र तपश्चचार विष्णुना सार्धमेव ।। ३ ।।
तदैव देवी वारुणी शेषपत्नी तपश्चक्रे चेन्दिराप्रीतये च ।
तदा प्रीता चेन्दिरा सुप्रसन्ना ह्युवाच तां वारुणीं शेषपत्नीम् ।। ४ ।।
यदा रामो वैष्णवांशेन युक्तः संपत्स्यते भूतले रौहिणेयः ।
ममावेशात्संयुता त्वं तु भद्रे श्रीरित्याख्या बलभद्रस्य रन्तुम् ।। ५ ।।
संपत्स्यसे नात्र विचार्यमस्तीत्युक्त्वा सा वै प्रययौ विष्णुलोकं ।
लक्ष्म्यावेशात् श्रीरितीड्यां समाख्यां लब्ध्वा लोके शेषपत्नी बभूव ।। ६ ।।
यदावेशो बहुलः स्याद्धरेश्च तदा रामः श्र्यभिधासंगमेव ।
करोति वीन्द्र सर्वथा वै रमायास्तदावेशो ह्यस्ति न संशयो हि ।। ६ ।।
या रेवती रेवतस्यैव पुत्री सा वारुणी बलभद्रस्य पत्नी ।
रामेण रन्तुं सर्वदा वारुणी तु पुत्रीत्वमाप्ता हन्त तस्यैव सुभ्रूः ।। ८ ।।
एवं त्रिरूपा वारुणी शेषपत्नी द्विरूपभूता पार्वती रुद्रपत्नी ।
सौपर्णिनाम्नी तव पत्नी खगेन्द्र यास्तास्तिस्रः षट् च विष्णोश्च स्त्रीभ्यः ।। ९ ।।
द्विगुणाधमा रुद्रशेषादिकेभ्यो दशाधमा त्वं विजानीहि पौत्रे ।

### गरुड उवाच

नीचाया जाम्बवत्याश्च शेषसाम्यं च कुत्रचित् ।
श्रूयते च मया कृष्ण निमित्तं ब्रूहि मे प्रभो ।। १० ।।

उमायाश्च तथा रुद्रः सदा दशगुणाधिकः ।
एवं त्वयोक्तं भगवन्निश्चयार्थं मम प्रभो ॥ ११ ॥

रेवती श्रीयुता श्रीश्च पेयरूपा च वारुणी ।
सौपर्णी पार्वती चैव तिस्रः शेषाच्छतावराः ॥ १२ ॥

इत्यपि श्रूयते कृष्ण कुत्रचिन्मधुसूदन ।
निमित्तं ब्रूहि मे कृष्ण तव शिष्याय सुव्रत ॥ १३ ॥

**श्रीकृष्ण उवाच**

नीचाया जाम्बवत्याश्च तदन्येषां खगाधिप ।
उत्तमानां च साम्यं तु ह्युत्तमावेशतो भवेत् ॥ १४ ॥

अवराणां गुणस्यापि ह्युत्तमानामधीनता ।
अस्तीति द्योतनायैव शतांशाधिक्यमुच्यते ॥ १५ ॥

यथा मयोच्यते वीन्द्र तथा जानीहि नान्यथा ।
तदनन्तरजान्वक्ष्ये श्रुणु काश्यपजोत्तम ॥ १६ ॥

चतुर्दशसु चेन्द्रेषु सप्तमो यः पुरन्दरः ।
वृत्रादीनां शरीरं तु पुरमित्युच्यते बुधैः ॥ १७ ॥

तं दारयति वज्रेण यस्मात्तस्मात्पुरन्दरः ।
चतुर्दशसु चेन्द्रेषु मन्त्रद्युम्नस्तु षष्टकः ॥ १८ ॥

मन्त्रानष्ट महावीन्द्र देवो द्योतयते यतः ।
मन्त्रद्युम्नस्ततो लोके उभावप्येक एव तु ॥ १९ ॥

मन्त्रद्युम्नावतारोऽभूत् कुन्तीपुत्रोऽर्जुनो भुवि ।
विष्णोर्वायोरनन्तस्य चेन्द्रस्य खगसत्तम ॥ २० ॥

पार्थश्चतुर्भिः संयुक्त इन्द्र एव प्रकीर्तितः ।
चतुर्ष्वपि च वायोश्च विशेषोऽस्ति सदाऽर्जुने ॥ २१ ॥

वालिनामा वानरस्तु पुरन्दर इति स्मृतः ।
चन्द्रवंशे समुत्पन्नो गाधिराजो विचक्षणः ॥ २२ ॥
मन्त्रद्युम्नावतारः स विश्वामित्रपिता स्मृतः ।
वेदोक्तमन्त्रा गाः प्रोक्ता धिया सन्धारयेद्यतः ॥ २३ ॥
अतो गाधिरिति प्रोक्तस्तदर्थं भूतले ह्यभूत् ।
इक्ष्वाकुपुत्रो यो वीन्द्र विकुक्षिरिति विश्रुतः ।. २४ ॥
स एवेन्द्रावतारोऽभूत् हरिसेवार्थमेव च ।
विशेषेण हरिं कुक्षौ विज्ञानाच्च हरेः सदा ॥ २५ ॥
अतो विकुक्षिनामाऽसौ भूलोके विश्रुतः सदा ।
रामपुत्रः कुशः प्रोक्त इन्द्र एव प्रकीर्तितः ॥ २६ ॥
वाल्मीकिऋषिणा यस्मात्कुशेनैव विनिर्मितः ।
अतः कुश इति प्रोक्तो जानकीनन्दनः प्रभुः ॥ २७ ॥
मन्त्रद्युम्नः पुरेन्द्रस्तु गाधिर्वाली तथार्जुनः ।
विकुक्षिः कुश एवैते सप्त चेन्द्राः प्रकीर्तिताः ॥ २८ ॥
यः कृष्णपुत्रः प्रद्युम्नः काम एव प्रकीर्तितः ।
प्रकृष्टप्रकाशरूपत्वात् प्रद्युम्न इति नामवान् ॥ २९ ॥
यो रामभ्राता भरतः काम एवाभवद्भुवि ।
रामाज्ञां भरते यस्मात् तस्माद्भरतनामकः ॥ ३० ॥
चक्राभिमानी कामस्तु सुदर्शन इति स्मृतः ।
ब्रह्मयुक् कृष्णपुत्रस्तु साम्बो जाम्बवतीसुतः ॥ ३१ ॥
कामावतारो विज्ञेयः सन्देहो नात्र विद्यते ।
यो रुद्रपुत्रः स्कन्दस्तु काम एव प्रकीर्तितः ॥ ३२ ॥
रिपूनाक्रन्दते नित्यं अतः स्कन्द इति स्मृतः ।
यो वा सनत्कुमारस्तु ब्रह्मपुत्रः खगाधिप ॥ ३३ ॥

कामावतारो विज्ञेयो नात्र कार्या विचारणा ।
सुदर्शनश्च भरतः प्रद्युम्नः साम्ब एव च ॥ ३४ ॥

सनत्कुमारः स्कन्दश्च षडेते कामरूपकाः ।
अतश्च हीन्द्रकामावप्युमादिभ्यो दशावरौ ॥ ३५ ॥

तयोर्मध्ये तु गरुड काम इन्द्राधमः स्मृतः ।
अहंकारभवः प्राणः अहंकारिकसंज्ञकः ॥ ३६ ॥

मरुत्स्वाद्यः स विज्ञेयः कामेन्द्राभ्यां दशाधमः ।
तदनन्तरजान्वीन्द्र श्रुणु वक्ष्ये समासतः ॥ ३७ ॥

श्रवणान्मोक्षमाप्नोति महापापाद्विमुच्यते ।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे एकोनत्रिंशोऽध्यायः ॥ २९ ॥**

## ॥ त्रिंशोऽध्यायः ॥

कामपुत्रोऽनिरुद्धोऽपि हरेरन्यः प्रकीर्तितः ॥ १ ॥

स एवाभूत् हरेः सेवां कर्तुं रामानुजो भुवि ।
शत्रुघ्न इति विख्यातः शत्रून् सूदयते यतः ॥ २ ॥

अनिरुद्धः कृष्णपुत्रात्प्रद्युम्नाद्योऽजनिष्ट ह ।
संकर्षणादिरूपैस्तु त्रिभिराविष्ट एव सः ॥ ३ ॥

एवं द्विरूपो विज्ञेयो ह्यनिरुद्धो महामतिः ।
कामभार्या रतिर्यातु द्विरूपा संप्रकीर्तिता ॥ ४ ॥

रुक्मपुत्री रुक्मवती कामभार्या प्रकीर्तिता ।
अतिप्रकाशयुक्तत्वात् तस्माद्रुक्मवती स्मृता ॥ ५ ॥

दुर्योधनस्य या पुत्री लक्षणा सा रतिः स्मृता ।
कृष्णपुत्रस्य भार्या सा लक्षणैः संयुतत्वतः ॥ ६ ॥

लक्षणाभिधया भूमौ दुष्टवीर्योद्भवा ह्यपि ।
एवं द्विरूपा विज्ञेया कामभार्या रतिः स्मृता ॥ ७ ॥

स्वायम्भुवो ब्रह्मपुत्रो मनुस्त्वाद्यो गुरोः समः ।
राजधर्मेण विष्णोश्च जातः प्रीणयितुं हरेः ॥ ८ ॥

बृहस्पतिर्देवगुरुर्महात्मा तस्यावतारास्त्रय आसन् खगेन्द्र ।
रामावतारे तारसंज्ञो बभूव ह्यम्भोजजावेशयुतो बृहस्पतिः ॥ ९ ॥

देवावतारान् वानरांस्तारयित्वा श्रीरामदिव्याचरितान्यवादीत् ।
अतो ह्यसौ तारनामा बभूव ह्यंगत्वमाप्तुं रामदेवस्य भूम्याम् ॥ १० ॥

कृष्णावतारे द्रोणनामा बभूव ह्यम्भोजावेशयुतो बृहस्पतिः ।
यस्माद्द्रोणात्सम्बभूवेति हेतोस्तस्मादसौ द्रोणसंज्ञो बभूव ॥ ११ ॥

भूभारभूतानुद्धतौ ह्यङ्गभूतो विष्णोः सेवां कर्तुमेवास भूमौ ।
बृहस्पतिः पवनावेशयुक्तः स उद्धवश्चेत्यभिधानमाप ॥ १२ ॥

यस्मादुत्कृष्टो हरिरत्र सम्यगतो ह्यसौ बुधवन्नाम चाप ।
सखा ह्यभूत्कृष्णदेवस्य नित्यं महामतिः सर्वलोकेषु पूज्यः ॥ १३ ॥

दक्षिणाङ्गुष्ठजो दक्षो ब्रह्मपुत्रो महामतिः ।
कन्याः सृष्ट्वा हरेः प्रीणन्नास भूमौ प्रजापतिः ॥ १४ ॥

पुत्रानुत्पादयितुं दक्षस्त्वतो दक्ष इति स्मृतः ।
शचीं भार्यां देवराजस्य विद्धि तस्या ह्यवतारं श्रुणु सम्यक् खगेन्द्र ।
रामावतारे नाम तारा बभूव सा वालिपत्नी केवला सा शची हि ॥ १५ ॥

रामान्मृते वालिसंज्ञे पतौ हि सुग्रीवसंगं सा चकाराथ तारा ।
अतो नागात्स्वर्गलोकं च तारा ह्युवास सा ह्यन्तरिक्षे च पापा ॥ १६ ॥

कृष्णावतारे सैव तारा च वीन्द्र बभूव भूमौ वीरसेनस्य पुत्री ।
चित्राङ्गदेति ह्यभिधा स्याच्च तस्याः सामीप्यमस्यास्त्वर्जुनेनैव नासीत् ॥ १७ ॥

उत्पादयित्वा बभ्रुवाहं च पुत्रं तस्यां त्यक्त्वा ह्यर्जुनो वै महात्मा ।
अतश्चोभे तारचित्रांगदे च शचीरूपे नात्र विचार्यमस्ति ॥ १८ ॥

पुलोमजा मन्त्रद्युम्नस्य भार्या या कौशिका गाधिराजस्य भार्या ।
विकुक्षिभार्या सुमतिश्चेति संज्ञा कुशस्य पत्नी कान्तिमतीति संज्ञा ॥ १९ ॥

एताः सप्त ह्यवताराश्च शच्या जानीहि वै नास्ति विचारणात्र ।
शची रतिश्चानिरुद्धो मनुर्दक्षो बृहस्पतिः ।
षडन्योन्यसमाः प्रोक्ताः अहंकाराद्दशाधमाः ॥ २० ॥

अथ यः प्रवहो वायुर्मुख्यवायोः सुतो बली ।
स वायुषु महानद्य स वै कोणाधिपस्तथा ॥ २१ ॥

नासिक्यश्च स एवोक्तो भौतिकश्च स एव तु ।
अतिवाहः स एवोक्तो यतो गम्यो मुमुक्षुभिः ॥ २२ ॥

दक्षादिभ्यः पंचगुणादधमः संप्रकीर्तितः ।

## गरुड उवाच

प्रवहश्चेति संज्ञां स किमर्थं प्राप तद्वद ॥ २३ ॥

अर्थः कश्चास्ति तन्नाम्नः प्रतीतस्तं वदस्व मे ।
गरुडेनैवमुक्तस्तु भगवान् देवकीसुतः ॥ २५ ॥

उवाच परमप्रीतः संस्तूय गरुडं हरिः ॥

## कृष्ण उवाच

प्रकर्षं हरितत्त्वानि वहते सर्वदा यतः ॥ २६ ॥

अतः प्रवहनामासौ कीर्तितः पक्षिसत्तम ।
सर्वोत्तमो विष्णुरेवेति नान्यो ब्रह्मादयस्तदधीनाः सदाऽपि ।
मयोक्तमेतत्तु सत्यं न मिथ्या गृह्णामि हस्तेनोरगं कोपयुक्तम् ॥ २७ ॥

सर्वं सत्यं यदि मिथ्या भवेत्तु तर्हि ह्यसौ दंशतु मे ह्यहीन्द्रः ।
एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत् सोऽपि सर्पः ॥ २८ ॥

एतस्य वै धारणादेव वीन्द्र स वायुपुत्रः प्रवहेत्याप संज्ञाम् ।
ये वा लोके विष्णुमूर्तिं विहाय दैत्यस्वरूपान् रेणुकादीन् कुदेवान् ॥ २९ ॥

तेषां तथा तत्पितृणां च पूजां कुर्वन्ति सत्यं व्यर्थमेव भवेद्धि ।
एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ दंशतु मामहीन्द्रः ॥ ३० ॥

पितृस्थितं प्रविहायैव यस्तु पितृनुद्दिश्य केवलं यः करोति ।
स पापात्मा नरकान्वै प्रयातीत्यतद्वाक्यं सत्यमेतद्ब्रवीमि ॥ ३१ ॥

न श्रीः स्वतन्त्रा नापि विधिः स्वतन्त्रो न वायुदेवो नापि शिवः स्वतन्त्रः ।
तदन्ये नो गौरिपुलोमजाद्याः किं वक्तव्यं नात्र लोके स्वतन्त्राः ॥ ३२ ॥

लोके स्वतन्त्रः परमो विष्णुरेव सत्यं सत्यं भुजमुद्धृत्य सत्यम् ।
एतत्सत्यं यदि मिथ्या भवेत्तु तदा त्वसौ दंशतु मामहीन्द्रः ॥ ३३ ॥

जीवश्च सत्यः परमात्मा च सत्यः तयोर्भेदः सर्वदा सत्य एव ।
जडश्च सत्यः जडजीवादिभेदः सत्यः सदा जडविष्ण्वोश्च भेदः ॥ ३४ ॥

भेदः सत्यः सर्वजीवेषु नित्यं सत्या जडानां च भिदा सदाऽपि ।
एतत्सत्यं यदि मिथ्या भवेत्तु तदा त्वसौ दंशतु मामहीन्द्रः ॥ ३५ ॥

एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत् सोऽपि सर्पः ।
एतस्य वै धारणादेव वीन्द्र स वायुपुत्रः प्रवहेत्याप संज्ञाम् ॥ ३६ ॥

द्वयोः स्वरूपं प्रविदित्वैव पूर्वं यः स्वीकरोति द्वयमेव नित्यं ।
स्नानादिकं च प्रकरोति नित्यं स पापात्मा नैव मोक्षं प्रयाति ॥ ३७ ॥

तस्माद्द्वयं प्रविहायैव नित्यं सुखी भवेन्नात्र विचार्यमस्ति ।
एतत्सत्यं यदि मिथ्या भवेत्तु तदा त्वसौ दंशतु मामहीन्द्रः ॥ ३८ ॥

## गरुड उवाच

किं तद्द्वयं देवदेवेश किंवा तत्कारणं कीदृशं मे वद त्वम् ।
द्वयोस्त्यागः कीदृशो मे वद त्वं त्यागात्सुखं कीदृशं ब्रूहि देव ॥ ३९ ॥

## कृष्ण उवाच

द्वयं चाहुस्त्विन्द्रिये द्वे बलिष्ठे देहे ह्यस्मिन् शिश्नजिह्वे सुदुष्टे ।
अवान्तरे श्रोत्रनेत्रे खगेन्द्र द्वयं चाहुस्तत्स्वरूपं च वक्ष्ये ।॥ ४० ॥

श्रोत्रस्वभावो लोकवार्ताश्रुतौ च ह्यतीव मोदस्त्वादरास्वादने च ।
हरेर्वार्ताश्रवणे दुःखजालं श्रोत्रस्वभावो जडता तन्द्रिता च ॥ ४१ ॥

नेत्रस्वभावो दर्शने स्त्रीनराणां ह्यत्यादरान्नास्ति निद्रादिकं च ।
हरेर्भक्तानां दर्शने दुःखरूपो विष्णोः पूजादर्शने दुःखजालम् ॥ ४२ ॥

द्वयोः स्वरूपं प्रविदित्वैव पूर्वं पुनः पुनः स्वीकरोत्येव मूढः ।
शिश्नं मौर्ख्याच्चैव कुत्रापि योनौ प्रवेशयेत्सर्वदा ह्यादरेण ॥ ४३ ॥

भयं च लज्जा नैव चास्ते वधूनां तथा नृणां वनितानां यतीनाम् ।
स्वस्त्रीऋतौ ह्यनिषिद्धे दिनेऽपि सुवामयज्ञेन स्वभावश्च वीन्द्र ॥ ४४ ॥

रसास्वभावो भक्षणे सर्वदाऽपि ह्यनर्पितस्यान्नभक्ष्यस्य विष्णोः ।
तथोपहारस्य च तत्स्वभावः ह्यभक्षाणां भक्षणे तत्स्वभावः ॥ ४५ ॥

अलेह्यलेहस्य च तत्स्वभावः पातुं त्वपेयस्य च तत्स्वभावः ।
द्वयोः स्वरूपं प्रविचार्य मूढः पुनः पुनः स्वीकरोत्येव नित्यम् ॥ ४६ ॥

तस्य स्नानं व्यर्थमाहुश्च यस्मात्तस्मात्त्याज्यं तद्द्वयोः कार्यमेव ।
अभिप्रायं ह्येतमेवं खगेन्द्र जानीहि त्वं प्रवहस्यैव तत्त्वम् ॥ ४७ ॥

भार्याद्वयं ह्यविदित्वा स्वरूपं स्वीकृत्य चैकां प्रविहायैव चैकाम् ।
स्नानादिकं कुरुते मूढबुद्धिः व्यर्थं चाहुर्मोक्षभागी न चैव ॥ ४८ ॥

एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ दंशतु मामहीन्द्रः ।

**गरुड उवाच**

भार्याद्वयं किं वद त्वं ममापि तयोः स्वरूपं किं वद त्वं मुरारे ॥ ४९ ॥

तयोर्मध्ये ग्राह्यभार्यां वद त्वमग्राह्यभार्यां चापि सम्यग्वद त्वम् ।

**कृष्ण उवाच**

बुद्धिश्च पत्नी सा द्विरूपा खगेन्द्र दुष्टा चैका त्वपरा सुष्ठुरूपा ॥ ५० ॥

तयोर्मध्ये दुष्टरूपा कनिष्ठा ज्येष्ठा तु या सुष्टबुद्धिस्वरूपा ।
कनिष्ठया नष्टतां याति जीवः सुनिष्ठतां ज्येष्ठया यान्ति योग्य ॥ ५१ ॥

कनिष्ठायाः श्रुणु वक्ष्ये स्वरूपं श्रुत्वा तस्यास्त्यागबुद्धिं कुरुष्व ।
जीवं य वै प्रेरयन्ती कनिष्टा काम्यं धर्मं कुरुते सर्वदाऽपि ॥ ५२ ॥

क ब्राह्मणाः क्च विष्णुर्महात्मा क वै कथा क च यज्ञाः क गावः ।
क चाश्वत्थः क च स्नानं क शौचमेतत्सर्वं नाम नाशं करोति ॥ ५३ ॥

मूढं पतिं रेणुकां पूजय त्वं मायादेव्या दीपदानं कुरुष्व ।
सुभैरवादीन् भज मूढ त्वमद्य हरिद्राचूर्णं धारय सर्वदाऽपि ॥ ५४ ॥

ज्येष्ठाष्टम्यां ज्येष्ठदेवीं भजस्व भक्त्या सूत्रं गलबन्धं कुरुष्व ।
बनदाष्टम्यां मरिगदं भजस्व तथा सूत्रं स्वगले धारयस्व ॥ ५५ ॥

दीपस्तम्भं सुदिने पूजयस्व तत्सूत्रमेव स्वगले धारयस्व ।
महालक्ष्मीदिवसे चाद्यलक्ष्मीं सम्यक्पूजां कुरु त्वं हि भक्त्याऽथ जीव ॥ ५६ ॥

लक्ष्मीसूत्रं स्वगले धारय त्वं महालक्ष्मीवान्भवसीत्युत्तरत्र ।
विवाहमौंजीदिवसे भाग्यकामः सुगुग्गुलान् धारयस्वातिभक्त्या ॥ ५७ ॥

सुवासिनीं पूजय त्वं हि भक्त्या गन्धैः पुष्पैर्धूपदीपैः पते त्वम् ।
वरार्तिक्यं कांस्यपात्रे निधाय कुर्वार्तिक्यं देवतानां सदा त्वम् ॥ ५८ ॥

पिचुमन्दपात्राणि वितत्य भूमौ नम त्वं क्षम्यतां चेति चोक्त्वा ।
महादेवीं पूजयस्वाद्य भक्त्या सद्वैष्णवानां मा ददस्वाप्यथान्नम् ॥ ५९ ॥

सद्वैष्णवानां यदि वान्नं ददासि भाग्यं च ते पश्यतो नाशमेति ।
स्ववामहस्ते वेणुपत्रं निधाय दीपं धृत्वा सव्यहस्ते पते त्वम् ॥ ६० ॥

उत्तिष्ठ भोः पंचगृहेषु भिक्षां कुरुष्व सम्यक् प्रविहायैव लज्जाम् ।
आदौ गृहे षड्रसान्नं च कृत्वा जगज्जाया भोजनं त्वं कुरुष्व ॥ ६१ ॥

तच्छेषान्नं भोजयित्वा पते त्वं तासां चरणे शरणं त्वं कुरुष्व ।
तासां हस्तं पुस्तके स्थापयित्वा त्राहीत्येवं तन्मुखैर्वाचयस्व ॥ ६२ ॥

त्वं खड्गदेवं पूजयस्वाद्य भर्तः तत्सेवकान् पूजयस्वाद्य सम्यक् ।
तैः सार्धं श्वानशब्दं कुरुष्व हरिद्राचूर्णं सर्वदा त्वं च धत्स्व ॥ ६३ ॥

कुरुष्व त्वं भीमसेनस्य पूजां पञ्चामृतैः षोडशभिश्चोपचारैः ।
तत्कौपीनं रौप्यजं कारयित्वा समर्पय त्वं दीपमालां कुरुष्व ॥ ६४ ॥

तद्दासवर्यान् भोजस्वाद्य भक्त्या गर्ज त्वं हि भीम भीमेति सुष्ठु ।
तद्दासवर्यान् मोदयस्व स्ववस्त्रैः मद्यैर्मांसद्रव्यजालेन नित्यम् ॥ ६५ ॥

महादेवं पूजयस्वाद्य सम्यङ् महारुद्रैरतिरुद्रैश्च सम्यक् ।
हरेत्युक्त्वा जंगमान् पूजय त्वं शैवागमे निपुणान् शूद्रजातान् ॥ ६६ ॥

शाकम्भरीं विवशः शाकजातान् सुपाचयित्वा च गृहे गृहे ।
ददस्व भक्त्या परमादरेण स्वलंकृतः संस्तुवंस्तद्गुणांश्च ॥ ६७ ॥

कुलालदेवं पूजयस्वाद्य भक्त्या त्वं दृग्भ्यां वै तद्दिने शम्भुबुध्द्या ।
तद्भक्तवर्यान् पूजय त्वं हि सम्यक् तत्पादमूले वन्दनं त्वं कुरुष्व ॥ ६८ ॥

सुपंचभ्यां मृण्मयीं शेषमूर्तिं पूजां कुरु त्वं क्षीरजालादिकैश्च ।
सुनागपाशं हि गले च बद्ध्वा तच्छेषान्नं भुंक्ष्व भुंक्ष्वेति नित्यम् ॥ ६९ ॥

दिने चतुर्थे पूजय त्वं सुभक्त्या सुमृण्मयाज्जनितं वै गणेशं ।
दूर्वाङ्कुरैर्मोदकैः पूजयित्वा च भर्तः तन्नैवेद्यं भुंक्ष्व भुंक्ष्वाद्य सुष्ठु ॥ ७० ॥

इत्यादिकं प्रेरयित्वा पतिं सा जीवं नष्टं प्रकरोत्येव नित्यम् ।
तस्याः संगाज्जीवरूपः पतिस्तु सम्यग् दुःखं इहलोके परत्र ॥ ७१ ॥

तस्याः सङ्गं सुविदूरे विसृज्य ज्येष्ठासङ्गं कुरु सम्यक्सदा त्वं ।
सुबुद्धिरूपा त्वीरयन्ती जगाद भजस्व विष्णुं परमादरेण ॥ ७२ ॥

हरिं विनाऽन्यं न भजस्व नित्यं सा रेणुका त्वां तु न पालयिष्यति ।
अदृष्टनामा हरिरेव नित्यं फलप्रदो यदि न स्यात्खगेन्द्र ॥ ७३ ॥

जुगुप्सितां श्रुत्यनुक्तां च देवीं पतिद्रुहां सर्वदा सेवयित्वा ।
तस्याः प्रसादात्कुष्ठभगन्दराद्यैः भुक्त्वा दुःखं संयमिनीं प्रयासि ॥ ७४ ॥

तदा कुदेवी कुत्र गता वदस्व मे ह्यतः पते त्वं न भजस्व देवीम् ।
पते भज त्वं ब्राह्मणान् वैष्णवांश्च संसारदुःखात्तारकान् सुष्ठुरूपान् ॥ ७५ ॥

शौचादिकं प्रविहायैव कष्टं मायादेव्या भजनात् किं वद त्वम् ।
ज्येष्ठाष्टम्यां ज्येष्ठदेवीमलक्ष्मीं लक्ष्मीति बुद्ध्या पूजयित्वा च सम्यक् ॥ ७६ ॥

तस्याः सूत्रं गलबद्धं च कृत्वा नानादुःखं ह्यनुभूयाः पते त्वम् ।
यदा पते यमदूतैश्च पाशैर्बद्ध्वा च सम्यक् ताड्यमानैः कशाभिः ॥ ७७ ॥

तदा ह्यलक्ष्मीः कुत्र पलायिताऽसावतो मूलं विष्णुपादं भज त्वम् ।
पते भज त्वं सर्वदा वायुतत्त्वं न चाश्रयेस्त्वं सूक्ष्मस्कन्दं च मूढ ॥ ७८ ॥

दत्वा तस्मै नवनीतं च भक्त्या तदुच्छिष्टं भक्षयित्वा पते हि ।
तस्याश्च सूत्रं गलबन्धं च कृत्वा इहैव दुःखान्यनुभूय चास्से ॥ ७९ ॥

यदा पते यमदूतैश्च पाशैर्बद्धश्च सम्यक् ताड्यमानः कशाभिः ।
तदा स्कन्दः कुत्र पलायतेऽसावतो मूलं विष्णुपादं भज त्वम् ॥ ८० ॥

दीपस्तम्भं पूजयित्वा पते त्वं सूत्रं च बद्ध्वा स्वगले च भक्त्या ।
तदा बद्ध्वा यमदूतैश्च पाशैर्दीपस्तम्भैस्ताड्यमानस्तु सम्यक् ॥ ८१ ॥

दीपस्तम्भः कुत्र पलायितोऽभूदतो मूलं विष्णुपादं भज त्वम् ।
लक्ष्मीदिने पूजयित्वा च लक्ष्मीं सूत्रं तस्याः स्वगले धारितस्त्वम् ॥ ८२ ॥

यदा पते यमदूतैश्च पाशैर्बद्ध्वा सम्यक् ताड्यमानः कशाभिः ।
तदा लक्ष्मीः कुत्र पलायितासावतो मूलं विष्णुपादं भज त्वम् ॥ ८३ ॥

विवाहमौंजीदिवसे मूढबुद्धे सुगुग्गुलान् धारयित्वा सुभक्त्या ।
वरान्नार्तिक्यं कांस्यपात्रे निधाय कृत्वार्तिक्य उद उदेति शब्दम् ॥ ८४ ॥

तथा वसित्वा पिचुमन्दस्य पत्रं प्रनृत्य चैव परमादरेण ।
यदा तदा यमदूतैश्च पाशैर्बद्ध्वा बद्ध्वा ताड्यमानश्च सम्यक् ॥ ८५ ॥

तव स्वामिन् कुलदेवी महात्मन् पलायिता कुत्र मे तद्वद त्वम् ।
जलदेवीं पूजयित्वा च सम्यक् कण्ठाभरणैर्विधुराणां च केशैः ॥ ८६ ॥

सन्तिष्ठमाने यमदूता बलिष्ठाः सन्ताड्यमाने मुसलैर्भिन्दिपालैः ।
यदा तदा कुत्र पलायिता सा केशैर्विहीना लम्बकर्णं च कृत्वा ॥ ८७ ॥

स्ववामहस्ते वेणुमात्रं निधाय दीपं धृत्वा सव्यहस्ते च मूढः ।
गृहे गृहे भैक्षचर्यां च कृत्वा सन्तिष्ठमाने स्वगृहं च देवी ॥ ८८ ॥

यदा तदा यमदूतैश्च मूढ दीपैः सहस्रैर्दह्यमानश्च सम्यक् ।
निर्नासिका रेणुका मूढबुद्धे पलायिता कुत्र सा मे वद त्वम् ॥ ८९ ॥

सदा मूढ खड्गदेवं च भक्त्या तद्भक्तवर्यान् पूजयित्वा च सम्यक् ।
तैः सार्धं त्वं श्वानवद्गर्जयित्वा सन्तिष्ठमाने स्वगृहे चैव नित्यम् ॥ ९० ॥

यदा तदा यमदूतैश्च सम्यक् सन्ताड्यमानस्तत्र शब्दं प्रकुर्वन् ।
सन्तिष्ठमाने भक्तवर्यं विहाय तदा देवः कुत्र पलायितोऽभूत् ॥ ९१ ॥

पार्थक्येन भीमसेनप्रतीकं पंचामृतैः पूजयित्वा च सम्यक् ।
सुरौप्यजं नेत्रकौपीनमेवं दत्वा मूढ तिष्ठमाने गृहे स्वे ॥ ९२ ॥

यदा तदा यमदूतैश्च सम्यक् सन्ताड्यमाने यममार्गे च मूढः ।
भीमः स वै कुत्र पलायितोऽभूदतो मूलं विष्णुपादं भज त्वम् ॥ ९३ ॥

महादेवं पूजयित्वा च सम्यक् हरेत्युक्त्वा स्वगृहे विद्यमाने ।
यदा गृहं दह्यते वह्निना तु तदा हरः कुत्र पलायितोऽभूत् ॥ ९४ ॥

शाकम्भरीदिवसे सर्वशाकान् सुपाचयित्वा ब्राह्मणान् भोजयित्वा ।
यदा तदा यमदूता बलिष्ठाः सन्दह्यमाने ब्राह्मणैः सार्धमेव ॥ ९५ ॥

शाखामृगीवत्सा कुदेवी महात्मन् पलायिता कुत्र मे हि वद त्वम् ।
कुलालदेवं पूजयित्वा च भक्त्या कार्पासं वै तेन दत्तं गृहीत्वा ॥ ९६ ॥

सन्तिष्ठमाने यमदूतैश्च सम्यक् सन्दह्यमाने ताड्यमाने कुठारैः ।
कुलालदेवं श्मश्रुदंष्ट्रं च नेत्रं विहाय वै कुत्र पलायितोऽभूत् ॥ ९७ ॥

यदा पंचम्यां मृण्मयं शेषमूर्तिं संपूज्य भक्त्या विद्यमाने गृहे स्वे ।
तदा बद्ध्वा यमदूताश्च सम्यक् सन्नह्यमाने नागपाशैश्च बद्ध्वा ॥ ९८ ॥

स्वभक्तवर्यं प्रविहाय नागः पलायितः कुत्र वै संवद त्वम् ।
दर्वाङ्कुरैर्मोदकैः पूजयित्वा विनायकं पंचखाद्यैस्तथैव ॥ ९९ ॥

सन्तिष्ठमाने यमदूतैश्च सम्यक् सन्ताड्यमाने तप्तदण्डैश्च मूढ ।
दन्तं विहायैव च विघ्नराजः पलायितः कुत्र मे संवद त्वम् ॥ १०० ॥

विवाहकाले पिष्टदेवीं सुभक्त्या संपूजयित्वा विद्यमाने गृहे स्वे ।
यदा तदा यमदूतैश्च बद्ध्वा विष्ठाकूपे पात्यमाने च मूढ ॥ १०१ ॥

विष्ठादेवी पीड्यमानं च भक्तं विहाय सा कुत्र पलायिताऽभूत् ।
विवाहकाले रजकस्य गेहं गत्वा सम्यक् प्रार्थयित्वा च मूढ ॥ १०२ ॥

यत्स्तम्भसूत्रं कलशे परीत्य पूजां कृत्वा विद्यमाने गृहे स्वे ।
यदा तदा यमदूताः स्वभक्तं तत्स्तम्भसूत्रं तस्य मुखे निधाय ॥ १०३ ॥

सन्ताड्यमाने स्तम्भसूत्रस्य देवी पलायिता कुत्र मे संवद त्वम् ।
विवाहकाले पूजयित्वा च सम्यक् चण्डालदेवीं भक्तवर्यांश्च तस्याः ॥ १०४ ॥

तद्भक्तवर्यैः शूर्पमध्ये च नीरैः संसेचयित्वा विद्यमाने गृहे स्वे ।
यदा तदा यमदूताश्च बद्ध्वा सन्ताड्यमाने चर्मणा मूढबुद्धे ॥ १०५ ॥

चण्डालदेवी कुत्र पलायिता सा सुमूढबुद्धे विष्णुपादं भज त्वम् ।
ज्वरादिभिः पीड्यमाने च पुत्रे गृहे स्थितं ब्रह्मदेवं च सम्यक् ॥ १०६ ॥

धूपैर्दीपैर्भक्ष्यभोज्यैश्च पुष्पैः पूजां कृत्वा तिष्ठमाने गृहे स्वे ।
यदा तदा यमदूतैश्च बद्ध्वा सन्ताड्यमाने वेणुपाशादिभिश्च ॥ १०७ ॥

स ब्रह्मदेवः क्व पलायितोऽभूत् सुमूढबुद्धे विष्णुपादं भज त्वम् ।
सन्तानार्थं बृहतीं पूजयित्वा गले बद्ध्वा बृहतेर्वै फलं च ॥ १०८ ॥

सन्तिष्ठमाने यमदूताश्च बद्ध्वा सन्ताड्यमाने बृहती कण्टकैश्च ।
तदा देवी बृहती मूढबुद्धे पलायिता कुत्रौ मे तद्वद त्वम् ॥ १०९ ॥

भजस्व मूढ परमं च दैवतं नारायणं तारकं सर्वदुःखात् ।
संक्षुद्रदेवेषु मतिं च मा कुरु नच श्रुणु त्वं फल्गुवाक्यं तथैव ॥ ११० ॥

संक्षुद्रदेवान् भिन्दिपाले निधाय विसृज्य चैवं दूरदेशे महात्मन् ।
सन्दग्ध्य त्वं स्वकुलाचारधर्मान् संपातने नरके हेतुभूतान् ॥ १११ ॥

पुनीहि गात्रं सर्वदा मूढबुद्धे हरेः पादाब्जन्यतीर्थैः पवित्रैः ।
हृदि स्थितां चौर्यमुद्रां विहाय कृत्वा भूषां विष्णुमुद्राभिरग्र्याम् ॥ ११२ ॥

सदा मूढ हरिवार्ता भज त्वं ह्यायुर्गतं व्यर्थमेवं कुबुध्या ।
सद्वैष्णवानां संगमो दुर्लभश्च शुद्धं ज्ञानं तारतम्यस्वरूपम् ॥ ११३ ॥

हरिं गुरुं ह्यनुसृत्यैव नित्यं गतिं स्वीयां तेन जानीहि मूढ ।
दग्ध्वा दुष्टां बुद्धिमेवं च मूढ सुबुद्धिरूपं मां भज त्वं हि नित्यम् ॥ ११४ ॥

मया सार्धं सद्गुरुं प्राप्य सम्यग्वैराग्यपूर्वं तत्त्वजातं विदित्वा ।
तेनैव मोक्षं प्राप्नुहि भर्तृवर्य वायोर्लक्ष्म्याः संप्रसादाच्च विष्णोः ॥ ११५ ॥

इत्याशयं मनसा सन्निधाय तथा चोक्तं भक्तवर्यो मदीयः
अतो भक्तः प्रवहेत्येव संज्ञामवाप वीन्द्र प्रकृतं त्वं श्रुणुष्व ॥ ११६ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे तारतम्यनिरूपणद्वारा**
**विष्णोरेवोपास्यत्वमित्यर्थनिरूपणं नाम त्रिंशोऽध्यायः ॥ ३० ॥**

## ॥ एकत्रिंशोऽध्यायः ॥

### कृष्ण उवाच

प्रवहानन्तरान्वक्ष्ये श्रुणु पक्षीन्द्रसत्तम ।
यो धर्मो ब्रह्मणः पुत्रो ह्यादिसृष्टौ तदुद्भवः ॥ १ ॥

सज्जनान्सौम्यरूपेण धारणाद्धर्मनामकः ।
स एव सूर्यपुत्रोऽभूद्यमसंज्ञामवाप सः ॥ २ ॥

पापिनां शिक्षकत्वात्स यम इत्युच्यते बुधैः ।
यमलोके द्विरूपेण ह्यास्ते स हरिसेवकः ॥ ३ ॥

यमः संयमतामास्ते धर्तृणा धारकोऽपि च ।
चतुर्दशसु चेन्द्रेषु तृतीयेन्द्रः स सत्यजित् ॥ ४ ॥

यम एव स विज्ञेयः सत्यरूपाभिधं हरिम् ।
भक्त्या जितत्वाच्च खग सत्यजिन्नामकोऽभवत् ॥ ५ ॥

### गरुड उवाच

कया भक्त्या च भगवन् जितवान् सत्यनामकम् ।
एतद्ब्रूहि महाभाग शिष्याय तव विस्तरात् ॥ ६ ॥

### कृष्ण उवाच

यमश्च सत्यजिद्भूत्वा हरौ भक्तिं चकार सः ।
छित्वात्मदार सुतगेहपशुस्वकोशमुख्येषु मौक्तिकसुरत्नसुसर्ववस्तुषु ।

भक्तिं चकार परमस्य पदारविन्दे ब्रह्मादिभिर्हृदि धृते परमादरेण ।
लक्ष्म्या सदा परमभक्तिप्रवृद्धया च संलालिते भगवतश्चरणारविन्दे ॥ ८ ॥

वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्ये भागीरथीसुजनके च मलादिदूरे ।
श्रीविष्णुपादव्यतिरिक्तेषु नित्यं श्रीब्रह्मरुद्रादिपदादिकेषु ॥ ९ ॥

क्रमेण भक्तिं प्रचकार सत्यजित् ह्यापद्यपिनैव विवर्जितोऽसौ ।
स्वदेहसंस्थं पुरुषं पुराणं विचारयामास सदा स सत्यजित् ॥ १० ॥

इदं शरीरं परमास्वतन्त्रं ह्यन्ते च विड्भस्मसकीटसंज्ञितम् ।
यावच्छरीरे ह्यभिमानश्चकास्ति तावद्भयं संसरणं च तावत् ॥ ११ ॥

यावच्छरीरावयवेषु पुष्टिस्तावच्च संगो विषयेषु नित्यं ।
यावच्च संगो विषयेषु तावत् तावच्च कामो ह्यभिवर्धतेऽस्मिन् ॥ १२ ॥

संवर्धमानेषु च कामवृत्तिषु क्रोधस्तु नित्यं प्रविजायतेऽस्मिन् ।
संवर्धमाने क्रोधजाले शरीरे तस्मान्मोहो जायतेऽस्मिन् शरीरे ॥ १३ ॥

तस्मान्मोहाज्जायतेऽस्मिन् सरीरे स्मृतिभ्रंशो जायते वै शरीरे ।
स्मृतिभ्रंशाद्बुद्धिनाशो भवेद्धि बुद्धेर्नाशात् नश्यते विष्णुमार्गात् ॥ १४ ॥

अतोऽभिमानं वर्जयित्वा शरीरे पादारविन्दे भक्तिकामश्च विष्णोः ।
त्यक्त्वा देहे ह्यभिमानं च सत्यजिद्धृत्वा विष्णोर्हृदि पादारविन्दम् ॥ १५ ॥

तपश्चचार परमं चोत्तमं च संवत्सरं दिव्यसाहस्रमेव ।
सम्यक् तपो विघ्नविकर्तुकामा दुर्बुद्धिरूपा कलिभार्या समागात् ॥ १६ ॥

कामक्रोधौ लोभमोहौ मदश्च मात्सर्योऽपि कलिपुत्राश्च सर्वे ।
समागमंत्सत्यजितस्तपश्च सन्नाशितुं वीर्यबलोपपन्नाः ॥ १७ ॥

दुर्बुद्धिरूपा प्ररुरोद तस्मिन् गात्रे स्वपुत्रैश्च समन्विता सा ।
पते मदीयं वचनं श्रुणुष्व चास्मान् विसृज्यैव तपः करोषि ॥ १८ ॥

विष्णुस्तु ते किं प्रददाति सत्फलं तेनैव पूर्तिर्न च मे भवेद्धि ।
तवैव सङ्गं न करोमि नित्यं शौचादिकं ह्यसमर्था च कर्तुम् ॥ १९ ॥

न धौतवस्त्रं च वसामि नित्यं स्नानं सदा नैव करोमि मन्दा ।
निर्माल्यशेषं न विधारयामि भस्मादिकं चैव विधारयामि ॥ २० ॥

नैवेद्यशेषं तुलसीविमिश्रितं न वै भुंजे मूढपते सदाऽपि ।
मद्योग्यमन्नं पर्युषितं च भर्तुः सुतैलयुक्तं च पलांडुसंयुतम् ॥ २१ ॥
विहाय चान्नं विष्णुपादारविन्दे कथं करोषि स्नेहमनुत्तमं च ।
सुतप्तमुद्रां न धारयिष्ये पृष्ठस्थकच्छं दन्तशुद्धिं च त्यक्ष्ये ॥ २२ ॥
एकादशी नैव कर्तुं समर्था चैकादश्यां मैथुनं नैव त्यक्ष्ये ।
मदीयगात्रं सुकृशं चैव जातं पुत्रा मदीयाः सुकृशाश्च जाताः ॥ २३ ॥
त्वदीयगेहे यदि नित्यं वसामि पुत्रैः साकं नाशमायामि मूढ ।
उदीर्य सा सत्यजितो गृहं तु त्यक्त्वा ययौ पुत्रगणैश्च साकम् ॥ २४ ॥
यस्मिन् गृहे काम्यधर्मांश्च नित्यं कुर्वन्ति तस्मिन् प्रविवेश पुत्रैः ।
तदागमत्सत्यजितो वरं च दातुं शचीशः स शिवेन चोदितः ॥ २५ ॥
प्रलोभितं वरदानैश्च तं तु ह्यागत्य चोचे सत्यजितं महाप्रभुम् ।
उत्तिष्ठ धर्म त्वदभीष्टं वरं च वृणुष्व शीघ्रं मत्सकाशाच्च देव ॥ २६ ॥
तदैव रुद्रोऽपि समागतश्च तदैव वायुश्च समागतोऽभूत् ।
इन्द्रस्य वाक्यं च तदैव श्रुत्वा ददर्श चाग्रे पुरुषत्रयं च ॥ २७ ॥
के चैव यूयं वदत स्वरूपं इति श्रुतश्चेन्द्र ह्युवाच तं प्रभुम् ।
अहं चेन्द्रस्त्वपरस्तु रुद्रस्तृतीयोऽसौ परमो मातरिश्वा ॥ २८ ॥
दास्यामि ते चाश्वगजादिकं च ह्यनर्घ्यरत्नं वस्त्रगृहादिकं च ।
इत्युक्तोऽसौ सत्यजिद्वै महात्मा ह्युवाच चेदं हरिपादं च स्मृत्वा ॥ २९ ॥

## सत्यजिदुवाच

कर्ता च सर्वजगतः परमो हरिस्तु
तेनैव दत्तमखिलं च सदैव भाग्यम् ।
कर्ता च चैव जगतः पुरुषाच्च भिन्नो जीवः
समस्तसुखदुःखफलादिकानाम् ॥ ३० ॥

तस्मात्क्षमैव परमो भवतां च धर्मो दिष्टानुसारिफलदस्तु हरिश्चनम्यः ।
एवमुक्तो मघोनस्तु तूष्णीमास तदा खग ॥ ३१ ॥
समक्षं रुद्रदेवस्य मातरिश्वाऽब्रवीद्वचः ।

## वायुरुवाच

भो धर्म विष्णुर्विश्वकर्ता च नित्यं स्वतन्त्रत्वात्सत्यमेवोक्तमङ्ग ॥ ३२ ॥
विष्णोरन्यः सर्वकर्ता च नैव तदीयत्वात्सर्वदा सूत्रवच्च ।
इदं त्वदीयं मन्मतं चैवमेवेत्येवं शश्वन्नैव कार्यात्र शंका ॥ ३३ ॥
यद्यप्येवं विष्णुरेव पृथिव्यां स्वतन्त्रत्वात्सर्वकर्ता तथापि ।
जीवस्यापि कर्तृता चास्ति देव न विष्णुवत्तदधीनत्वमस्ति ॥ ३४ ॥
तत्रापि वक्ष्ये तव युक्तिं महात्मन्नहरहः सन्ध्यामुपासीत नित्यम् ।
इत्यादिश्रुत्या विहितं कर्मजातं तत्तद्वर्णैः कार्यमस्योचितं च ॥ ३५ ॥
तत्तत्सर्वं कार्यमेवेह पुंसां निषिद्धमन्यत्त्याज्यमेवं च यत्नात् ।
यद्यप्यस्ति कर्तृता चैव विष्णोस्तथाप्यस्ति कर्तृता हर्यधीना ॥ ३६ ॥
जीवः सदा चेश्वराधीनकर्ता विधेर्निषेधस्य च गोचरत्वात् ।
जीवस्य कर्तृत्वमनेन प्राप्तं हरेरधर्मं च कथं ब्रवीषि ॥ ३७ ॥
तत्रापि वक्ष्ये श्रुणु धर्म परात्मन् जीवः सदापीश्वरप्रेरणायाः ।
अधीनयत्नोऽपि च कर्तृभावात् पराधीनां कर्तृतां स्वीकुरुष्व ॥ ३८ ॥
अतोऽन्यथा त्वं यदि मन्यसे च विधेर्निषेधस्य च को वदस्व ।
अतस्तयोर्निर्विषयत्वमेव स्याद्वा हरेर्वापि विषयत्वं सदा स्यात् ॥ ३९ ॥
पराधीना कर्तृता चास्ति जीवे सत्यं नित्यं त्वं विजानीहि धर्म ।
एतच्च कर्म पुरुषस्य नित्यं प्रत्यक्षसिद्धं च तथा प्रयत्नः ॥ ४० ॥
प्रत्यक्षसिद्धेन च कर्मणैव तेनानुमेया प्रेरणा केशवस्य ।
नांगीकरोषि प्रेरणां केशवस्य ह्यकारणादेव भवेच्च कार्यम् ॥ ४१ ॥

तस्माज्ज्ञानी विहितं चापि कर्म सदा कुर्वन् विष्णुना प्रेरितो हि ।
तेनैव विष्णोर्गतिमाप्नोति सम्यक् ज्ञानं लब्ध्वा कारणं दैवमेव ॥ ४२ ॥

मत्वा चेत्थं विहितं कर्मजातं हित्वा मत्वा कर्तृता नास्ति चेति ।
निरयं वापि तामसीं वै गतिं च प्राप्नोत्येवं नात्र विचार्यमस्ति ॥ ४३ ॥

विष्णोर्वशत्वं जीवसङ्घस्य नित्यं ज्ञातव्यं एवं नरकाद्भीरुणा च ।
कार्यत्वेन विहितं कर्मजातं स्वस्य स्वयं स्वेन कार्यमेव स्वयोग्यम् ॥ ४४ ॥

जीवस्य कर्तृत्वमथो हरेश्च ह्यवश्यमेतत् सुविजानीहि नित्यं ।
अंगीकार्यं ज्ञानसिध्यर्थमेव प्रामाणिकत्वाच्च सुधर्मराज ॥ ४५ ॥

जीवस्थिता कर्तृता सर्वदैषा करोमीति ह्यनुभूतेश्च सिद्धा ।
प्रत्यक्षसिद्दा ह्यत एषा च धर्म हीशाधीनत्वे चागमं त्वं श्रुणुष्व ॥ ४६ ॥

नान्योऽस्ति कर्ता स हि सर्वस्य कर्तेत्यादिरूपादीश्वराधीनता स्यात् ।
विमतं सर्वं चेश्वराधीनमेव सदा जन्यत्वाद् भृत्यवच्चैव राज्ञः ॥ ४७ ॥

सर्वस्य विश्वस्य हरेर्वशत्वं लिङ्गागमाभ्यां प्रमितं सदापि ।
प्रत्यक्षसिद्धं जीवकर्तत्वमेव चैतद्द्वयं नैव हेयं कदाचित् ॥ ४८ ॥

एवं विवेकी सर्वदा चैव जानन् कार्यं कर्म कुरुते वै तथैव ।
कार्यस्यास्य कर्मणः प्रेरकं च विष्णुं जानन् सर्वदा विष्णुबुद्ध्या ॥ ४९ ॥

एतादृशो ह्यधिकारस्थजीवो भवेत्प्रमाणत्रितयानुगुणी । *

प्रारब्धशेषं भोक्तुमेवं स धर्मः स एवाभूद्वायुयुक्तः खगेन्द्र ।
माण्डव्यशापाच्च यमो बभूव विद्यारतत्वाद्विदुरो नाम चासीत् ॥ ६१ ॥

य एवासीत्सत्यजिन्नाम धर्मः स एवाभूद्वायुयुक्तः खगेन्द्र ।
युधिष्ठिराख्यो विष्णुभक्तः पृथिव्यां भोक्तुं साम्राज्य सौम्यरूपेण चैव ॥ ६२ ॥
क्रोधादिरूपान् जेतुशीलोऽस्ति युद्धे ह्यतो युधिष्ठिरेत्येव संज्ञामवाप ॥ ६३ ॥

---

*मूलपुस्तके एतत्श्लोकानन्तरं विद्यमानाः श्लोकाः अतीव अस्पष्टाः अनन्विताश्च वर्तन्ते ।

एते हि वीन्द्रं चत्वार यम एव प्रकीर्तिताः ।
रामावतारे सूर्यसूनुः खगेन्द्र सुग्रीवाख्यो ब्रह्मयुक्तः स सूर्यः ॥ ६४ ॥
स एव सूर्यः पुनरेव भूम्यां कृष्णावतारे कर्णसंज्ञो बभूव ।
विष्णोः सदा सन्निधानाच्च वीन्द्र महाबली चास्त्रवेत्ता बभूव ॥ ६५ ॥
एवं द्विरूपः सूर्य एवेति नित्यं विजानीयात्तत्र भक्तिश्च कार्या ।
रामावतारे योऽङ्गदो वालिपुत्र इन्द्राविष्टो रामभक्तो महात्मा ॥ ६६ ॥
स्वायंभुवाख्यस्य मनोश्च पत्नी शतरूपाख्या विष्णुभक्ता सदैव ।
चत्वार एते प्रवहात्सदैव द्विगुणाधमा विष्णुभक्ताः सदैव ॥ ६७ ॥
ततस्तु वरुणो देवः सूर्यादीनामनन्तरः ।
वरुणावताराश्चत्वारः मण्डूको वसुषेणकः ॥ ६८ ॥
महाभिषक् शन्तनुश्च क्रमेणैवाभवन् भुवि ।
मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम् ॥ ६९ ॥
चतुर्धावस्थितं देहे श्रुणु रूपचतुष्टयम् ।
विश्वं च तैजसं प्राज्ञं तुरीयं च चतुष्टयम् ॥ ७० ॥
दक्षिणास्थिस्थितो विश्वः जीवजाग्रत्प्रदः सदा ।
पूर्णत्वात् विश्वसंज्ञोऽसौ तैजसश्चापि स स्मृतः ॥ ७१ ॥
दक्षिणाक्षिस्थितो वायुर्दक्षिणाक्षिस्थितं हरिम् ।
वामाक्षिसंस्थितां लक्ष्मीं दक्षिणांसे निधाय च ॥ ७२ ॥
दक्षिणाक्षिस्थितं जीवं दीपवच्च प्रकाशकम् ।
वामस्कन्दे निधायैव कण्ठदेशो स्थितं हरिम् ॥ ७३ ॥
तैजसाख्यं ययौ धीमान् तदधीनं करोत्यसौ ।
तैजसो वायुना सार्धं जीवस्यैव प्रदर्शयन् ॥ ७४ ॥
स्वप्नांश्च वासनाजन्यान् पदार्थांश्च विधाय च ।
ततो वायुश्च तं जीवं कण्ठस्थं तैजसं विभुम् ॥ ७५ ॥

पूर्ववत्स्कन्धमारोप्य प्रययौ हृदि संस्थितम् ।
प्राज्ञाख्यं परमात्मानं तत्समीपे निधाय च ॥ ७६ ॥
प्राज्ञस्यालिङ्गनं चैव यदा जीवः करोति च
तदा वायुर्हरिं ध्याति सुप्तो भूर्भूरिति प्रभुम् ॥ ७७ ॥
सुप्त इत्युच्यते जीवो ह्यभूरित्यसुराः स्मृताः ।
तुरीयोऽपि हरिवार्योदक्षिणस्कन्धमारुहत् ॥ ७८ ॥
जीवस्तु सव्यस्कन्धं तु तदा जीवं मृतं विदुः ।
चतुर्धावस्थितं देहे मण्डूको ह्यस्तुवन् हरिम् ॥ ७९ ॥
मण्डं सूक्ष्मं तु विज्ञेयं उ इत्युत्कृष्टवाचकम् ।
कस्तु मस्तकवाची स्यात् कं सुखं च समीरितम् ॥ ८० ॥
सूक्ष्मोत्कृष्टमस्तकत्वान्मण्डूक इति स स्मृतः ।
ब्रह्मशापात्तु वरुणो महाभिषगभूद्भुवि ॥ ८१ ॥
इलायां च नृपो भूत्वा हरिं नारायणाभिधम् ।
महाभिषेकविधिना पूजयामास सोऽब्धिपः ॥ ८२ ॥
अतो महाभिषङ्नाम प्राप भूम्यां खगाधिप ।
स एव शन्तनुर्नाम बभूव पृथिवीतले ॥ ८४ ॥
रामावतारे वरुणः सुषेणोऽभूच्च वानरः ।
रामकार्यस्य सिध्द्यर्थं रामभक्तो बभूव ह ॥ ८५ ॥
सुपूर्णसद्गुणे विष्णौ चेष्टते सर्वदा यतः ।
अतः सुषेणनामासौ वरुणः परिकीर्तितः ॥ ८६ ॥
पादपादार्धतो हीनः यमादिभ्यः खगाधिप ।
तदनन्तरजान् वक्ष्ये श्रुणु काश्यपसत्तम ॥ ८७ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे अंशावतरणपूर्वक तारतम्यकथनं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥**

## ॥ द्वात्रिंशोऽध्यायः ॥

### श्रीकृष्ण उवाच

यो ब्रह्मणोऽंगादभवत्स नारदः प्रारब्धभोगं जन्म शूद्रत्वमाप ।
यो मुक्तियोग्यान् नित्यसंसारिणश्च तमोयोग्यान् सुखदुःख च मध्यं ॥ १ ॥

ददाति यस्मान्नारदाख्यां समाप सेवा हरेर्ह्ययमेवं सदैव ।
नरसम्बन्धात् ज्ञानमाहुर्महान्तो योग्यस्य जीवस्य ददाति नित्यम् ॥ २ ॥

अतो ह्यसौ ब्रह्मपुत्रो महात्मा संज्ञां वीन्द्र नारदेति ह्यवाप ।
यदा गतः संयमनीं च द्रष्टुं तत्र स्थितान् ददृशे मुक्तियोग्यान् ॥ ३ ॥

अवैष्णवान् सङ्गदोषेण वीन्द्र चैकादश्यां भोजनं कुर्वतश्च ।
एतादृशान्वदने सन्निधाय ह्ययोरसे तप्रूपांश्च जीवान् ॥ ४ ॥

दृष्ट्वा दृष्ट्वा मोक्षयोग्यांश्च जीवान् हा हा कृत्वा प्रययावग्रतश्च ।
तत्रापि जीवान् पापिनां सङ्गिसङ्गात् सद्वैष्णवानां दूषमाणान् हरेश्च ॥ ५ ॥

शिलातले प्रविधायैव जिह्वां सन्ताड्यमानान् मुसलैर्गण्डग्राव्णैः ।
यो वैष्णवान् क्रूरबुध्या च क्रोधात्संपश्यतां वीन्द्र चक्षुःसु तन्त्रम् ॥ ६ ॥

सन्तप्तसूचीः पूरयित्वा च बद्ध्वा सन्ताड्यमानान् ददृशे पापसंघान् ।
कांश्चित्तत्रापश्यन्नारदस्तु वेश्यादासीसंगमे चैव सक्तान् ॥ ७ ॥

तेषां शिश्नं वृषणं गण्डशैले सन्ताड्यमानान् मुसलैश्चूर्णयित्वा ।
अन्यत्राऽपि ददृशे नारदस्तु संछिद्यमानान् क्रकचैर्द्वेषयुक्तान् ॥ ८ ॥

मातापितॄन् द्रुह्यमाणांश्च वीन्द्र सुतैलवस्त्रैर्वेष्टयित्वा च दहतः ।
अधारितं तप्तमुद्राश्च एभिः सन्ताड्यमानांश्च तथा शिलोल्मुखैः ॥ ९ ॥

अन्यत्र चैवं ददृशे नारदस्तु गुरुद्रुहः परिघैस्ताड्यमानान् ।
ये दम्पत्योर्विरसं चक्रुरेवं सन्दह्यमानान् किंकरैर्विस्फुलिङ्गैः ॥ १० ॥

अनर्पितानां भोजिनो वै नरांश्च सन्तप्तशैले दह्यमानांश्च सम्यक् ।
तेषां जिह्वा तैलयन्त्रे निधाय संपीड्यमानान् ददृशे तान्मुनीन्द्राः ॥ ११ ॥

ये भक्तिपूर्वेण हरेश्च तीर्थं न स्वीचक्रुः पावके दग्धगात्राः ।
यैर्भोजनानन्तरमर्पितं हरेस्तुलसीपत्रं भक्षितं नैव तांश्च ।

सन्दह्यमानांश्च यमस्य लोके परिघैस्तप्तैर्मुद्गरैश्चापि नित्यम् ॥
शालग्रामस्पर्शहीनान्नरांश्च कुम्भीपाके दह्यमानान् ददर्श ।
अश्रुण्वतां हरिवार्तां सदैव ह्यसीपत्रे छिद्यमानांश्च देहान् ॥ १४ ॥

महामन्त्रान् प्रविहायैव नित्यं जपन्तस्तानन्यदेवस्य मन्त्रान् ।
तेषां जिह्वा छेदयित्वाऽतिघोरं संपीड्यमानान् ददृशे*नारदस्तु ॥ १५ ॥

एकैकानामाऽपि च पापसंघान् दहेद्धि वै भक्तिपूर्वं स्मृतं हि।
नाम्नां विष्णोर्गरणं नैव पुंसा समस्ततीर्थैर्बहुभिर्व्रतैश्च किम् ॥ १६ ॥

सर्वत्र देशे सर्वकालेषु तेषाममङ्गलं नास्ति नास्त्येव नित्यं ।
सर्वाणि नामानि च यौगिकानि गूढानि विष्णोः पठितानि वेदैः ॥ १७ ॥

तान्येव नामानि गृह्णाति चात्र संमोचितुं यमपाशाच्च पापात् ।
एवमेव हि शब्दाश्च प्रसिद्धिरपि लौकिकी ॥ १८ ॥

वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात् ।
विष्णावेव प्रसिद्धानि नामान्येव ह्यगायत ॥ १९ ॥

नृसिंह नारायण वासुदेव गोविन्द विष्णोऽच्युत माधवेति ।
हरे मुकुन्द श्रीधर श्रीनिवास दामोदरः पद्मनाभो वटुश्च ॥ २० ॥

कूर्मो झषः शिंशुमारो वराहो धन्वन्तरिः कृष्णरामस्तु कृष्णः ।
नामानि विष्णोश्च प्रगायमाने विंशच्च संख्यानि मुनीश्वरेण ॥ २१ ॥

---

*ददर्श इत्यर्थः ।

श्रुत्वा च सर्वे यातने (नारके) पच्यमाना मुक्ता ययुर्मन्दिरं वै मुरारेः ।
यमपाशविमुक्ता ये सर्वे ते ह्यधिकारिणः ॥ २२ ॥

उत्तमास्ते विजानीयात्संगदोषेण[१] पापिनः ।
यातनस्थाश्च सर्वेऽपि न मुक्ता यमपाशतः ॥ २३ ॥

अभक्त्या श्रुण्वतां नाम पापनिर्हरणाय वै ।
समर्था न भवत्येव यतो ह्यनधिकारिणः ॥ २४ ॥

भक्तेन पठितं नाम ह्यभक्तेन श्रुतं यदि ।
पापनिर्हरणे नैव समर्थो भवति ध्रुवम् ॥ २५ ॥

विपरीतज्ञानजनकं भवत्येव न संशयः ।
फलं च विपरीतं स्यान्नात्र कार्या विचारणा ॥ २६ ॥

भक्तेन पठितं नाम नित्यसंसारिणा श्रुतम् ।
सन्देहज्ञानजनकं तथा मिश्रफलप्रदम् ॥ २७ ॥

हरिभक्तेन मौढ्यादि तामसानां च मिश्रिणाम् ।
गतिर्भविष्यतीत्येवं बुध्या भक्त्या च वै खग ॥ २८ ॥

सम्यक् सुपठितं नाम दुःखदायि न संशयः ।
अभक्तपठितं नाम भक्तेन तु श्रुतं यदि ॥ २९ ॥

दुःखं सुबहुलं वीन्द्र नरको भुज्यते तदा ।
अभक्तपठितं नाम ह्यभक्तपठिता कथा ॥ ३० ॥

अभक्तपठिता वेदा अभक्तपठिता स्तुतिः ।
अभक्तपठितं मन्त्रं अभक्तपठितं वचः ॥ ३१ ॥

अभक्तपक्वं चान्नं हि हरिभक्तस्य वै खग ।
इहलोके यातने च महादुःखप्रदो भवेत् ॥ ३२ ॥

सुगायनमभक्तैश्च पठितं दुःखदं भवेत् ।
अवैष्णवकृतं दानं हरिभक्तस्य दुःखदम् ॥ ३३ ॥

अभक्तैश्च कृतं तीर्थं हरिभक्तस्य दुःखदम् ।
अवैष्णवकुलोत्पन्ना कन्या ग्राह्या तु वैष्णवैः ॥ ३४ ॥

दोषो नास्ति ग्रहीतृणां यदि सा तूत्तमा भवेत् ।
शालग्रामशिलादानमवैष्णवकृतं खग ॥ ३५ ॥

दोषो नास्त्येव तद्दानाद् वैष्णवानां खगेश्वर ।
अभक्तैश्चाहृतं पुष्पं तुलसीं च खगेश्वर ॥ ३६ ॥

महद्दुःखं भवेत्तेन भक्तस्यापि न संशयः ।
कन्यादानं वैष्णवैस्तु नाभक्ताय खगेश्वर ॥ ३७ ॥

सर्वथा नैव दातव्यं ह्यापद्यपि महामते ।
वराभावे यदि खग सभार्याय प्रदापयेत् ॥ ३८ ॥

तदभावे यदि खग श्रीनिवासाय वा ददेत् ।
नावैष्णवाय दातव्यं कन्यादानं तु सर्वथा ॥ ३९ ॥

कन्यां कनकसंपन्नां कनकाभरणभूषिताम् ।
दास्यामि विष्णुभक्ताय विष्णुलोकजिगीषया ॥ ४० ॥

विक्रीणित्वा यो ददाति स्वकन्यां स पापात्मा सत्कुलीनोऽपि वीन्द्र ।
विंशत्कुलैः सार्धमेवं खगेन्द्र स मज्जति पूयशोणादिरूपे ॥ ४१ ॥

अतो नैव विक्रयं वै सुतायाः कुर्यादेवं कन्यकादानमेव ।
देयं रौप्यं वस्त्रजाम्बूनदं च वाचा यस्तु याचते मूढबुध्द्या ॥ ४२ ॥

कन्याक्रयीत्येवमाहुर्महान्तः द्रव्य तदर्थं याचते सोऽपि तद्वत् ।
सुदुर्घटं वैष्णवैः श्रोत्रियाय कन्यादानं करणं चाहुरार्याः ॥ ४३ ॥

सुभूषणैर्भूषिता कन्यका च देया वीन्द्र श्रोत्रियाय द्विजाय ।
कन्याक्रयी गोक्रयी विष्णुमूर्तेस्तथा शिलाया गण्डिकायाः क्रयी च ॥ ४४ ॥

पुण्यस्यापि पुस्तकस्यापि वीन्द्र तथा वेदानां विक्रयी सप्त चैते ।
चण्डालसंज्ञा ग्राममध्ये खगेन्द्र ह्येषां गतिर्नैव जाने खगेन्द्र ॥ ४५ ॥

अतस्तु नारदश्चापि मोक्षस्यैवाधिकारिणः ।
समुद्धर्तुं तदा सम्यग् हरिनामान्यगायत ॥ ४६ ॥

यश्चाध्यायमिमं पुण्यं श्रुणोति श्रद्धयान्वितः ।
स याति परमं लोकं प्रसादान्नारदस्य च ॥ ४७ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे पुण्यपापविचारकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

## ।। त्रयस्त्रिंशोऽध्यायः ।।

यो वह्निरासीत्पूर्वसर्गे खगेन्द्र वागिन्द्रियाद्ब्रह्मणः संप्रसूतः ।
स एवाग्निः संबभूव पृथिव्यां रामावतारे वानरो नीलसंज्ञः ।। १ ।।

सुनीलवर्णान्नीलसंज्ञामवाप निलीयते हृदि विष्णुर्ह्यतो वा ।
स एवाग्नी रामपुत्रो बभूव लवेति संज्ञामभवच्च वीन्द्र ।। २ ।।

लेलिह्यते सर्वदा रामनाम ह्यतश्चासौ लव इत्येव संज्ञाम् ।
स एवाग्निर्द्रुपदस्यैव राज्ञः सत्कुण्डमध्यादुत्थितः कृष्णभक्तः ।। ३ ।।

धृष्टत्वरूपाद्योतनत्वाच्च वीन्द्र धृष्टद्युम्नेत्येव संज्ञामवाप ।
नीलो लवो द्रुपदस्यापि पुत्रो ह्येते त्रयश्चाग्निरेवेति विद्धि ।। ४ ।।

यो जरानामको व्याधः स भृगुः पक्षिसत्तम ।
पादप्रहारदोषेण जराग्रस्तो बभूव ह ।। ५ ।।

अतो जरानामकोऽभूत् कृष्णस्य वधकाम्यया ।
भृशं शीघ्रं समुद्दिष्टं गतिर्गमनमुच्यते ।। ६ ।।

कार्यार्थं त्वरया याति ह्यतो भृगुरुदीरितः ।
पुरा भृगुर्वरुणस्यैव पुत्रः जगाम द्रष्टुं वृत्रहणं शचीपतिम् ।। ७ ।।

तदा भृगुर्ददृशे विष्णुभक्तं शचीपतिं नारदाद्यैश्च युक्तम् ।
नमस्कारं तस्यकृत्वा खगेन्द्र तत्रोपविष्टे ह्यासने वारुणिस्तु ।। ८ ।।

तस्यां सभायां देवतानामृषीणां विवादोऽभूद्धरिसर्वोत्तमत्वे ।
केचिच्चाहू रुद्रदेवस्य श्रैष्ठ्यं अन्ये चाहुर्ब्रह्मणो श्रेष्ठतां च ।। ९ ।।

केचिच्चाहुर्विष्णुरेवेति तत्र ह्येवं विवादश्च बभूव तत्र ।
इन्द्रादयो देवसंघाश्च सर्वे ऋष्यादयो नारदाद्याश्च वीन्द्र ।। १० ।।

विचार्य सर्वे च भृगोः समक्षं संप्रेषणं चैव चक्रुस्तदर्थे ।
ब्रह्मादिषु त्रिषु मध्ये सदाऽपि को वा श्रेष्ठः कोऽधमः कश्च मध्यः ।। ११ ।।

निर्णेतुं हि वारुणिर्वै महात्मा ययौ कैलासं प्रथमं शीघ्रमेव ।
तत्र स्थितं भूतसंघैश्च साकं तथा पार्वत्या मर्मवाक्यैर्हसन्तम् ।। १२ ।।

दृष्ट्वोवाच रुद्रदेवं खगेन्द्र लज्जा नास्ति तव कथं महेश ।
लज्जां विहायैव कथं विनोदं करोषि पत्न्या सह लोकमध्ये ।। १३ ।।

स चैवमुक्तो भगवान्महेशः सुक्रोधदीप्तो ह्यभवत् क्षणेन ।
त्रिशूलमुद्यम्य हि हन्तुमेव ययौ च शीघ्रं च पिशाचनाथः ।। १४ ।।

तदा च देवी पार्वती रुद्रदेवं हस्ते गृहीत्वा तमुवाच देवी ।
अयं भृगुर्ब्राह्मणो विष्णुभक्तो न हन्तव्यः क्रोधबुध्या महात्मन् ।। १५ ।।

सद्ब्राह्मणान् पाति विष्णुः सदैव नारायणः सर्वजगन्निवासः ।
क्रोधः सर्वहरः शत्रुः क्रोधश्चाण्डाल उच्यते ।। १६ ।।

तत्रापि ब्राह्मणे क्रोधः समूलं हि विनश्यति ।
तत्रापि श्रोत्रिये क्रोधः समूलं हि विनश्यति ।। १७ ।।

तस्मात्क्रोधो न कर्तव्यो ब्राह्मणे गोषु सर्वथा ।
एवमुक्तः स रुद्रस्तु पार्वत्या च स्वभार्यया ।। १८ ।।

क्रोधं त्यक्त्वा सस्वजे च ह्युपविश्य महामतिः ।
रुद्रस्वरूपं ज्ञात्वा स जगाम ब्रह्मणो गृहम् ।। १९ ।।

ब्रह्माणं ददृशे तत्र सरस्वत्या समन्वितम् ।
तं दृष्ट्वा च भृगुः प्राह नालोक्यं ते मुखं सदा ।। २० ।।

यतः पंचमुखच्छेदादङ्गहीनोऽसि सर्वथा ।
एवमुक्तस्तु भृगुणा क्रोधाद्धन्तुं समाययौ ।। २१ ।।

न क्रोधार्होऽपि क्रोधीव दर्शयामास वै विधिः ।
विष्णुः सर्वोत्तमो देव इति दर्शयितुं प्रभुः ॥ २२ ॥

अतः क्रोधादयो दोषा नै चिन्त्या अजे गुरौ ।
ब्रह्मापि शमयामास स्वक्रोधं स्वेन तेजसा ॥ २३ ॥

तदा जगाम वैकुण्ठं द्रष्टं नारायणं प्रभुम् ।
तदा नारायणो देवो जानन्नप्याशयं भृगोः ॥ २४ ॥

शिश्ये स सुप्तिहीनोऽपि वक्ष ऊर्ध्वं विधाय च ।
तदा भृगुः समागत्य पदा वक्षस्यताडयत् ॥ २५ ॥

भृगुणा ताडितो विष्णुरुत्थाय ददृशे भृगुम् ।
पादसंवहनं चक्रे स्वाङ्कमारोप्य तस्य वै ॥ २६ ॥

वीजयामास व्यजनं लक्ष्मीः बुद्ध्यनुसारिणी ।
भृगुपादस्थितान् पांसून् लिलिम्पे स्वमुखे हरिः ॥ २७ ॥

भृगोः पादं संगृहीत्वा मस्तके ह्यक्ष्णयोर्हृदि ।
निधाय प्रार्थयामास चोवाच मधुसूदनः ॥ २८ ॥

**विष्णुरुवाच**

श्रुणु लक्ष्मि ब्राह्मणानां महिमा पापनाशकः ।
श्रवणादेव मे प्रीतिर्भवत्येव न संशयः ॥ २९ ॥

समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ३० ॥

आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः ।
समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः ॥ ३१ ॥

विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः ।
वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम् ॥ ३२ ॥

आधिव्याधिहरं नॄणां मृत्युदारिद्र्यनाशनम् ।
श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम् ॥ ३३ ॥

मया दृष्टो भृगुवर्यस्य पादो मया स्पृष्टं पादपद्मं द्विजस्य ।
अद्यैवाहं कृतकृत्योऽस्मि भद्रे ह्यद्यैवेह सर्वतीर्थावगाहः ॥ ३४ ॥

कृतो देवि मम गात्रं तु भद्रे सुपावितं ब्राह्मणपादस्पर्शात् ।
अद्यैव मे वसतयः पाविताश्च ह्यद्यैव त्वं भागवती च सुपावितासि ॥ ३५ ॥

नाहं बिभेमि सर्वथा ह्यम्भ्रणेश्च मायाबलाद् ब्रह्मदण्डाद्बिभेमि ।
नाहं बिभेमि शूलपाणेश्च शूलान्नाहं बिभेमि सुरराजस्य वज्रात् ॥ ३६ ॥

नाहं बिभेमि यमदण्डाच्च सुभ्रु नाहं बिभेमि वरुणस्य पाशात् ।
नाग्न्यर्कसोमानिलवित्तपास्त्रात् शंके भृशं ब्रह्मकुलावमानात् ॥ ३७ ॥

यथा मया मानिता ब्राह्मणाश्च तथा सर्वैर्माननीया हि नित्यं ।
एवं धर्मान् प्रथयितुं भक्तवर्गे न मेऽस्ति किंचित्तेन कृत्यं च देवि ॥ ३८ ॥

एवं चोक्त्वा देवदेवश्च विष्णुर्भृगुं प्राह धर्मसेतुर्महात्मा ।
भृगो पदं ते कोमलं पूतरूपं वक्षो मदीयमतिकाठिण्यरूपम् ॥ ३९ ॥

मदीयवक्षस्ताडनात्ते पदे च ह्यतीव दुःखं प्रापिते ह्यद्य सुष्ठु ।
ममापराधं क्षम्यतां विप्रवर्य ह्युक्त्वा चैव प्रणनामातिभक्त्या ॥ ४० ॥

ततो भृगुः प्रययौ व्रीडितश्च श्रीवत्सेति लक्ष्म विष्णोश्च जातम् ।
गत्वा भृगुः शम्बरारेः सभायामुवाच चेन्द्रं ऋषिदेवैर्युतं च ॥ ४१ ॥

सर्वोत्तमो विष्णुरेवेति नित्यं तस्मात्पश्चात् ब्रह्मवायू सदैव ।
तस्माद्रुद्रः क्रोधसंवर्जितात्मा ह्यतो हरेः सदृशः कोऽपि नास्ति ॥ ४२ ॥

यदा पूर्वं त्र्यम्बकस्य समीपं गत्वैवोचे मर्मभूतं च वाक्यम् ।
श्रुत्वा सोऽपि क्रोधसंवर्धितात्मा त्रिशूलेन हन्तुमभ्यागतो हि ॥ ४३ ॥

तदा देवी पार्वती तस्य क्रोधं संशान्तयामास च सान्त्वनेन ।
अतो रुद्रो ह्यधमः सर्वदैव निर्णीतं हि नात्र विचार्यमस्ति ॥ ४४ ॥

पश्चादहं ब्रह्मसमीपमेव गत्वैवोचे नर्मभूतं च वाक्यम् ।
मदीयवाक्यश्रवणादेव सोऽपि क्रोधाद्धन्तुमुदतिष्ठत्सभायाम् ॥ ४५ ॥

क्रोधं स्वकीयं स्वयमेव तावत्संशान्तयामास ततः स मध्यमः ।
ततः पश्चाद्विष्णुसामीप्यमेव गत्वा विष्णोर्वक्षसि ताडितं मया ॥ ४६ ॥

सन्ताडितश्चापि पदा स देवः विहाय क्रोधं विष्णुदेवो महात्मा ।
मां सान्त्वयित्वा च ततो हरिस्तु सर्वोत्तमेति निश्चितं वै मयैव ॥ ४७ ॥

तदा देवा वारुणेर्वाक्यसंघात् सर्वोत्तमत्वं निश्चयांचक्रुरेवं ।
पादप्रहाराद्दोषयुक्तो भृगुस्तु जरानाम व्याधसंज्ञो बभूव ॥ ४८ ॥

कृष्णावतारे कृष्णपुत्रं च साम्बं सुगुर्विणीवच्चक्रुरेवं कुमाराः ।
तत्रागतान् द्विजवर्यांश्च तेऽपि पृष्ट्वा सर्वेऽवंचयन् ब्राह्मणांश्च ॥ ४९ ॥

गर्भिण्येषा भवतः प्रष्टुमेव विलज्जति ब्रूत वै विप्रवर्याः ।
गर्भस्थपुत्रविषये विमतिं च तेऽपि तदैवोचुः प्रेरिता विष्णुनैव ॥ ५० ॥

इयं कन्या मुसलं खण्डभूतं प्रसूत एवात्र न विचारणा हि ।
तेनैव सर्वं यादवानां कुलं च विनाशमायाति न संशयोऽत्र ॥ ५१ ॥

तदा कुमारा मोचयित्वा च वस्त्रं ददृशुश्च सर्वे मुसलं खण्डभूतम् ।
वित्वा तदा सर्वकुमारकाश्च सुदुःखयुक्ताश्चोग्रसेनाय चोचुः ॥ ५२ ॥

तदोग्रसेनश्चिन्तयित्वा खगेन्द्र पिष्टं कृत्वा प्राक्षिपद्वै समुद्रे ।
मुखस्थितं चायसं घर्षयित्वा तलेषु शिष्टं प्राक्षिपन् वै समुद्रे ॥ ५३ ॥

मत्स्योऽग्रसच्चायसं तस्य पिष्टं तरङ्गाश्च प्राक्षिपन् तस्य तीरे ।
ऐरं जातं नाशने यादवानां जराव्याधो जगृहे तं च मत्स्यम् ॥ ५४ ॥

तत्कुक्षिस्थं चायसं तीक्ष्णभूतं संरोपयामास शरस्य चाग्रे ।
अतो जराख्यो व्याधरूपी खगेन्द्र भृगोः स्वरूपं हि विदुर्महान्तः ॥ ५५ ॥

या सा प्रसूतिर्भृगुभार्या खगेन्द्र प्रकर्षेण सूतिकर्त्री सुतानाम् ।
अतः प्रसूतिसंज्ञका सा बभूव हरेर्भक्ता भक्तवर्यस्य दासा ॥ ५६ ॥

वह्निः प्रसूतिर्भृगुरेते त्रयश्च पादोनभूता वरुणादेव वीन्द्र ।
एते त्रयः प्रवहादेव नित्यं द्विगुणाधमा नात्र विचार्यमस्ति ॥ ५७ ॥

तथा मित्राद्विगुणाच्चाधिका च शतावरा दक्षसंज्ञा खगेन्द्र ।
भृग्वादीनां यः स्वरूपं श्रुणोति तेषां प्रसादाज्ज्ञानमाप्यैव विष्णोः ॥ ५८ ॥

मोक्षं याति नात्र विचार्यमस्ति प्रीणाति नित्यं श्रीनिवासोऽपि तस्य ।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे भृगुचरित्रकथनं**

**नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥**

## ॥ चतुस्त्रिंशोऽध्यायः ॥

विश्वामित्रो गाधिपुत्रो मनीषी विश्वस्य मित्रादाप संज्ञां खगेन्द्र ।
विश्वं सर्वं ब्रह्मणा निर्मितं च मिनोति निर्माणसुत्राणनं च ॥ १ ॥
अतो विश्वामित्र इत्येव संज्ञामवाप लोके विष्णुभक्तो हि नित्यम् ।
यो वा वसिष्ठो ब्रह्मपुत्रः खगेन्द्र प्राणाज्जातो ब्रह्मणो विष्णुभक्तः ॥ २ ॥
इष्टं विष्णुं स्ववशे यः करोति ह्यतो वसिष्ठेति बभूव वीन्द्र ।
मरीचिर्मानसः पुत्रो ब्रह्मणः परमेष्ठिनः ॥ ३ ॥
मरीचयो ज्ञानरूपाः खगेन्द्र यस्यास्यद्वाराद्गलन्तीत्येव दृष्ट्वा ।
अतो मरीचिर्वामतोऽभूत्खगेन्द्र भक्तः सदा हरिपादारविन्दे ॥ ४ ॥
विरिंचाक्ष्णोरभवच्चात्रिसंज्ञो आनन्दरूपो विष्णुरेनं सदैव ।
त्राति ह्यस्मादत्रिसंज्ञो बभूव गाथां तदीयां श्रुणु वीन्द्र भक्त्या ॥ ५ ॥
पुरा ह्यत्रिं जनयित्वा विरिंचिस्तस्मिन्नेव प्रविहायैव यातः ।
तदा ह्यत्रिर्मनसा विष्णुमेव संचिन्तयामास श्रियः पतिं गुरुम् ॥ ६ ॥
तस्मिन् दिने जनितं वै मुनिं च सम्यक् द्रष्टुं चाययुर्वायुमुख्याः ।
इन्द्रादयोऽप्यागतास्तं च द्रष्टुं बालः कथं जीवति चैक एव ॥ ७ ॥
आदौ चेन्द्रः कृपया तं च बालं वने स्थितं सिहव्याघ्रादियुक्ते ।
उवाच बालं रक्षकस्तेऽद्य को वा कथं कुरुषे जीवयात्रां वनेऽस्मिन् ॥ ८ ॥
महादरिद्रोऽसि सुजन्मकाले मातापितृभ्यां त्याजितश्चैव बाल ।
स चैवमुक्तो वज्रिणां ब्रह्मपुत्रो ह्युवाच देवं वचनं चार्यवच्च ॥ ९ ॥

### बाल उवाच

मम त्राता चान्य एवास्ति नित्यं काले काले ह्यन्नपानादिकं च ।
अन्तर्व्याप्तो विष्णुरेवेह नित्यं स चैव मां त्वां च रुद्रादिकानाम् ॥ १० ॥
विष्णोर्दया यदि गच्छेन्मयीश तदा मरिष्ये नात्र विचार्यमस्ति ।
वनेषु सुप्तं दिष्टरूपो हरिस्तु संरक्षति व्याघ्रऋक्षादिकेभ्यः ॥ ११ ॥

गृहेषु सुप्तं पुत्रमित्रादिकैश्च तन्मध्य, एकं संगृहीत्वैव याति ।
शचीशातः सर्वदा वै मुरारिर्ब्रह्मादिकान् चेतनाचेतनांश्च ॥ १२ ॥
क्षणे क्षणे रक्षति नाशकश्च ह्यस्वातन्त्र्याद्विष्णुरन्योऽस्ति को वा ।
अहं महाभागवतो हि बालः सुच्छत्रभूतो हरिरास्ते पिता मे ॥ १३ ॥
वयोगतस्यापि शचीपते तव न सन्ति पित्रादय एव सुष्ठु ।
अतो दरिद्रस्तु त्वमेव नित्यं यतो न जानासि श्रियःपतिं हरिम् ॥ १४ ॥
कर्मानुसारेण पुरार्जितेन योग्यानुसारेण ममास्ति भाग्यं ।
योग्यानुसारेण तवास्ति भाग्यं भाग्यं तु भक्त्यादिकमेव मुख्यम् ॥ १५ ॥
माता च विष्णुश्च पिता हरिस्तु सखा च कृष्णो बान्धवो वामनश्च ।
व्यासो गुरुः श्रीनिवासस्तु मित्रं नारायणः कुलदेवः सदाऽपि ॥ १६ ॥
आचार्यभूतो यज्ञनामा हरिस्तु दानादिरूपो जामदग्र्यस्तु रामः ।
धन्वन्तरी रक्षको मां त्वपथ्याद् मार्गे वराहो रक्षकः सर्वदैव ॥ १७ ॥
वनेषु नित्यं रक्षको नारसिंहः विदिक्षु दिक्षूर्ध्वमधः समन्तात् ।
बालेन्द्रयोः कुर्वतोश्चैवमित्थं परस्परं हरितत्त्वे विवादम् ॥ १८ ॥
कालो गतो वत्सरार्धः खगेन्द्र बाधा नासीत् क्षुत्तृषादेस्तयोर्हि ।
क्षुधादिकाः पीडयन्त्येव नित्यं निरुद्यमं हरितत्त्वे खगेन्द्र ॥ १९ ॥
तदैवागात् त्र्यम्बको वै महात्मा वृको भूत्वा व्याघ्रसमो बले च ।
बालं दृष्ट्वा वृकरूपो हरस्तु पदा भूमिं विददारोरुवेगात् ॥ २० ॥
इन्द्रोऽपि दृष्ट्वा क्रोधयुक्तं वृकं च ह्युवाच बालं भीषयन् भीषणाय ।

### इन्द्र उवाच

हे वत्स त्वां बाल भोक्तुं वृकोऽयं समागतः किं प्रकरोषि चाद्य ॥ २१ ॥
अत्रैवाहं यदि वर्ते च बाल हनिष्यति मां च न संशयोऽत्र ।
तदोवाच बालको वै महात्मा स्मृत्वा स्मृत्वा नारसिंहं मुकुन्दम् ॥ २२ ॥

**बाल उवाच**

पलायस्व शीघ्रमेवं च शक्र त्वत्पक्षेऽपि रक्षको नास्ति विष्णुः ।
मत्पालको हरिरास्ते नृसिंहो मध्वान्तस्थो हृदये संस्थितश्च ॥ २३ ॥
एवं चोक्त्वा बालके संस्थिते तु तदागमन्मातरिश्वा महात्मा ।
शुनश्च रूपं पूर्वमेवापि वीन्द्र धृत्वा नृसिंहं सामगानैः स्तुवंश्च ॥ २४ ॥
सुरक्षितं बालकं वै खगेन्द्र दृष्ट्वा शुना प्राणपरीप्सयैव ।
पलायितो दूरदेशे वृकस्तु तदाऽगमच्छेषदेवो महात्मा ॥ २५ ॥
सर्पो भूत्वा कृष्णवर्णो महात्मा विभीषितं बालकस्यैव वीन्द्र ।
तदाऽगमत्खगरूपं गृहीत्वा सरोजयोनिः पुत्रसंरक्षणाय ॥ २६ ॥
पक्षस्य वातेन विशीर्णितोऽभूत् तदा चक्रे पुत्रनामाब्जयोनिः ।
आनन्दात्मा हरिरेवं सदैव तव त्राता चात्रिनामा ह्यतस्त्वम् ॥ २७ ॥
अतो ह्यत्रिः श्रीनिवासस्य भक्तो ब्रह्मादिदेवैर्मानितो लालितश्च ।
यो विष्णुभक्तो ह्यङ्गिरा ब्रह्मणस्तु मुखाज्जातं नन्दरूपं वचश्च ॥ २८ ॥
अतोऽङ्गिरा नाम बभूव लोके श्रीविष्णुभक्तो निर्जितो हीन्द्रपाणिः ।
यो विष्णुदासः पुलहो ब्रह्मणस्तु नाभेस्तु जातः श्रीनिवासैकनिष्ठः ॥ २९ ॥
जरादिभिः पालितं गात्ररूपं सुनिर्मितं हरिणा पंचभूतैः ।
तदैव सम्यग् हननं यः करोति ज्ञानादिकृच्छ्रेण हरेश्च भक्त्या ॥ ३० ॥
अतो ह्यसौ पुलहाख्यो बभूव सखा हरेः कृष्णनिष्ठः सदैव ।
यो वा पुलस्त्यो रामभक्तः सदैव श्रोत्रेन्द्रियाद्ब्रह्मणः संप्रसूतः ॥ ३१ ॥
योग्यानुसारं पूर्णसुखं छिनत्ति ह्यतोऽरिषड्वर्गगणः पुलः स्मृतः ।
त्यजत्यसौ तं सदा वै खगेन्द्र ह्यतः पुलस्त्येति च प्राप संज्ञाम् ॥ ३२ ॥
नारायणे भक्तियुतः क्रतुश्च कराज्जज्ञे ब्रह्मणो औरसस्तु ।
विशेषेण क्रियते पंचयज्ञो नारायणे चार्पणं सर्वदाऽपि ॥ ३३ ॥

अतः क्रतुर्नाम बभूव तस्य श्रीविष्णुदासो वायुदासः खगेन्द्र ।
अतश्चैते ब्रह्मपुत्राश्च सप्त श्रीविष्णुपादे च रताः सदैव ॥ ३४ ॥
वैवस्वतो सूर्यपुत्रो मनुश्च विश्वामित्रो नवसंख्याश्च सर्वे ।
परस्परं समभूताः खगेन्द्र बह्नेः सकाशादवराः सदैव ॥ ३५ ॥
मित्रात् किंचिच्चाधिकाः सर्वदैव जानीहि त्वं नात्र विचार्यमस्ति ।
आख्यानमेतद्गुणनिर्णयात्मकं श्रुणोति भक्त्या परमादरेण ॥ ३६ ॥
मरीचिमुख्यादिमहाप्रसादात् स याति विष्णोर्मन्दिरं देवपूज्यम् ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे विश्वामित्रादीनां जन्मचरित्रवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥**

## ॥ पञ्चत्रिंशोऽध्यायः ॥

यो द्वादशादित्यसंज्ञेषु मित्रश्चैकः सूर्यः कश्यपस्यैव पुत्रः ।
पाय्वात्मकश्चैव विष्णोर्हि भक्तः वर्षाकाले प्रमिनोत्येव वृष्टिम् ॥ १ ॥
तया प्रजास्त्राति नित्यं खगेन्द्र ह्यतश्चासौ मित्रसंज्ञामवाप ।
मित्रावतारो भीष्मको नाम राजा राड्वंशयुक्तः कृष्णभक्तः पृथिव्यां ॥ २ ॥
या विष्णुभक्ता गुरुभार्या च तारा मित्रस्य पुत्री मित्रवत् सा सती च ।
पातिव्रत्यं चोत्तमानां हि स्त्रीणां उपदेष्टुत्वात्तारकत्वाच्च तारा ॥ ३ ॥
तारा पृथिव्यां कृपिसंज्ञा बभूव द्रोणस्य भार्या ह्यत्रिऋषेः शरद्वतः ।
पातिव्रत्यं द्रोणरूपे गुरौ च सम्यक् चक्रे भूतले विष्णुभक्ता ॥ ४ ॥
यदा द्रोणो सर्वदानोज्झितः सन् शिलोंछवृत्त्या चोपजीवन् तदा हि ।
कृपिस्तदा संचकारैव नित्यं द्रोणान्तस्थं प्रीणयामास वीन्द्र ॥ ५ ॥
यदा द्रोणो कृच्छ्रचान्द्रायणं च मासोपवासं च तथा खगेन्द्र ।
तदा कृपी कृच्छ्रचान्द्रायणं च चकार विष्णुं प्रीणयामास तेन ॥ ६ ॥
कदाऽपि वस्त्रं नापि द्रोणः स वीन्द्र ह्यलंकारान् सुतरां नैव चाप ।
अथापि यस्याश्चेतसि पक्षिवर्य विकारं वै नाभवत्काऽपि काले ॥ ७ ॥
तस्य प्रभावाच्च विष्णोः प्रसादात् विधोः सकाशाद्दोषयुक्ताऽपि तारा ।
सुसाधुजानां स्मृतियोग्या बभूव सदा वीन्द्र पंचकन्यासु मध्ये ॥ ८ ॥
कोणाधिपो यो निर्ऋतिर्विष्णुभक्तः प्रवहस्यैव चोत्तमः पुत्र एव ।
विष्णुद्रुहो दुर्जनान्सर्वदैव ह्यत्तीति यस्मान्निर्ऋतिः सम्बभूव ॥ ९ ॥
रामावतारे दुर्मुखो वानरस्तु बभूव भूम्यां निर्ऋतिं तं हि विद्धि ।
विष्णुद्रुहो राक्षसान् सर्वदैव दृष्ट्वा दृष्ट्वा दुर्मुखं वै करोति ॥ १० ॥
अतो ह्यसौ दुर्मुखो नाम चाभूद्रामांघ्रिनिष्ठः सर्वदा वै खगेन्द्र ।
घटोत्कचो रुद्रयुक्तो बभूव हिडिम्बिपुत्रो भीमवीर्योद्भवोऽभूत् ॥ ११ ॥

कोणाधिपं निर्ऋतिं तं च विद्धि महाबली कृष्णभक्तः पृथिव्याम् ।
या भानुपुत्री प्रावही विष्णुनिष्ठा प्रवहस्य भार्या मित्रवत्सा च देवी ॥ १२ ॥
स्वभर्तृवद्वहति विष्णुधर्ममतोऽपि सा प्रावहीत्याप संज्ञाम् ।
स्त्रीणां महाप्रावही विष्णुधर्मानिन्लंकारान् धारयध्वं सदैव ॥ १३ ॥
हरिं गुरुं परमं देवताख्यं सूत्रं कण्ठे धारणात् रेणुकाऽपि ।
तालीं च धृत्वा मुखपद्मेषु नित्यं सन्दश्यते ब्रह्महत्यादिदोषः ॥ १४ ॥
हत्यादिरूपाः प्रविसृज्यैव तालीं सन्धारयन्तु गलसूत्रं च विष्णुम् ।
त्वदीयपूजां रेणुका नैव नित्यं गृह्णाति तस्या ह्यभिधा वै पिशाचाः ॥ १५ ॥
वृक्षे वृक्षे पूजनं ब्रह्मदेवो न गृह्णाति तस्य संज्ञः पिशाचः ।
शूद्रादिभिः स्थापिते वै प्रतीके पूजां नैव प्रतिगृह्णाति वायुः ॥ १६ ॥
तन्नामको दैत्यवर्यश्च तत्र पूजां गृह्णाति न कुरुध्वं च यूयम् ।
सवोत्तमाख्यं गलसूत्रं विहाय न शोभन्ते ललनाश्चैव यूयम् ॥ १७ ॥
हरेः कथाख्याभरणं विहाय न शोभन्ते ललनाश्चैव यूयम् ।
ललाटदेशे चोर्ध्वपुण्ड्रं गदां च सकुङ्कुमं प्रविहायैव यूयम् ॥ १८ ॥
न शोभन्ते ललनाः सुपापा अतो गन्धान्धारयध्वं मुरारेः ।
यासां जिह्वाग्रे कृष्णमन्त्रं न चास्ति तासां सङ्गं यः करोत्येव नित्यम् ॥ १९ ॥
तेषां क्रिया व्यर्थमाहुर्महान्तः सुरापानां लोकमाहुश्च तासाम् ।
ज्ञानं यासां नास्ति नारायणस्य तासां गतिर्ब्रह्महत्याकृतानाम् ॥ २० ॥
अतो यूयं हरिसर्वोत्तमाख्यं सुकण्ठसूत्रं बन्धयध्वं सदैव ।
अनन्तांशात्सर्वदा न्यूनभूतां लक्ष्म्याख्यकेशं धारयध्वं च यूयम् ॥ २१ ॥
लक्ष्म्याः सकाशात्कोटिगुणैर्विहीनौ विरिंचिवायू वस्त्रयुग्मम् सदैव ।
विधेः सकाशाच्छतगुणैर्विहीना गायत्र्याख्यां धारयध्वं हरिद्राम् ॥ २२ ॥
वायोः सकाशाच्छतगुणैर्विहीनां भारत्याख्यां धारयध्वं सुपुण्ड्रम् ।

वाणेः सकाशाच्छतगुणैर्विहीनां रुद्राख्यरूपां धारयध्वं गदां च ॥
रुद्रसमानं शेषसंज्ञं च यूयं सन्धारयध्वं कुङ्कुमं सर्वदैव ॥ २३ ॥
रुद्रसमानं गरुडाख्यं च यूयं सन्धारयध्वं धूपशेषं च नित्यं ।
शिवस्यैव शतगुणैर्विहीनां पार्वत्याख्यां धारयध्वं च मालाम् ॥ २४ ॥
शेषस्यापि दशगुणैर्विहीनां वारुण्याख्यां धारयध्वं च गन्धम् ।
वीन्द्रस्यैव शतगुणैर्विहीनां सौपर्ण्याख्यां धारयध्वं सुवर्णम् ॥ २५ ॥
यास्तारतम्यज्ञानहीनाश्च सर्वाः केशादिहीना विधवा एव नित्यम् ।
एवं स्त्रीणामवदद्विष्णुधर्ममतः सा वै प्रावहीत्येव संज्ञाम् ॥ २६ ॥
निर्ऋतिर्मित्रतारे च प्रावही च परस्परम् ।
समा इति विजानीहि नात्र कार्या विचारणा ॥ २७ ॥
मरीच्यादिभ्यः सर्वदा न्यूनभूताः सदा पर्जन्याद्विगुणा एव वीन्द्र ।
एषां स्वरूपं यः श्रुणोत्येव नित्यं तेषां प्रसादाद्वायुदेवप्रसादात् ॥ २८ ॥
विष्णोः प्रसादाच्च स याति लोकं सुशाश्वतं श्रीनिवासस्य वीन्द्र ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे अंशावतरणे ताराऽवतारवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥**

## ॥ षट्त्रिंशोऽध्यायः ॥

मित्राद्यनन्तरान्वक्ष्ये श्रुणु काश्यपनन्दन।
श्रवणात्सर्वपापघ्नान् श्रीनिवासपदाश्रयान् ॥ १ ॥

विष्वक्सेनो मुख्यवायोश्च पुत्रो नारायणस्य पार्षदो वै महात्मा।
इनाख्येन स्वामिना संयुतत्वात्सेनो विष्णोर्यस्य प्रत्यक् च नासा ॥ २ ॥

अतो विष्वक्सेनसंज्ञो बभूव विष्ण्वंघ्रिनिष्ठः खेन तुल्यः सदैव।
यावश्विनौ नासिकाख्येन्द्रियस्य नियामकौ विष्णुनस्तश्च जातौ ॥ ३ ॥

गन्धं प्रति ह्याशु संगच्छमानौ ततश्च तावश्विसंज्ञौ हि जातौ ।
यो विघ्नपो रुद्रपुत्रो महात्मा ह्याकाशात्मा वित्तपस्यैव तुल्यः ॥ ४ ॥

पौलस्त्यपुत्रो वित्तपो विष्णुभक्तो विष्णोर्वित्तात्सर्वदा पाति यस्मात् ।
अतो ह्यसौ वित्तपो नाम संज्ञामवाप वीन्द्र श्रीनिवासैकनिष्ठः ॥ ५ ॥

शतस्थमध्ये ह्युक्तशेषाश्च देवाः षडशीतिसंख्याः खेन तुल्याः सदैव ।
मित्रादिभ्यो ह्यधमाः किंचिदेव ज्ञेयो वीन्द्र श्रुणु तेषां मध्ये ह्युशेषावतारान् ॥ ६ ॥

यश्चारुदेष्णो मम पुत्रो महात्मा स एवं पूर्वं विघ्नपो नात्र शङ्का ।
सोमार्हदेवान् शतसंख्यान् श्रुणुष्व तेषां मध्ये ह्युक्तशेषावतारान् ॥ ७ ॥

श्रुणुष्व तेषां नामधेयानि वीन्द्र सर्वेऽपि ते विष्णुपादैकनिष्ठाः
तेषां नाम श्रुण्वतां पापनाशः सम्यक् ज्ञानं जायते सर्वदैव ॥ ८ ॥

ये कोटीनां नवसंख्याकदेवास्तेषां मध्ये शतसंख्येषु वीन्द्र ।
सोमाधिकारो वेदतन्त्रेषु प्रोक्तो द्वे ब्रह्मणी अधिके वीन्द्र विद्धि ॥ ९ ॥

वसवोऽष्टौ द्वादशादित्या रुद्रा एकादश स्मृताः ।
प्रधानवायुना सार्धं पंचाशन्मरुतः स्मृताः ॥ १० ॥

अश्विना हस्यतिश्चेति विपशेषानिरुद्धकाः ।
ब्रह्मब्रह्माण ऋभवो त्रय एकश्च संस्मृताः ॥ ११ ॥

विश्वेदेवा दश प्रोक्ता एक एव पितृत्रयः ।
द्यावापृथिव्यौ चैकैव शतस्थाश्च प्रकीर्तिताः ॥ १२ ॥
सर्वेऽपि विष्णुसक्ताश्च क्रमेण ज्ञानिनः स्मृताः ।
वसूनामष्टनामानि श्रुणु पक्षीन्द्रसत्तम ॥ १३ ॥
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुविभावसुः ।
एतेऽष्टसंख्या वसवस्तु प्रोक्ता तत्र द्युनामा विष्णुभक्तो महात्मा ॥ १४ ॥
कृष्णावतारे भूतले संप्रजातो ब्रह्मांशयुक्तो भीष्मसंज्ञामवाप ।
श्रीरुक्मिणीजनको वै महात्मा श्रीविष्णुपादाङ्घ्रिनिषेवणोत्सुकः ॥ १५ ॥
यो द्रोणसंज्ञो वसुरासीच्च वीन्द्र स एव जज्ञे नन्दगोपः पृथिव्याम् ।
श्रीकृष्णपादाङ्घ्रिनिषेवणोत्सुकः श्रीविष्णुदासः खेन तुल्यः सदापि ॥ १६ ॥
वह्निस्तूक्तः सप्तसंख्याश्च शेषः सर्वे सदा श्रीनिवासस्य दासाः ।
एकादशानां हरिपादे रतानां तेषां रुद्राणां श्रुणु नामानि वीन्द्र ॥ १७ ॥
भीमोऽभयो रैवतोऽजो महांश्चैव वृषाकपिः ।
अजैकपादहिर्बुध्न विरूपाक्षोग्रनामकौ ॥ १८ ॥
वामश्चैकादशः प्रोक्तो वायुभक्तास्तथा हरेः ।
अजैकपान्नाम रुद्रः पृथिव्यां हरेरङ्गत्वं प्राप्तुमेवं स जज्ञे ॥ १९ ॥
स सोमदत्तात्मज भूरिरुक्तः श्रीविष्णुभक्तः खेन तुल्यश्च वीन्द्र ।
अहिर्बुध्नः सर्वरुद्रैश्च युक्तो भूरिश्रवाख्यः सोमदत्तस्य पुत्रः ॥ २० ॥
विरूपाक्षोऽश्वत्थनामा बभूव श्रीविष्णुभक्तो खेन तुल्यश्च नित्यं ।
तेषां मध्ये बलवान् विष्णुभक्तः भूरिश्रवाः सर्वरुद्रैर्युतत्वात् ॥ २१ ॥
विष्कम्भाख्यो रुद्र एवेह पृथ्व्यां शारद्वतः पुत्रतामाप्य जज्ञे ।
कृपो नाम्ना विष्णुभक्तो महात्मा भीष्मानुवर्ती धृतराष्ट्रानुवर्ती ॥ २२ ॥
यः पत्रतापाख्यरुद्रः स एव बाल्हीकपुत्रत्वमवाप्य जज्ञे ।
स सोमदत्तो हरिभक्तवर्यः वायौ सुनिष्ठः खेन तुल्यः स एव ॥ २३ ॥

स एव रुद्रः पत्रतापाख्यनामा पुनर्जरासन्धसुतत्वमाप ।
स कृष्णभक्तः सहदेवेतिसंज्ञो पाण्डोः पुत्रात्सहदेवाच्च भिन्नः ॥ २४ ॥
यो मूलरुद्रो भवसंज्ञः खगेन्द्र ह्युक्तः शेषाः दशरुद्राः समानाः ।
सोमार्हदेवाः श्रीनिवासस्य भक्ताः मुक्तौ संसार खेन तुल्याश्च वीन्द्र ॥ २५ ॥
आदित्यानां द्वादशानां च वीन्द्र श्रुणुष्व नामानि तथाऽवतारान् ।
विवस्वानर्यमा पूषा त्वष्टा च सविता भगः ।
धाता पर्जन्यवरुणौ मित्रः शक्रो ह्युरुक्रमः ॥ २६ ॥
विवस्वतो यो हरिभक्तवर्यस्तस्यानुजो यः सवितेति नामा ।
स एव जातः सत्यवत्यां च कृष्णान्नाम्ना भानुः श्रीनिवासस्य भक्तः ॥ २७ ॥
यमाविष्टो वीरसेनो महात्मा त्वष्टा नाम्ना सूर्य एवेति विद्धि ।
स वीरसेनो हरिभक्तः पृथिव्यां हरेरङ्गत्वं प्राप्तुमेवाभिजातः ॥ २८ ॥
उरुक्रमो मित्रविवस्वन्तौ च शक्रः शक्रः पर्जन्यो वरुणश्चेति वीन्द्र ।
उक्ता हि ते षड्विधास्ते तु सर्वे शेषाः समस्ताः खेन तुल्याः सदैव ॥ २९ ॥
प्रधानवायुश्चैक एवं खगेन्द्र एकोनपञ्चाशन्मरुतां चैव नामान् ।
श्रुणुष्व वीन्द्र सुप्रधानान्हरेश्च सुभक्तवर्यान् श्रवणात्पापनाशान् ॥ ३० ॥
परावहो मरुतः सौम्यनागौ प्रतीतकूर्मः कृकलो देवदत्तः ।
अपानव्यानौ च उदान एव समानकूर्मौ च धनंजयश्च ॥ ३१ ॥
परावहो विवहः संवहश्च तथाऽवहाद्याः विष्णुभक्ताः सदैव ।
यः पाण्डुराजो विष्णुभक्तो महात्मा परावहो नाम मरुत्स वीन्द्र ॥ ३३ ॥
एषां मध्ये विष्णुभक्तः प्रतीतो स चेकितानो यदुषु प्रजातः ।
एषां मध्ये सौम्यनामा मरुच्च बभूव भूम्यां विपृथुश्चैव राजा ॥ ३४ ॥
प्राणस्य वायोरंशभूतौ खगेन्द्र सर्वोत्तुङ्गो गजनामा बभूव ।
तेषां मध्ये यो ह्यपानाख्यवायुः स एवाभूद्वानरो यो गवाक्षः ॥ ३५ ॥

तेषां मध्ये व्याननामा हि वायोरंशो बभूव गवयो वानरस्तु ।
तेषां मध्ये यः समानाख्यवायुः स एवाभूद्गन्धमादाख्य एव ॥ ३६ ॥
स एव वीन्द्र संबभूव पृथिव्यां शर्वत्राताख्यः श्रीनिवासस्य भक्तः ।
तेषां मध्ये कूर्मनामा मरुच्च स एवाभूत्कुन्तिभोजाख्यराजः ॥ ३७ ॥
तेषां मध्य उद्वहाख्यो मरुच्च स एवाभूद्वीन्द्र परावहाख्यः ।
तेषां मध्ये पंचप्राणादयश्च मरुत्प्रवाहो सप्तसंख्याः प्रधानाः ॥ ३८ ॥
विश्वेदेवानां श्रुणु नामानि चैव विष्णोर्भक्तानां श्रवणात्पापनाशः ।
पुरूरवार्द्रकौ द्वौ विजानीहि वीन्द्र श्राद्धस्य देवौ विष्णुभक्तौ सदापि ॥ ३९ ॥
धूरिलोचनौ द्वौ च देवौ महात्मन् संकल्पितश्राद्धभाजौ च विद्धि ।
क्रतुदक्षाख्यौ द्वौ च देवौ खगेन्द्र पातश्राद्धे भोजिनौ तौ च विद्धि ॥ ४० ॥
सत्यवस्वाख्यौ द्वौ च देवौ खगेन्द्र नान्दीश्राद्धे भोजिनौ तौ च विद्धि ।
कामः कालो द्वौ च देवौ खगेन्द्र प्रेतश्राद्धे भोजिनौ तौ च विद्धि ॥ ४१ ॥
तेषां मध्ये पुरूरवाख्यदेवो जज्ञे भूम्यां धर्मराजाच्च वीन्द्र ।
प्रतिविन्ध्याख्यश्चित्ररथेन युक्तः श्रीकृष्णभक्तो द्रौपदीगर्भभूतः ॥ ४२ ॥
तेषां मध्ये आर्द्रवाख्यश्च देवो जज्ञे भूम्यां भीमसेनाच्च वीन्द्र ।
श्रुतसोमाख्यो ह्यतिताम्रेण युक्तो श्रीकृष्णभक्तो द्रौपदीगर्भभूतः ॥ ४३ ॥
तेषां मध्ये धुरिसंज्ञस्तु देवो जज्ञे भूम्यामर्जुनादेव वीन्द्र ।
श्रुतकीर्तिनामा स किशोरेण युक्तः श्रीकृष्णभक्ता द्रौपदीगर्भभूतः ॥ ४४ ॥
तेषां मध्ये लोचनाख्यस्तु देवो भूम्यां जज्ञे नकुलादेव वीन्द्र ।
शतानीकः श्रीनिवासस्य भक्तो गोपालाख्यात्संयुतो द्रौपदीजः ॥ ४५ ॥
तेषां मध्ये क्रतुसंज्ञश्च देवो जज्ञे भूम्यां सहदेवाच्च वीन्द्र ।
श्रुतकर्माख्यः बलनाम्ना च युक्तो गन्धर्वेण द्रौपदीगर्भभूतः ॥ ४६ ॥
दक्षादीनां पंचकानां खगेन्द्र ह्यवतारान् वै विद्धि कैकेय पंच ।
ये कैकेयाः पंच ये द्रौपदेयाः परस्परं समभूताः खगेन्द्र ॥ ४७ ॥

बृहस्पतिस्त्वेकपितृत्रयश्च द्वावश्विनौ सोमपानाश्च चैते ।
द्वयोरश्विनोरवतारौ श्रृणुष्व रामावतारे विविदश्चैव मैन्दः ॥ ४८ ॥
उभौ च तावश्विनोरंशभूतौ तयोर्मध्ये विविदश्चेन्द्रयुक्तः ।
ब्रह्मोद्भवौ तौ पुनरेव सूर्याद् बभूवतुस्तौ रामभक्तौ पृथिव्याम् ॥ ४९ ॥
शृङ्गाररूपेण च वायुनैव सुनीतिरूपेण च वायुनैव ।
सम्यक्प्रविष्टौ तु नकुलसहदेवौ माद्रीपुत्रौ अश्विनोरंशभूतौ ॥ ५० ॥
त्रिशिखो विभुरित्येतावश्विनौ परिकीर्तितौ ।
हरिपादारविन्दे तु भक्तौ तौ परिकीर्तितौ ॥ ५१ ॥
अग्निष्वात्ता बर्हिषदः सोम एते त्रयः स्मृताः ।
हरिपादाब्जसन्निष्ठाः सोमपाने सहर्षणाः ॥ ५२ ॥

**गरुड उवाच**

प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः ।
बृहस्पतिऋभुद्यावापृथिव्यावश्विनौ तथा ॥ ५३ ॥
विश्वेदेवाश्च पितरः शतस्था देवताः स्मृताः ।
इति श्रुतं मया कृष्ण तव पुत्रेण ब्रह्मणा ॥ ५४ ॥
ब्रह्मा....शेषश्च विपश्चैवानिरुद्धकः ।
एतांश्च पंचकान् ब्रह्मा प्रविहायावदच्च मां ॥ ५५ ॥
कथं मया तज्ज्ञातव्यं शिष्याय वद विस्तरात् ।

**कृष्ण उवाच**

ब्रह्मोक्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ॥ ५६ ॥
अभिप्रायं च ज्ञातव्यं उभयोः पक्षिसत्तम ।
ब्रह्मणा विपशेषौ च रुद्रेऽन्तर्भावितौ खग ॥ ५७ ॥
अनिरुद्धं गुरौ वीन्द्र ब्रह्माणी व्यधिकं कृतम् ।

एवं शतस्थदेवानां ब्रह्मणोक्तं तवानघ ॥ ५८ ॥

त्रयाणां च मया वीन्द्र नान्तर्भूतं खगाधिप ।
आदित्येष्वेव गणितं विष्ण्वाख्यमुरुविक्रमम् ॥ ५९ ॥

मूलरूपं च ब्रह्माणमपरं च चतुर्मुखम् ।
इति वीन्द्र ब्रह्मणी द्वे ह्यधिके संप्रकीर्तिते ॥ ६० ॥

अधिकारिवर्गाद्भिन्नौ तु ब्रह्मनारायणाभिधौ ।
प्रविहाय द्वौ तु वीन्द्र शतस्थगणनं कृतम् ॥ ६१ ॥

चतुर्मुखं मुख्यवायौ अन्तर्भूय खगाधिप ।
द्यावापृथिव्यौ द्वौ तत्र शतस्था देवताः स्मृताः ॥ ६२ ॥

चतुर्मुखं पृथक् चेत्स्यात् तदा द्वावेक एव तु ।
एवं शतस्थान् देवांश्च जानीहि खगसत्तम ॥ ६३ ॥

अनुक्तिर्न तु दोषाय संख्यापूर्तिश्च कुत्रचित् ।
मदीयोक्त्यनुसारेण पूरणीयं च तत्र हि ॥ ६४ ॥

सन्देहं संजनयितुं ज्ञानिनामपि चाण्डज ।
व्यासेन तत्र तत्रैव तथैवोक्तमपूर्णताम् ॥ ६५ ॥

इदं च परमं गोप्यं न कस्यापि कथंचन ।
नास्ति तद्विषये वीन्द्र ह्यादरो नास्ति सर्वथा ॥ ६६ ॥

यद्यादरो भवेत्तत्र झटिति मोक्षगो भवेत् ।
अतस्तु ज्ञानिनां वीन्द्र नैपुण्यं नास्ति सर्वथा ॥ ६७ ॥

ज्ञातव्या च मया सम्यगित्थं नास्त्यादरः क्वचित् ।
यथा नैयायिके शास्त्रे शब्दशास्त्रे तथैव च ॥ ६८ ॥

आदरो ह्यस्ति पक्षीन्द्र तथा नास्त्यत्र चादरः ।
यथा कुशलता चास्ति व्याख्याने खगसत्तम ॥ ६९ ॥

तथा तरतमज्ञाने कौशल्यं नास्ति सर्वथा ।
व्याख्यानकुशलास्तेऽपि स्वसिद्धान्तविचारणे ॥ ७० ॥
न वैष्णवास्ते विज्ञेयाः क्रमज्ञाने ह्यनादराः ।
दुर्लभं तरतमज्ञानं वैष्णवानां कलौ खग ॥ ७१ ॥
द्विषड्गुणयुतो वापि चतुर्वेदयुतोऽपि च ।
तारतम्यज्ञानशून्यः सवै शूद्रसमः स्मृतः ॥ ७२ ॥
अनाचारी वेदहीनस्तारतम्यविदेव च ।
तमेव वेदविद्विप्रादुत्तमं विद्धि वै खग ॥ ७३ ॥
तारतम्यविहीनो यो विष्णुः सर्वोत्तमेति च ।
वदन्नपि स वै पापी न प्रीणाति हरिः स्वयम् ॥ ७४ ॥
तारतम्यविहीनस्य वेदानां पठनादपि ।
फलं नास्त्येव भो वीन्द्र यथा सूतकिनस्तथा ॥ ७५ ॥
वेदस्य पठनात्पुण्यं श्रुत्यादावुच्यते खग ।
तारतम्यविहीनानां वैष्णवानामपि द्विज ॥ ७६ ॥
अवैष्णवानां शूद्राणां चाण्डालानां खगेश्वर ।
तारतम्यविहीनानां वैष्णवानामपि द्विज ॥ ७७ ॥
वेदस्य पठनाद्वीन्द्र व्यर्थमेव न संशयः ।
इदं तरतमज्ञानं दुर्लभं वै कलौ नृणाम् ॥ ७८ ॥
एवं शतस्थं जानीयादुक्तान् वक्ष्ये खग श्रुणु ।
मित्रो वह्निश्च वरुणः प्रवहश्चेन्द्र एव हि ॥ ७९ ॥
रुद्रोऽश्विनौ मुख्यवायुः सूर्यश्चैव बृहस्पतिः ।
आहंकारिकप्राणश्च तथा ब्रह्मा चतुर्मुखः ॥ ८० ॥
एवं त्रयोदश ह्युक्ताः शेषाश्च षडशीतयः ।

पर्जन्यस्तु महाभाग षडशीत्यधमः स्मृतः ॥ ८१ ॥

विष्णोर्भक्तानां निर्णयं यः श्रुणोति सुपुण्यात्मा याति तेषां प्रसादात् ।

विष्णोः प्रसादं वायुदेवप्रसादं यात्येव वीन्द्र ज्ञानमाप्नोति नित्यं ॥ ८२ ॥

इति श्रीगरुडपुराणे ब्रह्मकाण्डे देवतातारतम्यकथनं

नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## ॥ सप्तत्रिंशोऽध्यायः ॥

उक्तशेषशतस्थान्यानवरान् श्रुणु वै द्विज ।
जयश्च विजयश्चैव प्रचण्डश्चण्ड एव च ॥ १ ॥

नन्दः सुनन्दः कुमुदः कुमुदाक्षस्तथैव च ।
अष्टौ हि द्वारपालाश्च कालाद्या अपि पार्षदाः ॥ २ ॥

तत्त्वाभिमानिदेवेभ्यः ह्यवराः संप्रकीर्तिताः ।
अश्व्यादिभ्यः किंचिदूनाः सदा विष्णुपरायणाः ॥ ३ ॥

तेषां मध्ये विष्णुभक्तो जयस्तु कल्पे पूर्वस्मिन् गर्भसंस्थो महात्मा ।
हरिं स्तुत्वा गर्भवासाच्च दुःखं भुक्त्वा सर्वं द्वारपालत्वमाप ॥ ४ ॥

### गरुड उवाच

कोऽयं जयः पूर्वकल्पे गर्भवासे च कीदृशम् ।
दुःखं संप्राप्तवान् कृष्ण गर्भे ज्ञानं च कीदृशम् ॥ ५ ॥

एतद्विस्तार्य मे ब्रूहि शिष्यस्य तव सुव्रत ।
गरुडेनैवमुक्तस्तु कृष्णो वचनमब्रवीत् ॥ ६ ॥

### कृष्ण उवाच

पूर्वकल्पे त्वयं वीर ह्यन्तिमे जन्मनि द्विज ।
गर्भस्थोऽभून्महद्दुःखं भोक्तुं प्रारब्धसम्भवम् ॥ ७ ॥

जरायुणा च संवीतो महद्दुःखमवाप्तवान् ।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ८ ॥

गर्भस्थानां च जीवानां सर्वेषामस्ति सर्वदा ।
देवानां च ऋषीणां च मनुष्याणां खगाधिप ॥ ९ ॥

नित्यसंसारिणां दुःखं दैत्यादीनां तथैव च ।
दुःखमस्त्येव सर्वेषां सदा चैवाऽऽपिपीलिकम् ॥ १० ॥

तारतम्यं च ज्ञानेऽस्ति मोक्षस्यैवाधिकारिणाम् ।
तत्त्वाभिमानिनो देवा गर्भे प्रारब्धजं फलम् ॥ ११ ॥

भुंजते वीन्द्र तेषां तु तत्त्वज्ञानं न नश्यति ।
हरितत्त्वं यथाज्ञातं देवैस्तत्त्वाभिमानिभिः ॥ १२ ॥

मनुष्यादिषु गर्भेषु वासकालेऽपि तत्तथा ।
ऋष्युत्तमानां तु तथा यथा तत्त्वाभिमानिनाम् ॥ १३ ॥

उत्तमानामृषीणां च मोक्षस्यैवाधिकारिणाम् ।
अनपरोक्षयुतानां च देवानां खगसत्तम ॥ १४ ॥

मनुष्याणां च सर्वेषां मोक्षस्यैवाधिकारिणाम् ।
ज्ञानमस्त्येव गर्भेषु हरितत्त्वविनिर्णये ॥ १५ ॥

अपरोक्षयुतानां च देवानां मुनिनां तथा ।
अपरोक्षेण वै ज्ञानं हरिं दृष्ट्वा स्तुवन्ति ते ॥ १६ ॥

भूमावुत्पत्तिसमये ह्यपरोक्षेण नश्यति ।
अपरोक्षज्ञानिनां च सर्वेषामधिकारिणाम् ॥ १७ ॥

तत्त्वज्ञानं परोक्षेण गर्भे चास्ति खगाधिप ।
स्तुवन्ति च परोक्षेण तदाप्यस्ति क्रमेण तु ॥ १८ ॥

चतुर्मासं समारभ्यं षण्मासावधि काश्यप ।
सर्वदुःखानि भुंजाना ये तु मोक्षाधिकारिणः ॥ १९ ॥

इत्थं त्वनपरोक्षाणां तन्नास्ति ह्यपरोक्षिणां ।
प्रारब्धदुःखं देवानां तत्त्वानामभिमानिनाम् ॥ २० ॥

गर्भवासे च दुःखं तु नान्यदस्ति खगोत्तम ।
मातृजग्धान्नपानाद्यैर्विण्मूत्रकृमिभिः खग ॥ २१ ॥

दुःखं नास्त्येव देवानां यथाऽस्त्यनपरोक्षिणां ।
देवानां गर्भवासं तु पद्मपत्रमिवाम्भसि ॥ २२ ॥

उत्तमानामृषीणां तु गर्भे गर्भस्थकल्मषम् ।
दृष्ट्वा दृष्ट्वा जुगुप्सन्ते विष्ठामूत्रादिकं तथा ॥ २३ ॥

लेपो नास्ति ऋषीणां तु दुःखं दुर्गन्धसम्भवम् ।
अपरोक्षवतां नृणां विण्मूत्रादिविलेपनम् ॥ २४ ॥

दुःखमाहुर्नृणां वीन्द्र तदन्येषां महात्मनाम् ।
अनपरोक्षवतां वीन्द्र मोक्षस्यैवाधिकारिणाम् ॥ २५ ॥

मातृजग्धान्नपानाद्यैर्विण्मूत्रैः कृमिभिस्तथा ।
सर्वदुःखानि भुंजन्ते नात्र कार्या विचारणा ॥ २६ ॥

तमोऽधिकारिणां वीन्द्र दुःखं तु प्रबलं स्मृतम् ।
ज्ञानं तु सर्वथा तेषां नास्त्येव खगसत्तम ॥ २७ ॥

शतजन्मकृतो द्रोहो हरेर्नारायणस्य च ।
स्मरणं च भवेत्तेषां क्रमेण भवति ध्रुवम् ॥ २८ ॥

तेन दुःखानि विन्दन्ति गर्भे ते ह्यधिकं खग ।
दुःखानुभवकाले तु वदन्त्येवं खगाधिप ॥ २९ ॥

हरिणा पापरूपेण चास्मिन् गर्भे निपात्य हि ।
सर्वथा बाध्यते चेत्थं तस्मात्पापी स एव हि ॥ ३० ॥

निर्मुक्तोऽहं यदा दुःखात्तदा विष्णुं मम द्रुहम् ।
हरिष्यामि न सन्देहो नात्र कार्या विचारणा ॥ ३१ ॥

इत्यादिचिन्तनं तेषां ज्ञानं नास्त्येव सर्वथा ।
नित्यसंसारिणां चापि मिश्रज्ञानविचिन्तनम् ॥ ३२ ॥

दुःखं तु बहुलं तेषां गर्भवासादिसम्भवम् ।
दैत्यानां तु यथा दुःखं तथा नास्त्येव मिश्रिणाम् ॥ ३३ ॥

ज्ञानं तु सर्वथा नास्ति गर्भे संसारिणां खग ।
अतो जयो गर्भवासे स्वयोग्यं दुःखमेव च ॥ ३४ ॥

अनुभूय महादुःखं प्रारब्धजनितं खग ।
सप्तमे मासि ह्युदरे तुष्टाव हरिमव्ययम् ॥ ३५ ॥

**जय उवाच**

दारापत्यकलत्रगेहविजये कष्टेन संपादितं
द्रव्यं चेदमनर्थमूलमभवत्कीटादिजन्मस्वपि ।
सोऽहं यामि इतः परं भगवतः पादारविन्दं सदा
संसारस्य विमोक्षणे च सुशकं गर्भस्थदुःखच्छिदम् ॥ ३६ ॥

श्रीविष्णोश्चरणारविन्दयुगले शरणं च संकुर्वतः
स्त्रीपुत्रद्रविणादिजन्ममतुलं दुःखं भयं मे कुतः ॥

हित्वाप्यहं बहुषु जन्मसु विश्वमूर्ते
त्वत्पादपद्मयुगलं च युतः कदिन्द्रियैः ।
दुष्कर्मवंचनमपि हरे न करोमि विष्णो
नारायणं निवसितं हृदये नमामि ॥ ३७ ॥

भूतैः सुनिर्मितगृहे हरिणैव दत्ते सम्यक्पतन् हरिगुरोश्चरणं च हित्वा ।
भुंजे च दुःखमतुलं जठरे शयानो विण्मूत्रकूपपतितो भृशतप्तदेहैः ॥ ३८ ॥

स्वेनैव पूर्ण भगवन्मम नास्ति किन्तु दातुं च वस्तु नृहरे तव दासदासः ।
ईदृक् च दुःखमतुलं मम छिन्दि छिन्दि पादारविन्दममलं शरणं व्रजामि ॥ ३९ ॥

एवं स्तुवन् हरिगुरू परमो हि जीवो
नारायणस्य कृपया विजयश्च जज्ञे ।
तस्मिन्सुजन्मनि तपः प्रचकार विष्णोः
सम्यक्प्रसादबलतो हरिद्वारपत्वम् ॥४० ॥

तेनैव वीन्द्र जय इत्यपि नामधेयं प्राप्नोत्सदैव भगवन् स तु विष्णुभक्तः ।
अश्व्यादिकेभ्य स तु ऊनगुणेन किंचिदेवं च विद्धि खगसत्तम भक्तवर्य ॥ ४१ ॥

य इदं परमाख्यानं श्रुणोति श्रद्धयान्वितः ।
जयादीनां प्रसादेन स याति परमां गतिम् ॥ ४२ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे जीवस्य गर्भवासदुःखवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

## ॥ अष्टत्रिंशोऽध्यायः ॥

प्रधानाग्रेः पावकस्तस्य पुत्रो हरेर्भक्तो ह्यवरः सर्वदापि ।
काला जयादिभ्यस्तु कर्मजानां समः सदा नात्र विचार्यमस्ति ॥ १ ॥

भृगोः पुत्रस्तु च्यवनः पावकस्य समो मतः ।
हरिं च्यवनुते यस्मात्तस्मात् च्यवन ईरितः ॥ २ ॥

विनीतं च हरिं सोऽपि च्यवते च्यवनः स्मृतः ।
पुत्रो बृहस्पतेः साक्षादुचथ्यस्तु हरेः खग ॥ ३ ॥

सर्वोत्तमं हरिं चाहुरुचथेति च तद्विदः ।
तं यापयति यस्मात्स ततश्चोचथ्यनामकः ॥ ४ ॥

उचथ्यस्तु समो ज्ञेयो नारायणपरायणः ।
एकादशमनूनां च नामानि श्रुणु सादरम् ॥ ५ ॥

चतुर्दशसु स्वायम्भुस्तापसस्तु हरिः स्मृतः ।
वैवस्वतस्तृतीयस्तु ह्युक्ता एते खगाधिप ॥ ६ ॥

शेषान् श्रुणु महाभागान् नारायणपरायणान् ।
रैवतस्यान्तरे राजा रैवताख्यो मनुः स्मृतः ॥ ७ ॥

रै तु द्रव्यं च संप्रोक्तं हरेरर्पणयाऽवति ।
अतस्तु रैवतो नाम ह्युचथ्यस्य समो मतः ॥ ८ ॥

चाक्षुषस्यान्तरे राजा चाक्षुषो मनुरुच्यते ।
चक्षुषोऽन्तर्गतं विष्णुं व्यजानाच्चक्षुषः स्मृतः ॥ ९ ॥

रैवतस्य समो ज्ञेयो नारायणपरायणः ।
स्वारोचिषस्यान्तरे तु राजा स्वारोचिषो मनुः ॥ १० ॥

स्वतन्त्रं च हरिं वीन्द्रं सोऽजानाद्रोचिषः सदा ।
अतः स्वारोचिषो नाम चाक्षुषस्य समः स्मृतः ॥ ११ ॥

उत्तमस्यान्तरे राजा ह्युत्तमो नाम वै मनुः ।
हरिज्ञानस्योत्तमत्वात् स्वावरापेक्षया सदा ॥ १२ ॥
अतश्चोत्तमनामासौ स्वारोचिषसमः स्मृतः ।
सावर्णेरन्तरे राजा सावर्ण्याख्यमनुः स्मृतः ॥ १३ ॥
सच्छब्द उत्तमं ब्रूयात् अ इत्यानन्द उच्यते ।
उत्तमानन्दसंरूपं हरिं वर्णयते सदा ॥ १४ ॥
अतः सावर्णिनामासौ ह्युत्तमस्य समो मतः ।
अन्तरे ब्रह्मसावर्णेर्ब्रह्मसावर्णिको मनुः ॥ १५ ॥
उत्तमानन्दपूर्णं च हरिं वर्णयते यतः ।
अतश्च ब्रह्मसावर्णिः सावर्णेश्च मनोः समः ॥ १६ ॥
अन्तरे रुद्रसावर्णे रुद्रसावर्णिको मनुः ।
रुक् द्रावकं च सद्रूपं हरिं वर्णयते सदा ॥ १७ ॥
अतस्तु रुद्रसावर्णिर्हृषीकेशसखः सदा ।
गुणैस्तु ब्रह्मसावर्णिः समानः संप्रकीर्तितः ॥ १८ ॥
अन्तरे वेदसावर्णेर्वेदसावर्णिरिव च ।
वेदेषु प्रतिपाद्यं च ह्युत्तमाख्यं हरिं सदा ॥ १९ ॥
यस्माद्वर्णयते नित्यं देवसावर्णिनामकः ।
समस्तु रुद्रसावर्णेर्हरिपादाब्जसंश्रयः ॥ २० ॥
अन्तरे चेन्द्रसावर्णेरिन्द्रसावर्णिरिव च ।
ऐश्वर्यमुत्तमानन्दं सदा वर्णयते यतः ॥ २१ ॥
अतस्तु चेन्द्रसावर्णिर्विष्णुपादाब्जसंश्रयः ।
समस्तु देवसावर्णेर्गुणज्ञानादिभिस्तथा ॥ २२ ॥
अन्तरे दक्षसावर्णेर्दक्षसावर्णिरिव च ।
उत्तमाख्यं हरिं नित्यं दक्षो वर्णयितुं प्रभुः ॥ २३ ॥

अतस्तु दक्षसावर्णिः पूर्वोक्तस्य समो मतः ।
अन्तरे धर्मसावर्णेर्धर्मसावर्णिरिव च ॥ २४ ॥

धर्माख्यमुत्तमं विष्णुं सदा वर्णयते यतः ।
अतस्तु धर्मसावर्णिः पूर्वोक्तस्य समो मतः ॥ २५ ॥

एते च मनवः सर्वे परस्परसमा मताः ।
मनूनां च समाः सप्त पितरः परिकीर्तिताः ॥ २६ ॥

तथापि कर्मदेवानां समा एव न संशयः ।
वैन्यश्च कार्तवीर्यश्च पृथुश्च शशबिन्दुकः ॥ २७ ॥

प्रियव्रतः ककुत्स्थश्च गयो मान्धात एव च ।
त्रिजन्मभरतश्चैव विधृतिः स्वधृतिर्बलिः ॥ २८ ॥

दिवस्पतिः शुचिश्चैव ह्यद्भुतः शम्भुरेव च ।
सर्वे ते हरिणाविष्टाः हरेर्भिन्ना न संशयः ॥ २९ ॥

गन्धर्वेष्वष्टकं चैव कर्मदेवसमं मतम् ।
बल्याद्या अन्तरे वीन्द्र कर्मदेवत्वमाप्नुयुः ॥ ३० ॥

एवं मिलित्वा सर्वेऽपि चत्वारिंशच्च कीर्तिताः ।
पावकाद्याश्च चत्वारो ह्यधिकाः संप्रकीर्तिताः ॥ ३१ ॥

परस्परसमाः सर्वे वह्नेः शतगुणाधमाः ।
जयादिभ्यः किंचिदूनाः पर्जन्यादधिका मताः ॥ ३२ ॥

प्रह्लादोऽपि महाभाग कर्मदेवसमः स्मृतः ।
प्रकर्षाह्लादयुक्तत्वात् नारदस्योपदेशतः ॥ ३३ ॥

अतः प्रह्लादनामासौ पृथिव्यां खगसत्तम ।

**गरुड उवाच**

कस्मिन् काले नारदस्तु प्रह्लादस्य महात्मनः ॥ ३४ ॥
उपदिष्टवान् ममाचक्ष्व किं तत्त्वं च वदस्व मे ।

### श्रीकृष्ण उवाच

पुरा दैत्यो महानासीद्धिरण्यकशिपुः प्रभुः ॥ ३५ ॥
जयेनैव समाविष्टः कदाचिद्धरिनिष्ठवान् ।
सर्वदा हरिविद्वेषी सदा वैष्णवदूषकः ॥ ३६ ॥
शुचिष्मती तु तद्भार्या पतिव्रतपरायणा ।
दधार गर्भं सा देवी हिरण्यकशिपोः पतेः ॥ ३७ ॥
विरेजे सा तु गर्भेण वैष्णवेन शुचिस्मिता ।
शुचिष्मती स्वगृहे संवसाना हरिं ध्यायन्ती चादरेणैव भक्त्या ।
यदा तदा ह्यागमद् ब्रह्मपुत्रो यदृच्छया गम्यमानोऽनपेक्षः ॥ ३८ ॥
विष्णोश्च भक्तो निजलाभतुष्टो हरेश्च नामानि गृणन् सदैव ।
दिगम्बरो वक्रजटाधरश्च ह्यावर्तनाभिर्वलिवल्गूदरं च ॥ ३९ ॥
प्रलम्बबाहुः पृथुतुङ्गवक्षा निगूढजत्रुःस्वमरोत्तमाभः ।
एतादृशो हरिभक्तो महात्मा ययौ गृहं काश्यपस्यापि ऋद्धम् ॥ ४० ॥
तस्मिन् काले विष्णुविद् काश्यपश्च ययौ मृगार्थं चंपकारण्यमेव ।
शुचिष्मती गर्भिणी स्वे गृहे च बभूव विप्रैः संयुता सा सभायाम् ॥
४१ ॥
मुनिं हि दृष्ट्वा चोत्थिता विप्रवर्यास्तल्लक्षणाज्ञा आसनेभ्यः खगेन्द्र ।
सा गुर्विणी चागताय द्विजाय तस्मै सपर्यां शिरसा जहार ॥ ४२ ॥
आशानिवृत्तो भगवद्दासवर्यो महासने सोपविवेश पूजितः ।
प्रशान्तमासीनमकुण्ठमेधसं शुचिष्मती नारदमभ्युपेत्य ॥ ४३ ॥
मूर्ध्ना प्रणम्यावहिता कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ।

### शुचिष्मत्युवाच

अद्येश नो वसतयः खलु भूरिभागा अद्यैव गावः सुभगा भवदागमेन ।
अद्यैव मे पितृकुलं सुपवित्रितं च ह्यद्यैव मातृसुकुलं च तथा च पत्युः ॥ ४४ ॥

मज्जन्म चाद्य भवदागमनाच्च देव पूतं तथा मदिन्द्रियगणानि पवित्रितानि ।
सन्दर्शनाच्च भवतां स्मरणाच्च पादशौचासनादिभिरलं प्रपुनामि चाद्य ॥ ४५ ॥

सान्निध्यात्ते महायोगिन् पातकानि महान्त्यपि ।
सद्यो नश्यन्ति वै पुंसां गरुडस्यैव चोरगाः ॥ ४६ ॥

अद्य मे भगवान्प्रीतः विष्णुर्ब्रह्मादिवल्लभः ।
अन्यथा दर्शनं चैव चास्माकं तु कथं भवेत् ॥ ४७ ॥

अतोऽस्माकं च भगवान्विष्णोर्नारायणस्य च ।
महिमां ब्रूहि देवर्षे भवतां दर्शनं वृथा ॥ ४८ ॥

न भवेदतः स्वरूपं तु विष्णोर्ब्रूहि यथार्थतः ।

**नारद उवाच**

नारायणः स्वयं साक्षादेवं पृष्टः पुरा श्रिया ॥ ४९ ॥

यदुवाच पिब त्वं तन्नारायणकथामृतम् ।
परं नारायणं देवं सच्चिदानन्दविग्रहम् ॥ ५० ॥

शुचिष्मति यज त्वं च यदि मोक्षं त्वमिच्छसि ।
एवमुक्तं नारदेन गर्भस्थोऽप्यनुमोदति ॥ ५१ ॥

वैरिणस्तं न हिंसन्ति न बाधन्ते ग्रहाश्च ये ।
यातुधाना न खादन्ति नारायणपरायणम् ॥ ५२ ॥

भक्तिर्दृढा भवेद्यस्य देवदेवे जनार्दने ।
श्रेयांसि तस्य सिध्यन्ति भक्तिमन्तोऽधिकास्ततः ॥ ५३ ॥

तौ पादौ सफलौ देवि विष्ण्वायतनगामिनौ ।
तौ हस्तौ भाग्यनिलयौ विष्णुपूजापरायणौ ॥ ५४ ॥

ते च नेत्रे महाभागे पश्यतो ये जनार्दनम् ।
सा जिह्वा प्रोच्यते सद्भिर्हरिनामपरायणा ॥ ५५ ॥

सत्यं हितं वच्मि सारं सारं वच्मि पुनः पुनः ।
संसारे दग्धसंसारे सारं च हरिपूजनम् ॥ ५६ ॥

सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥ ५७ ॥

संसारपाशं सुदृढं महामोहप्रदायकं ।
हरिभक्तिकुठारेण छित्वात्यन्तसुखी भवेत् ॥ ५८ ॥

तन्मनः संयतं विष्णौ सा वाणी तत्परायणा ।
ते श्रोत्रे तत्कथासारे पूरिते लोकवन्दिते ॥ ५९ ॥

शरीरं मृत्युसंयुक्तं जीवितं चापि चञ्चलं ।
राज्यादिधनसंग्राह्यसंपदः क्षणभङ्गुराः ॥ ६० ॥

हे जना किं न जानीध्वं आयुषोऽर्धं तु निद्रया ।
हृतं तु भोजनाद्यैश्च कियदायुः समाहृतम् ॥ ६१ ॥

कियदायुः शिशुत्वाच्च वृद्धत्वाच्च कियद्गतम् ।
कियद्विषयभोगैश्च कदा धर्मान् करिष्यत ॥ ६२ ॥

बालभावे च वार्धक्ये न साध्यं चाच्युतार्चनम् ।
वयस्येतान्हि धर्मान् वै कुरुध्वमनहङ्कृताः ॥ ६३ ॥

शरीरं रोगनिलयं मलाद्यैरपि पूरितं ।
किमर्थं शाश्वतधिया पापं कुरुत सर्वदा ॥ ६४ ॥

असारभूते संसारे नानादुःखसमन्विते ।
विश्वासो नात्र कर्तव्यो निश्चितं नाशमेष्यति ॥ ६५ ॥

मानं त्यजताहंकारं कामक्रोधादिकान् जनाः ।
यजध्वं सन्ततं कृष्णं मानुष्यमतिदुर्लभम् ॥ ६६ ॥

अनेककोटिदेहेषु स्थावरादिषु सत्तमम् ।
मानुष्यं प्राप्य यो मर्त्यो सकृन्नार्चयते हरिम् ॥ ६७ ॥

तेषामतीव मूर्खाणां विवेकः कुत्र तिष्ठति ।
आराधितो जगन्नाथो ददात्यभिमतं फलम् ॥ ६८ ॥

कस्तं न पूजयेद्देवं संसाराग्निप्रदीपितः ।
चण्डालोऽपि द्विजाच्छ्रेष्ठो विष्णुभक्तो द्विजाधिकः ॥ ६९ ॥

विष्णुभक्तिविहीनश्च द्विजोऽपि श्वपचाधमः ।
रागद्वेषसमायुक्तो द्विजोऽपि श्वपचाधमः ॥ ७० ॥

तस्मात्कामादिकं देवि त्यक्त्वा भज हरिं परम् ।
तस्मिन् तुष्टे जगत्तुष्टं यतः सर्वगतो हरिः ॥ ७१ ॥

यथा हस्तिपदे मग्नं पदमात्रं प्रलीयते ।
आकाशेन यथा व्याप्तं जगत्स्थावरजङ्गमम् ॥ ७२ ॥

तथैव हरिणा व्याप्तं विश्वमेतच्चराचरम् ।
ध्यातः स्मृतः पूजितो वा नमितो वा जनार्दनः ॥ ७३ ॥

संसारपाशविच्छेदी कस्तं न प्रतिपूजयेत् ।
यन्नामोच्चारणादेव महापातकनाशनम् ॥ ७४ ॥

यं समभ्यर्च्य देवि त्वं लभेथामुक्तिमुत्तमाम् ।
अहो चित्रमहो चित्रमहो चित्रमिदं बत ॥ ७५ ॥

हरिनाम्नि स्थिते लोकः संसारे वर्तते पुनः ।
भूयो भूयोऽपि वक्ष्यामि देवि सत्यं न संशयः ॥ ७६ ॥

नीयमाने यमभटैरशक्तो धर्मसाधने ।
यावन्नेन्द्रियवैकल्यं यावद्व्याधिर्न जायते ॥ ७७ ॥

तावद्दैवार्चनं नित्यं यदि मुक्तिरतो द्विजः ।
मातृगर्भाद्विनिष्क्रान्तः यदा जन्तुस्तदैव हि ॥ ७८ ॥

मृत्युवक्त्रगतो गाढं तस्माद्धर्मपरो भवेत् ।
सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ॥ ७९ ॥

ढम्भाचारं परित्यज्य पूजयेच्चक्रपाणिनम् ।
विष्णुः सर्वात्मना पूज्यस्त्याज्या एवान्यदेवताः ॥ ८० ॥
ये हि विष्णुं परित्यज्य चान्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥ ८१ ॥
अहो धैर्यमहो धैर्यमहो धैर्यं नृणामहो ।
विष्णौ स्थिते जगन्नाथे न भजन्ते मदोद्धताः ॥ ८२ ॥
अनाराध्य जगन्नाथं सर्वधातारमच्युतम् ।
संसारसागरे मग्नाः कथं पारं गमिष्यथ ॥ ८३ ॥
अच्युतानन्तगोविन्दनामोच्चारणभेषजम् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदामि ॥ ८४ ॥
नारायण जगन्नाथ वासुदेव जनार्दन ।
इतीरयन्ति ये नित्यं ते वै सर्वत्र वन्दिताः ॥ ८५ ॥
धिग्जन्म भक्तिहीनानां देवदेवे जनार्दने ।
तडिल्लोलश्रिया मत्त श्रणभङ्गुरशालिनाम् ॥ ८६ ॥
आराधयत देवेशं मृत्युपाशविमोचकम् ।
सृष्टिस्तु द्विविधा प्रोक्ता देवासुरविभेदतः ॥ ८७ ॥
हरिभक्तियुता देवास्तद्धीना आसुराः स्मृताः ।
तस्माद्देवि श्रुणु त्वं च हरिभक्तिपरायणा ॥ ८८ ॥
श्रेष्ठा सर्वत्र विख्याता यतो भक्तिः सुदुर्लभा ।
भक्तिं कुरु महादेवे देवदेवे जनार्दने ॥ ८९ ॥
एतच्छ्रुत्वा नारदात्तु गर्भस्थो हि महाप्रभुः ।
प्रकर्षाह्लादसंयुक्तो बभूव हरिवल्लभः ॥ ९० ॥
ततो ययौ मुनिश्रेष्ठः ब्रह्मलोकं तदा खग ।
अथो शुचिष्मती देवी सुषाव पुत्रमुत्तमम् ॥ ९१ ॥

वायुना च समाविष्टं हरिपादाब्जसंश्रयम् ।
हिरण्यकशिपुर्वीन्द्र पुत्रस्य विधिपूर्वकम् ॥ ९२ ॥

जातकर्म तदा चक्रे ब्राह्मणैर्मन्त्रकोविदैः ।
स्मृत्वा स्मृत्वा हरिं विष्णुं नारदस्योपदेशतः ॥ ९३ ॥

अत्याह्लादयुतो यस्मात् तस्माच्चक्रे पिता तदा ।
प्रह्लाद इति तन्नाम तत्स्वरूपमज........ ॥ ९४ ॥

महागुणैः सोऽपि प्रह्लाद एव ह्युपासकोऽभूद्गरुडध्वजस्य ।
श्रीविष्णुनिष्ठः शीलसम्पन्न एव जितेन्द्रियः सत्यसन्धो महात्मा ॥ ९५ ॥

स विष्णुवत्संबभूव द्विजेन्द्र सद्भक्तानामेक एव प्रियश्च ।
विष्णोः साम्यं चोच्यते यत्र कुत्र ब्रह्मादीनामुत्तमानांनृणां च ॥ ९६ ॥

किंचित्साम्यं चेरितं तद्धि विद्धि यावत्साम्यं विद्धि मत्स्यादिकानाम् ।
प्रह्लादस्याप्येतदेवं खगेन्द्र साम्यं हरेरुच्यते किंचिदेव ॥ ९७ ॥

यावत्साम्यं चासुरा एव वीन्द्र विजानन्ति तच्च वाक्यानुसारात् ।
अन्धन्तमः प्रविशन्त्येव सर्वे तथाऽज्ञानान्नात्र विचार्यमस्ति ॥ ९८ ॥

अतो विष्णोः साम्यमुक्तं खगेन्द्र प्रह्लादस्य विष्णुभक्तस्य नित्यम् ।
उद्विग्नचित्तो न बभूव नित्यं बभूव नित्यं व्यसनेषु निःस्पृहः ॥ ९९ ॥

अवस्तुदृक् चैव बभूव नित्यं शब्दादिषु सर्वगुणेषु वीन्द्र ।
नारायणे भगवति यस्य नैसर्गिकी रतिः ॥ १०० ॥

यदा च क्रीडते बालो हरिनिष्ठैकमानसः ।
ग्रहभूतेन हरिणा ग्रस्तः किंचिन्न वेद सः ॥ १०१ ॥

शयानः प्रपिबन्नश्नन्नासीनः पर्यटन् ब्रुवन् ।
न सस्मार ह चान्यानि गोविन्दपरिरम्भितः ॥ १०२ ॥

गोविन्दद्रुहिणो दृष्ट्वा दुःखयुक्तो बभूव ह ।
हरिं च दृष्ट्वा रुदति क्वचिच्च हसत्यथोद्गायति वर्तते च ॥ १०३ ॥

सन्त्यक्तलज्जो तलशब्दं च कुर्वन् गोविन्द दामोदर माधवेति ।
दृष्ट्वा स्वबालस्य विचेष्टितं च विचारयामास पिता महाप्रभुः ॥ १०४ ॥

केनास्य बुद्धिः प्रविनाशिता च यतश्च बालः परपक्षगोऽभूत् ।
प्रह्लादमद्वीर्यभवत्वमित्थं नमः शिवायेति वदस्व नित्यम् ॥ १०५ ॥

सदा द्रुहं मे हरिरूपिणं च स्मर्तव्यमेवं न कदाचन प्रभो ।
एवं स्वपुत्रं सान्त्वयित्वा खगेन्द्र ददौ च पुत्राय फलादिकं च ॥ १०६ ॥

यथैव क्रीडां प्रचकार पूर्वं तथैव क्रीडां प्रचकार सोऽपि ।
नारायणायेति मन्त्रं जपन्तं पुत्रं दृष्ट्वा प्रतताडास्य वक्त्रे ॥ १०७ ॥

पुत्रस्तु नष्टः किमु कर्तव्यमत्र विचारयामास पुनः पुनश्च ।
शण्डश्च मर्कश्च ह्युभौ च पुत्रौ काव्यस्यु दुष्टौ स्वपुरोहितस्य ॥ १०८ ॥

स दैत्यराजः स्वगृहान्तिके च दृष्ट्वा स्वपुत्रं च तयोः सदैव ।
वशं च कृत्वाऽपि प्रोवाच तौ पुनः नमः शिवायेति वदिष्यते यथा ॥ १०९ ॥

तथा कुरुध्वं मम बालकस्य सन्ताडयित्वा प्रविहाय शङ्काम् ।
सन्ताडयामासतुरेव तौ तं सुपाठयोग्यान् शिवनामादिकं च ॥ ११० ॥

यद्यद्धि चोक्तं गुरुणा तच्च सर्वं शुश्राव तं नैव पपाठ बालः ।
स ह्येकदा दैत्यकुमारकैश्च क्रीडन्तमेनं स्वाङ्कमारोप्य पुत्रम् ॥ १११ ॥

पप्रच्छ तात कथ्यतां मे महात्मन् संमन्यते यद्भवान् साधुलोके ।
एवमुक्तस्तु प्रह्लादः स्वपित्रा भगवान् वचः ॥ ११२ ॥

मेघगम्भीरया वाचा चोवाच पितरं प्रभुः ।

**प्रह्लाद उवाच**

मूढेश्वर दुर्विषयैर्निवेशात् गृहादिषु स्नेहयुजां च देहिनाम् ॥ ११३ ॥

संसारनिर्मूलनसाधनं च मन्ये माहं प्रापतमः प्रधान ।
वक्ष्याम्यहं तच्च श्रुणुष्व साधनं व्यर्थं च जातं तव जन्म मूढ ॥ ११४ ॥

स्वस्यैव नित्यं निरयेषु पातनं गृहान्धकूपं च सदैव हित्वा ।
गत्वा वनं सज्जनसंगमात्रकं नारायणं तारकमाश्रयेत ॥ ११५ ॥

प्रह्लादप्रोक्तं च हरेश्चतत्त्वं सुसज्जनानां च संशिक्षणार्थम् ।
न वै पितुर्ग्राहयितुं तदुक्तं तस्यासुरावेशदुराग्रहत्वात् ॥ ११६ ॥

श्रुत्वा स्वबालस्य वचो दुरात्मा जहास चोच्चं परपक्षगो यतः ।
बालस्य बुद्धिः परबुद्धिभिश्च विभिद्यते नात्र विचार्यमस्ति ॥ ११७ ॥

संधार्यतां गुरुगृहे च विशेषतश्च बालस्य बुद्धिर्हरितत्त्वविदां च मूढैः ।
भिद्यते नैवं तु यथा तथैव यूयं च मे प्रेमयुताश्च नेत्राः ॥ ११८ ॥

ते दैत्ययाजकभवाः परमादरेण श्रुत्वा हिरण्यकशिपोः पुरुषार्थहेतुम् ।
पृच्छन्त एव वचनैश्च सुसामभिश्च भक्तं हरेश्च हरिनामयुतं विशङ्कम् ॥ ११९ ॥

प्रह्लादवत्स कथयस्व ऋतं च तेऽद्य भद्रं भविष्यति मृषा न वदस्व तात ।
केनैव तेऽद्य भवतः परपक्षबुद्धिः संभण्यतां गुरुकुलेषु समुद्भवानाम् ॥ १२० ॥

स्वेनैव वाद्य भवतस्तव बुद्धिभेदः संभण्यतां च कुलनन्दन सद्गुरूणाम् ।
तैरेवमुक्तः प्रह्लादः नारायणपरायणः ॥ १२१ ॥

हसन्नुवाच विप्रांश्च दैत्यपक्षाश्रयान् खग ।

**प्रह्लाद उवाच**

शैवागमेषु कुशलाश्च मदीयवाक्यं श्रुण्वन्तु मोहितधियो हरिमाययैव ॥ १२२ ॥

विष्णोश्च सर्वविषयेषु सुकर्तृतां च सर्वश्रुतिस्मतिभिरेव सदागमैश्च ।
पुंसां पुनश्च परतः स्वत एव चेति प्रश्नस्तु मां प्रति न शोभत एव सम्यक् ॥ १२३ ॥

यस्माच्च बुद्धिरभवत् विपरीतजन्या तेनैव यान्ति तम एव च दैत्यवर्याः ।
भ्रान्त्या हिरण्यकशिपोश्च स्वतन्त्रतां च युष्माकमेव च तथैव च नान्यथा च ॥ १२४ ॥

मोक्षस्य नैव ह्युपयोगवती च मूढा अन्यो न चैव ह्यहमेव स्वतन्त्रबुद्धिः ।
जीवास्तु नारायणपादसंश्रया भिन्नाः सदा तदधीनाश्च नित्यम् ॥ १२५ ॥

संसारिणां संसृतिवर्जितानां स्वरूपसत्ता कर्तृता मोक्षभागः ।
अवस्थितिर्जीवगतं च सर्वमधीनमेव सर्वदा वै मुरारेः ॥ १२६ ॥
एवं हि सिद्धे परमाथतत्त्वे कुतः स्वातन्त्र्यं भवतां मूढविप्राः ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनी रुद्रादयो हरिभक्ताश्च सर्वे ॥ १२७ ॥
विमुह्यतीव परिदृश्यते च ब्रह्मापि दैत्यांश्च विमोहितुं च ।
प्रसाद एवापि सदाऽस्ति तस्मिन् महाभागवते पूर्णगुरौ च वायौ ॥ १२८ ॥
अतश्च बुद्धिर्हि हरौ निरन्तरं निर्दोषयुक्ता विषयीकरोति ।
एतावदुक्त्वा विरराम बालः विप्राय मूढाय स्वपितुर्हिताय ॥ १२९ ॥
निर्भर्त्स्य तं तौ कुपितौ सुदीनावादाय वेत्रं च समूचतुस्ते ।
बालौ ह्ययं नैव सुपापबुद्धिरस्माकमेव ह्यवदत्संस्कृतश्च ॥ १३० ॥
अतोऽस्य दण्डं ताडनं नैव चान्यदेतावदुक्त्वा ताडयामासतुश्च ।
संगृह्य चैवाशु च दैत्यपुत्रं धर्मार्थकामांश्च सदा गुरुश्च ॥ १३१ ॥
संपाठयामास च दैत्यपुत्रं नमः शिवायेति च मन्त्रमुत्तमम् ।
ज्ञात्वा गुरुः पठितं चैव शिष्यं सन्दर्शयामास च दैत्यवर्यम् ॥ १३२ ॥
मात्राभिषिक्तं समलङ्कृतं च स्वपादमूले पतितं सुरद्विट् ।
दोर्भ्यां समुत्थाप्य चिरं स्वपुत्रं सम्यक् परिष्वज्य हरेश्च भक्तम् ॥ १३३ ॥
स्वाङ्कं समारोप्य सुतस्य मूर्धन्याघ्राय सोऽप्यश्रुकलाम्बुभिश्च ।
आसिंचयन्पुत्रमुवाच दीनः सन्ताडितं गुरुहस्तैश्च सम्यक् ॥ १३४ ॥
प्रह्लाद तातार्य च किंचिदुत्तमं तथा स्वधीतं च गुरोश्च शिक्षया ।
वदस्व सम्यक् परमादरेण कुलं मदीयं च समुद्धर त्वम् ॥ १३५ ॥

**प्रह्लाद उवाच**

विष्णौ च भक्तिर्नवलक्षणैर्युता शास्त्रे च यस्मिन्प्रतिपादिता च ।
पुंसा तु सा चोत्तमश्लोकविष्णोः समर्पिता धीरुत्तमं चैव मन्ये ॥ १३६ ॥

भक्तेः श्रुणु त्वं नवलक्षणं च भक्त्या श्रुतं मोक्षसुकारणं च ।
श्रुतं ह्यभक्त्या विपरीतसाधनं वक्ष्येऽप्यहं सज्जनानां च तर्तुम् ॥ १३७ ॥

सद्वैष्णवैः पठ्यमानं च शास्त्रं भक्त्या श्रुतं योग्यजनैश्च नित्यं ।
तमेवाहुः प्रथमं लक्षणं च भक्तेर्महाभागवतप्रधानाः ॥ १३८ ॥

सङ्कीर्तनं कीर्तियोग्यान् हरेश्च गुणांश्च नित्यं वैष्णवैः पठ्यमानम् ।
तदेव सङ्कीर्तनमाहुरार्या भक्तेर्द्वितीयं लक्षणं विद्धि दैत्य ॥ १३९ ॥

सद्वैष्णवैः क्रियमाणं च दैत्य विष्णोर्गुणस्मरणं विश्रुतं च ।
तदेवाहुः स्मरणं विष्णुभक्तास्तल्लक्षणं तृतीयं विद्धि भक्तेः ॥ १४० ॥

सद्विष्णुभक्तेः सेव्यमानं च नित्यं श्रीविष्णुपादादिसुसेवनं च ।
तदेव भक्तेर्लक्षणं वै चतुर्थं सद्वैष्णवैरर्चनं पंचमं च ॥ १४१ ॥

सद्वैष्णवैरात्मनिवेदनं च हरेः सदा ह्यष्टमं प्राहुरार्याः ।
सद्वैष्णवैः क्रियमाणं च सख्यं तदेवाहुः सप्तमं चैव विष्णोः ॥ १४२ ॥

सद्वैष्णवैरात्मनिवेदनं च हरेः सदा ह्यष्टमं प्राहुरार्याः ।
सद्वैष्णवैः क्रियमाणं च दास्यं विष्णोश्च तन्नवमं प्राहुरार्याः ॥ १४३ ॥

धर्मार्थकामांश्च विहाय दैत्य भक्त्या हरेः स्मरणं कार्यमेव ।
इदं च मन्ये ह्युत्तमं तात नित्यं ब्रह्मादयो विष्णुदासास्तथैव ॥ १४४ ॥

निशाम्य पुत्रस्य वचो हि दैत्यः क्रोधाच्च गात्रं प्रचलन् सुपापः ।
उवाच चेदं गुरुपुत्रमेव रुषा च संप्रस्फुरिताधरश्च ॥ १४५ ॥

## हिरण्यकशिपुरुवाच

हे ब्रह्मबन्धो कृतमेवं त्वयैव सत्पुत्रनाशं मामनादृत्य मूढ ।
लोके च सन्ति बहवो ह्यसाधवो न दृष्टपूर्वः सदृशस्त्वैव ॥ १४६ ॥

स एवमुक्तो गुरुपुत्रो महात्मा ह्युवाच दैत्यं च सुपापनिष्ठम् ।

## शण्डामर्क उवाच

राजन् मतिस्तस्य स्वरूपभूता न मत्प्रणीता न परप्रणीता ॥ १४७ ॥

तस्माच्च मूढकतमाय च कुप्यसे त्वं गृहं त्वदीयं तु सदा त्यजामि ।
स एवमुक्तो गुरुपुत्रेण वीरः पप्रच्छ पुत्रं पुनरेव पापः ।। १४८ ।।

गुरोर्मुखीयं न भवेत्सुपाप कस्माच्च ते ह्यसती भ्रान्तिबुद्धिः ।
स एवमुक्तो हरिभक्तवर्यो उवाच दैत्यं हि हरिं च स्मृत्वा ।। १४९ ।।

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे प्रह्लादचरित्रे प्रह्लादं प्रति हिरण्यकशिपूक्तिर्नाम अष्टत्रिंशोऽध्यायः ।। ३८ ।।**

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

### प्रह्लाद उवाच

सत्येव मूढमन्मतिस्त्वन्मतिस्तु ह्यतीव दुष्टा सत्प्रमाणैर्विरुद्धा ।
मतिर्ममास्ते गुरुशिक्षणाच्च नारायणे मत्प्रयत्नाच्च मूढ ॥ १ ॥

भवादृशानां गृहिणां च मूढ कदिन्द्रियैर्विषयांश्चैव दुष्टान् ।
भुञ्जानानां नास्ति कृष्णे मतिश्च नास्त्येव तेषां च गुरुप्रसादः ॥ २ ॥

ये दैत्यवर्यविषयेषु नित्यं प्रतीयमानेषु दुराशयास्तु ।
न ते विदुः स्वार्थगतिं हरिं च ह्यन्धा यथान्धैरुपनीयमानाः ॥ ३ ॥

वक्ष्याम्यहं मूढ गृहव्रतानां संसारकूपाच्च वितर्तुकामिनाम् ।
शृणु ह्युपायं विषयेषु निष्ठ काम्यादिधर्मांश्च विसृज्य नित्यम् ॥ ४ ॥

सन्न्यासिनां सद्गुरूणां च संगं श्रीविष्णुसर्वोत्तमशंसकानाम् ।
तैरेव सज्ज्ञानमवाप्य राजन् संयास्यसि मोक्षगतिं च नान्यथा ॥ ५ ॥

श्रीविष्णुपादं गोपदं चैव हित्वा दुष्टान् विषयान् सर्वदा भोगिनां च ।
तेषां गतिर्नास्ति नास्त्येव मूढ पुनः पुनश्चर्वितचर्वणानाम् ॥ ६ ॥

एवं स्वपुत्रस्य वचोऽभिताडितो रुषा समाविष्टकषायलोचनः ।
पुत्रं च स्वोत्सङ्गत एव वीन्द्र निरस्य भूमौ स उवाच दैत्यः ॥ ७ ॥

सुवध्यतां नैर्ऋतां मे सुतं च ह्येनं च निःसारयत मत्सकाशात् ।
दुष्टश्च पुत्रस्त्याज्य एवाशु विद्वान् लोभाच्च न त्यक्ष्यति यो विमूढः॥८॥

सर्पेण दुष्टं च यथाङ्गमेव छित्वा सुखं यान्ति सुदुःखमन्यथा ।
तस्माद्धि चैष मम पक्षदूषको हन्तव्य एवेह बहुधैरुपायैः ॥ ९ ॥

तै नैर्ऋता दैत्यवर्येण वीन्द्र समुद्दिष्टा शस्त्रशूलासिपाणयः ।
समासीनं भूतले संस्मरन्तं नारायणं दुःखनिवारणं च ॥ १० ॥

सन्ताड्य नन्दन्त उरुक्रमेण छिन्दीति भिन्दीति च वादिनश्च ।
शूलादयस्ते च विचूर्णिताश्च गात्रे च भक्तस्य ह्यरीन्द्रपाणेः ॥ ११ ॥

हस्ताश्च तेषां च सुदुःखिता स्युस्तस्मान्निवृत्ता निर्कृता विभग्नाः ।
क्व चास्ति दुःखं हरिपादसंगिनां क्व चास्ति भीतिः परतः कुदैवात् ॥ १२ ॥

यस्यास्ति नित्यं परमप्रसादस्तस्मिन्न चास्त्येव ग्रहादिपीडाः ।
यस्मिन् तृतीयस्थस्तथा चतुर्थस्तथाष्टमस्थः शनिरङ्गारको गुरुः ॥ १३ ॥

तथैव जन्मस्थद्वादशस्थाः पीडां न कुर्वन्ति च दासवर्गे ।
तषां क्व चास्ति परमा च शक्तिः संपीडने वै हरिभक्तस्य वीन्द्रम ॥ १४ ॥

तथैव दैत्येन्द्र चोवाच सूदान् तीक्ष्णं विषं चाशु ददध्वमंजसा ।
शुक्राच्च प्राप्तं च ह्यतीव दुःसहं ददुश्च ते भक्ष्यभोज्यादिकेषु ॥ १५ ॥

प्रह्लादस्तु स्वगुरोर्नारदस्य वायोश्च विष्णोः स्मरणाच्च वीन्द्रम् ।
भुक्त्वा चैव जरयामास सुष्ठु वृथैव जातश्च तदीययत्नः ॥ १६ ॥

दिने च तस्मिन् दैत्यवर्यस्य चाश्वो मृतश्च भक्तस्य च पीडनेन ।
तथाऽपि तन्मरणे चैव यत्नं चकार काले विपरीतबुद्धिः ॥ १७ ॥

तदा चोवाच हस्तिपं प्रीतियुक्तं शीघ्रं प्रह्लादं दिग्गजैर्हिंसि च त्वम् ।
स चापि वै दिग्गजानानयित्वा विसर्जयामास सुबालके च ॥ १८ ॥

गजाश्चैनं पीडयामासुरेते पदैर्दन्तैरङ्कुशैस्ताड्यमानाः ।
विशीर्णदन्ताः सुपलायिताश्च सन्ताड्यमाना अपि नाययुः पुनः ॥ १९ ॥

तस्मिन् दिने पट्टगजो मृतश्च विनाशकाले विपरीतबुद्धिः ।
तथापि मूढश्च पुनः प्रयत्नं चकार सूनोर्मरणाय पापः ॥ २० ॥

स कृष्णसर्पांश्च सुदुष्टदर्पान् विसर्जयामास च मन्त्रविद्भिः ।
दन्तैरेव सन्ददंशुश्च भक्तं विशीर्णदन्ताश्च ययुः पराभवम् ॥ २१ ॥

तस्मिन् दिने दैत्यवर्यस्य दन्ता भूमावपतन् सहसा पक्षिवर्य ।
आसन्नमृत्योश्च विशस्यमानं दृष्ट्वापि यत्नं पुनरेव चक्रे ॥ २२ ॥

गिरेर्हि सानोश्च ह्यधोनिपातनं चकार सूनोश्च ह्यतीव पापः ।
तथापि पुत्रो मरणं न चाप नारायणः पाति सुभक्तवर्यम् ॥ २३ ॥

तस्मिन् दिने दैत्यवर्यस्य वीन्द्र जुष्टं किरीटं ह्यपतद्भूतले च ।
तदा चोवाच गुरुपुत्रं स दैत्यः पाशैश्च बद्ध्वा ताडयित्वा च सम्यक् ॥ २४ ॥

संशिक्षयध्वं च सुतं मदीयं नो चेद्युष्मान् ताडयिष्यामि सम्यक् ।
शुक्रस्य पुत्रोऽपि पुनश्च तं प्रभुं संपाठयामास त्रिवर्गरूपम् ॥ २५ ॥

न साधु मेने च गुरोश्च शिक्षां गुरुर्गतः कर्तुमेव स्वकर्म ।
तदा प्रह्लादो दैत्यकुमारकांश्च क्रीडादिषु सक्तमनस्करूपान् ॥ २६ ॥

मदीयवाक्यं श्रुणुत दैत्यपुत्राः युष्मद्भद्रं भवितुं वच्मि भूयः ।
युष्माकमायुश्च गतं वृथैव क्रीडान्धतो मा कुरुध्वं सुपापम् ॥ २७ ॥

अयं गुरुर्नैव महान्सुपापी येनैव चोक्तं न वृणीत धीराः ।
संसारकूपाख्यसुवैतरिण्यां संपातितुं वः प्रदिशत्येव नित्यम् ॥ २८ ॥

अतो गुरूक्तं सुकुमारकाश्च न ग्राह्यमेवं सर्वथा पापरूपम् ।
ये [illegible]धहस्तं प्रतिगृह्य चान्धा यथा पतन्त्येव तथैव चायम् ॥ २९ ॥

[illegible]द्धेयं कुमतं तस्य चैव संश्रद्धेयं वायुमतं सदैव ।
न श्रद्धेयं नीतिशास्त्रं रसज्ञाः प्रवृत्तिशास्त्रं नापि वै सन्दधेयम् ॥ ३० ॥

उभौ च त्यक्त्वा मोक्षकामो महात्मा सुखी भवेन्नात्र विचार्यमस्ति ।

**दैत्यकुमारा ऊचुः**

सुनीतिशास्त्रश्रवणाद्दैत्यवर्य शत्रोः सकाशाद्रक्षिता वै भवेयुः ॥ ३१ ॥

मित्रादिभिः पालिताः वै भवेयुस्तस्मात्कथं तच्च हेयं सुशास्त्रम् ।
प्रवृत्तिशास्त्रश्रवणं कार्यमेव श्रेयोहेतुत्वात्तत्कथं त्याज्यमेव ॥ ३२ ॥

एवं चोक्तो दैत्यकुमारकैश्च ह्युवाच तेषां कर्तुकामो दयां च ।

## प्रह्लाद उवाच

शत्र्वादिभिः सुखदुःखादिकं स्याध्येतन्मतं कस्य रीत्या वदध्वम् ॥ ३३ ॥

मदीयपक्षं न भवत्येव बालाः को वा शत्रुर्मन्यते दैत्यवर्याः ।
भवत्पक्षे केऽपि शत्र्वादयः स्युर्नकेऽपि तेषां नीतिशास्त्रैः फलं किम् ॥३४ ॥

दिष्टं दैवं भागधेयो हरिस्तु स दास्यति सुखदुःखादिकं च ।
सर्वे लोकाः स्वसुखार्थं च नित्यं यत्नं दधते न तु दुःखार्थमेष ॥ ३५ ॥

दुःखं यथाऽयत्नतो भाव्यमेव तथैव काले वर्तते सौख्यमेव ।
तस्मान्मूढा दैवसंज्ञं हरिं च जानीध्वमित्थं व्यर्थमायुर्गतं च ॥ ३६ ॥

प्रवृत्तिशास्त्रं नैव सेव्यं कथंचित् तेनैव पापं सम्यगाप्स्यन्ति मूढाः ।
वृथैव हिंसां संकरिष्यन्ति नित्यं शिश्नोदरार्थं नात्र विचार्यमस्ति ॥ ३७ ॥

तानेव धर्मान् हरिप्रीत्यर्थमेव निष्कामबुध्या दुर्लभास्तेऽपि लोके ।
अतो धर्मान् भागवतान् भजध्वं ह्यायुर्वृथा न तु कार्यं सदापि ॥ ३८ ॥

यो वा लोके धर्मकामार्थमेवं पीडां स्वात्मनि न करोत्येव नित्यम् ।
स दुर्लभो हरिधर्मैकनिष्ठः सर्वे काम्यादौ तत्पराः सन्ति लोके ॥ ३९ ॥

## कुमारा ऊचुः

प्राप्स्यामहे भोऽसुरवर्यबाल बाल्ये विद्यां यौवनेऽपि स्त्रियश्च ।
वृद्धाप्यकाले मोक्षधर्मान् सदैव लप्स्यामहे चापि न संशयोऽत्र ॥ ४० ॥

## प्रह्लाद उवाच

निवृत्तधर्मानाचरिष्याम एव वृद्धाप्यकाले सर्वदा किंच तेन ।
सुबाल्यमारभ्य हि दैत्यवर्या धर्मांश्च प्राज्ञो ह्याचरेद्वैष्णवांश्च ॥ ४१ ॥

यन्मानुषं जन्म सुदुर्लभं च तत्रापि ज्ञानादिप्रयोजनप्रदम् ।
अनेकजन्मार्जितपुण्यसाध्यं अनित्यभूतं तु विदुः सुबालकाः ॥ ४२ ॥

यदीदृशं जन्म सुदुर्लभं च सद्वैष्णवज्ञानसाध्यं कुमाराः ।

**कुमारा ऊचुः**

मनुष्यमात्रं जन्म दैत्येन्द्रवर्य ज्ञानप्रदं किं न तथैव दृश्यते ।। ४३ ।।

सत्यं च नास्त्येव समस्तदेहिनां अदर्शनादश्रवणात्कथं वद ।

**प्रह्लाद उवाच**

मनुष्यदेहे यदि चेद्बुभुत्सा विष्णोश्च तत्त्वे हरिशुश्रूषणे च ।। ४४ ।।

तर्ह्येव सौख्यं बहुलं नराणां दिने दिने वृद्धिरेवेह सत्यं ।
अतः कुमारा मानुषीं योनिमेव निःश्रेयसः कारणं नान्यदेव ।। ४५ ।।

कर्तव्या सर्वदा विष्णोः सेवा श्रेयःप्रदायिनी ।
श्रेयस्करा नान्यसेवा भूतानामप्रिया यतः ।। ४६ ।।

विष्णुस्तु सर्वभूतानां प्रियत्वादीश्वरः सुहृत् ।
अतो हि विष्णुरेवैकः सर्वश्रेयस्करः सदा ।। ४७ ।।

तस्मात्स हरिरेवैको सेव्य एव न संशयः ।
दैवादेव सुखं दुःखं दारापत्यधनादिकं ।। ४८ ।।

तदर्थं नैव कर्तव्यः आयासो दैत्यनन्दनाः ।
आयुर्गतं व्यर्थमेव कदा यास्यति मानुषम् ।। ४९ ।।

यावच्छरीरं सबलं चैव पुष्टं रोगैर्विहीनं मरणाख्यां विपत्तिम् ।
नाप्नोति तावच्च भजेच्च मूढा नारायणस्यैव पदारविन्दम् ।। ५० ।।

पुंसश्चाहुर्वर्षशतं समाहुर्गतं चार्धं निद्रया ह्यन्धवच्च ।
बाल्ये गतं मूकभावेन चायुः कुमारभावे क्रीडतो याति मूढाः ।। ५१ ।।

कामेन मोहेन बलीयसा च ह्यभूतपूर्वेण बलीयसा च ।
गृहेषु सक्तस्य वृथापयाति चायुस्तथा जरया ग्रस्तगात्रे ।। ५२ ।।

अनर्घ्यकोशेषु गृहेषु पुत्र दारेषु पश्वादिषु मित्रकादिषु ।
आसक्तभूतो ह्यजितेन्द्रियश्च स्नेहाख्यपाशैश्च दृढैर्निबद्धः ।। ५३ ।।

को वा विमोक्तुं च समुत्सहेत संसारपाशं स्नेहशतैर्युतं च ।
द्रव्यादितृष्णां पुत्रभार्यादितृष्णां गरीयसीं विसृजेत् कोऽपि लोके॥ ५४ ॥
प्रेमास्पदायाश्च कथं स्त्रियायाः संग को वा विसृजेद्धि स्नेहम् ।
तस्याश्च मन्त्रान् रुचिरांश्च वाक्यान्यौपस्थजैह्वयं ह्यधरासवं च ॥ ५५ ॥
यो वा सुतस्नेहयुतः सुतानां कलाक्षराणामनुरक्तचित्तः ।
स्नेहं च तस्मिन् विसृजेत्कथं वा प्रेमास्पदानां सुहृदां सुमैत्रीम् ॥ ५६ ॥
गेहान् सुदिव्यान् रुचिरच्छदांश्च पुत्रार्जितांश्चैव वृत्तीः पशूंश्च ।
अक्षय्यरत्नाभरणानि कोशान् सुभृत्यवर्गान् पितरौ च दीनौ ॥ ५७ ॥
त्यजेत को वा ह्यवितृप्तकामः कथं विरज्येत दुराशयात्सदा ।
मत्तो न जानाति हि तं स्वकीयं कुटुम्बपोषाय नयन्निजायुः ॥ ५८ ॥
स्त्रीषु प्रसक्तो ह्यतिकामी स मूढः स दुःखयुक्तो न भवेद्विरक्तः ।
विद्वानसौ पुरुषोऽयं महात्मा क्रीडामृगो वामदृशां च स्त्रीणाम् ॥ ५९ ॥
आसां कथं मोचयितुं समर्थः........................।*
तस्मात्सुदूरे च विसृज्य संगं सुदुर्जनेषु विषयात्मकेषु ॥ ६० ॥
नारायणस्यैव सदा च यूयं अत्यादराच्छरणं यात भक्त्या ।
नारायणं प्रीणयतो न चास्ति बह्वायासो नापि वित्तव्ययश्च ॥ ६१ ॥
दूर्वाङ्कुरैः पूजितो विष्णुरेव प्रीणाति नित्यं भक्तवर्ये दयालुः ।
इदं मदीयं चरितं स्वरूपं ज्ञानं च विज्ञानयुतं च शुद्धम् ॥ ६२ ॥
जातं गुरोर्नारदस्य प्रसादात् वरुणादिब्रह्मान्तगुरोः प्रसादात् ।
एवं च तेनोपदिष्टाः कुमारा ऊचुः प्रह्लादं विष्णुभक्तं महान्तम् ॥ ६३ ॥

## कुमारा ऊचुः

इमे जन्मादिषड्भावा ईश्वरस्योच्यतेऽथवा ।
जीवस्याप्यथवाऽन्यस्य चैतद्विस्तृत्य नो वद ॥ ६४ ॥

---

* अतीव अस्पष्टः विशीर्णश्च ।

**प्रह्लाद उवाच**

उत्पत्तिरस्ति वृद्धिश्च परिणामो ह्यपक्षयः ।
विनाश इति षड्भावा न सन्ति परमात्मनः ॥ ६५ ॥

शरीरस्याभिमानाच्च स्वस्मिन् गृह्णाति सर्वदा ।
शरीरस्थोऽपि नृहरिर्न गृह्णाति यतो न हि ॥ ६६ ॥

तस्माज्जीवविशिष्टस्य देहस्यैव न चात्मनः ।
यथा वसन्तकाले च वने वृक्षादिकस्य च ॥ ६७ ॥

चूतादिसुफलानां तु कालाधीनत्वमेव च ।
प्रतीयते तथा नित्यं हर्यधीनत्वमस्य च ॥ ६८ ॥

कालस्य प्रेरको विष्णुः सर्वस्य प्रेरको यतः ।
अतश्चात्मा समुद्दिष्टः लक्षणैर्द्वादशैर्युतः ॥ ६९ ॥

जन्मादिकमतो नास्ति हरेर्नारायणस्य च ।
श्रुण्वन्तु तानि भो बाला लक्षणानि हरेः सदा ॥ ७० ॥

नित्योऽव्ययस्तथा शुद्धः एकः क्षेत्रज्ञः आश्रयः ।
अविक्रियः स्वदृग्वश्यो व्यापकोऽसंग्यनावृतः ॥ ७१ ॥

नित्यत्वादेः स्वरूपं च वक्ष्ये श्रुण्वन्तु चांजसा ।
स्वरूपतो यस्य नास्ति विनाशः सोऽव्ययः स्मृतः ॥ ७२ ॥

यस्य ह्यवयवादीनां व्ययो नास्ति स चाव्ययः ।
शरीरं प्राकृतं यस्य नैवास्ति सुकुमारकाः ॥ ७३ ॥

तज्जन्याश्चैव रागाद्याः अतः शुद्ध इतीरितः ॥
यो मुख्यः सर्वदा लोके स एको हरिरव्ययः ॥ ७४ ॥

क्षेत्राख्यस्य शरीरस्य स्वरूपप्रभया सदा ।
यो हि जानाति दैतेयाः स क्षेत्रज्ञ उदाहृतः ॥ ७५ ॥

सर्वदा तु शरीराणामाश्रयत्वात्स आश्रयः ।
स्वतश्च परतो वाऽपि परिणामविहीनतः ॥ ७६ ॥

अतश्च विक्रियः प्रोक्तः स्वात्मानं स्वयमेव वा ।
पश्यतीति स्वदृक् प्रोक्तो वशं यापयते यतः ॥ ७७ ॥

अतो वश्य इति प्रोक्तो बहिरन्तश्च सर्वशः ।
व्याप्तत्वाद्व्यापको विष्णुरसंगोक्तो ह्यसंगतः ॥ ७८ ॥

अज्ञानावरणाद्धीनो ह्यनावृत इतीरितः ।
एवं विधो हरिर्नित्यं पूर्वोक्तैर्लक्षणैर्युतः ॥ ७९ ॥

तस्यैव सर्वकर्तृत्वं तदधीनं च गात्रकं ।
तस्मिन् देहे ममत्वं च त्याज्यमेव न संशयः ॥ ८० ॥

शरीरादिविविक्तेन हरेर्ज्ञानं यथा भवेत् ।
तं प्रकारं च वक्ष्यामि श्रुणुध्वं दैत्यबालकाः ॥ ८१ ॥

निकषाश्मनि स्वर्णं च हेमकारो महाप्रभुः ।
संघर्षणाद्युपायैश्च प्राप्नोत्येव यथा तथा ॥ ८२ ॥

तदभिज्ञो मोक्षमिच्छुर्ज्ञानभक्त्याद्युपाधिभिः ।
देहेषु सम्यगालोच्य विविच्य हरिमव्ययम् ॥ ८३ ॥

ज्ञात्वा ब्रह्मगतिं चैव प्राप्नोत्यध्यात्मवित्सदा ।
आत्मानं परमात्मानमधिकृत्यैव वर्तनम् ॥ ८४ ॥

अतो वेदान्तशास्त्रं च ह्यध्यात्मं समुदाहृतम् ।
यस्तत्सम्यग्विजानाति स एवाध्यात्मवित्स्मृतः ॥ ८५ ॥

सात्विकादिस्वभावो हि चाध्यात्मं परिकीर्तितम् ।
यस्तद्वेत्ति महाभागः स एवाध्यात्मवित्स्मृतः ॥ ८६ ॥

महाभूतादिचाध्यात्मं यस्तद्वेत्ति सदैव च ।
स चैवाध्यात्मिकः प्रोक्तः सर्वशास्त्रेषु सर्वदा ॥ ८७ ॥

तानि भूतानि वक्ष्यामि श्रुण्वन्तु ह्यंजसाऽसुराः ।
मूलप्रकृतिरेकं तु महत्तत्वं द्वितीयकम् ॥ ८८ ॥

अहंकारं तृतीयं तु पृथिव्यादि च पंचकम् ।
एवमष्टौ प्रकृतयः ज्ञातव्या नात्र संशयः ॥ ८९ ॥

सत्त्वादीनां च प्रकृतावन्तर्भावविवक्षया ।
अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडश स्मृताः ॥ ९० ॥

तान् श्रुण्वन्तु महाभागा इन्द्रियाणि दशैव तु ।
मनस्त्वेकं च शब्दादिविषयाः पंच वै स्मृताः ॥ ९१ ॥

पंचविंशोऽभिमानी च जीव एव प्रकीर्तितः ।
षड्विंशो हरिरेवैको नात्र कार्या विचारणा ॥ ९२ ॥

चतुर्विंशतिसत्तत्त्वैर्देहोऽयं निर्मितोऽभवत् ।
जीवो विष्णुश्च तत्रैव चास्ते देहे न संशयः ॥ ९३ ॥

देहेऽस्मिन् पुरुषा धीरास्तत्त्वेभ्यो दैत्यसत्तमाः ।
विविच्य परमात्मानं ज्ञातव्यं नात्र संशयः ॥ ९४ ॥

तत्त्वाभिमानिदेवेभ्यस्तथैव च कुमारकाः ।
कया हरिं विमृग्येत इत्यत्रापि ब्रवीम्यहम् ॥ ९५ ॥

यत्र यत्र जगत्तत्र हरिरास्ते स चान्वयः ।
यत्र यत्र हरिः साक्षात् तत्र तत्र जगन्नहि ॥ ९६ ॥

अन्वयव्यतिरेकेण निश्चितेनैव मानसा ।
विमृग्यात्सर्वदा ज्ञानी देहे नारायणं परम् ॥ ९७ ॥

व्याप्तिबोधकमानं च श्रुतिं वक्ष्ये कुमारकाः ॥

इन्द्रो वै बलिं ददाति । प्रजापतेरात्मानं परिददाति सर्वं को न ह्यात्मा किं ब्रह्मेति श्रुतेः । यतो वा इमानि भूतानि जायन्ते ये न जातानि जीवन्ति ॥

सुविचारं च कुर्वद्भिर्ज्ञानीयाद्धरिमव्ययम् ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ९८ ॥

इत्यादिलक्षणैर्नित्यं वर्णयेद्धरिमव्ययम् ।
जाग्रदाद्या ह्यवस्थाश्च जीवस्यैव कुमारकाः ॥ ९९ ॥

जीवेनैवानुभूयन्ते हरिणा प्रेरितेन च ।
नतु कालादिकं सर्वं तत्र कारणमीरितम् ॥ १०० ॥

जाग्रदादेः परो द्रष्टा नारायण इति स्मृतः ।
सुखदुःखभुजो जीवाः परो नारायणो हरिः ॥ १०१ ॥

स तु विश्वादिरूपेण ह्यास्ते देहे सदा हरिः ।
जीवेन सहावस्थानाज्जीवधर्मवदीर्यते ॥ १०२ ॥

न तु जीवस्य तादात्म्यात् बुद्ध इत्यादि चोच्यते ।
यथा वायुः सुष्ठुदुष्टगन्धसंसर्गयोगतः ॥ १०३ ॥

सुष्ठु दुष्टो मिश्रगन्धो वायुश्च व्यवह्रियते ।
तादात्म्यं तावता वायोर्न गन्धेन कुमारकाः ॥ १०४ ॥

जीवेन सहावस्थानाज्जीवधर्मबलादपि ।
तथा विश्वादयः सर्वे जीवाद्भिन्ना न संशयः ॥ १०५ ॥

तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत् ।
इति श्रुतिबलाच्चैव देहादेश्च हरेः सदा ।
संपर्कोऽस्त्येव तावच्च दोषो नैव हि चिन्तयेत् ॥ १०६ ॥

तथैव चिन्तनाद्बाला अधो यान्ति न संशयः ।
अभेददर्शनं पुंसः संसारस्यैव कारणम् ॥ १०७ ॥

अभेददर्शनं हेतुर्गुणकर्मनिबन्धनः ।
कर्मादिबन्धने हेतुरज्ञानं परिकीर्तितम् ॥ १०८ ॥

अभेददर्शनाद्याति तमो नास्त्यत्र संशयः ।
राजाऽहं वदता मार्गे ह्यनर्थः प्राप्यते यथा ॥ १०९ ॥

तथा विष्णुश्चाहमिति वदतः पापकर्मणः ।
यथा स्वप्ने शिरच्छेदः स्वयं कृत्वा मनोवशः ॥ ११० ॥

ततो दुःखमवाप्नोति तथा जागर्तितेऽपि तु ।
जानन्नप्यात्मनो दुःखं अवशस्तु प्रवर्तते ॥ १११ ॥

मनोमयत्वात्स्वप्नस्य न मिथ्यात्वमुदीर्यते ।
अभेददर्शनं यस्माद्गुणकर्मनिमित्तजम् ॥ ११२ ॥

तस्मान्निर्मूलनायैव संसारस्य कुमारकाः ।
उपायस्तत्र कर्तव्यो भवद्भिः शिक्षितैन्द्रियैः ॥ ११३ ॥

तत्रोपायाः सन्ति सहस्रमेव हरेरुक्तं सदुपायं ब्रवीमि ।
श्रुण्वन्तु सर्वे दैत्यकुमारकाश्च ह्यत्यादराद् हृदि धार्यं सदा हि ॥ ११४ ॥

यदि नारायणे भक्तिः स्यात्सदा नान्यथा रतिः ।
तदेवालं च संसारः सम्यङ् निर्मूलनाय च ॥ ११५ ॥

साधनानि च भक्तेश्च सर्वे श्रुण्वन्तु बालकाः ।
गुरुशुश्रूषया भक्त्या भक्तिर्भवति वै हरौ ॥ ११६ ॥

सर्वलाभार्पणेनैव भक्त्या नारायणे सदा ।
संगेन विष्णुभक्तानां द्रोहिणां वाप्यसंगतेः ॥ ११७ ॥

अवैष्णवानां दानस्य विधुराद्वर्धते हरौ ।
महत्सेवां द्वारमाहुर्विमुक्तेः तमोद्वारं योषितां संगिसंगम् ॥ ११८ ॥

तस्मात्सेव्यो महतां संग एव त्याज्यं योषित्संगिनां संगिसंगम् ।
पञ्चरात्रोक्तमार्गेण चेश्वराराधनेन च ।
पञ्चकाले दैत्यबाला हरौ भक्तिः प्रजायते ॥ ११९ ॥

पञ्चकाले हरेः पूजाप्रकारं च ब्रवीम्यहम् ।
प्रातःकाले हरिमुद्दिश्य चैव स्नानं सन्ध्या सत्कथापूर्वकं च ॥ १२० ॥

सम्यक्कार्यं चाहुरार्याः कृतं हि विष्णावेव चार्पितं स्याद्यदा हि ।
मध्याह्नकाले षोडशैश्चोपचारैः पूजां कुर्यात्प्रतिमायाश्च विष्णोः ॥ १२१ ॥

तदाप्यहं पूजनं वै मुरारेः कथापूर्वं ह्यर्पितं चापि विष्णौ ।
अपराह्णे वै वैश्वदेवं बलिं च दद्यादग्नौ विष्णुबुध्या महात्मा ॥ १२२ ॥

हरेः कथापूर्वकं भोजनं च कर्तव्यमेवं ब्रह्मणा वैष्णवाश्च ।
तदेवाहुः पूजनं दैत्यवर्याः कृतं सर्वं चार्पितं यत्सदा हि ॥ १२३ ॥

सायंकाले वन्दनं कार्यमेव सत्सन्ध्यायाः सुष्ठु चोपासनं हि ।
हरेः कथाश्रवणं चापि कार्यं यामावधिर्भक्तिपूर्वेण नित्यम् ॥ १२४ ॥

इदं चाहुः पूजनं दैत्यपुत्राः कृतं सर्वं चार्पितं यत्सदा हि ।
एवं चाहुः पञ्चकाले च पूजां हरौ भक्तेर्वर्धनं साधनं च ॥ १२५ ॥

सर्वदा पञ्चकालेऽपि श्रद्धया परमात्मनः ।
कथायाः श्रवणेनैव हरौ भक्तिः प्रजायते ॥ १२६ ॥

नारायणस्यैव सुपूर्णशक्तेः संकीर्तनैर्गुणकर्मादिकानाम् ।
नारायणे वर्धते भक्तिरेव संसारपाशच्छेदने चैव दक्षः ॥ १२७ ॥

संचिन्तयेद्भगवतश्चरणारविन्दं ध्यानाद्भवेद्भक्तिविवर्धनं च ।
तथैव विष्णोः प्रतिमायाश्च नित्यं ईक्षा भवेद्भक्तिरेवं सदैव ॥ १२८ ॥

प्रदक्षिणान्नमनाच्चापि विष्णौ भक्तिर्भवेद्भक्तिपूर्वं कृतं चेत् ।
एवं च क्रियमाणे वै अरिषड्वर्गनिर्जिते ॥ १२९ ॥

नारायणे भगवति क्रियते भक्तिरेव वै ।
यथा रतिं स लभते परे नारायणेऽमले ॥ १३० ॥

श्रुण्वन् सुभद्राणि रथाङ्गपाणेः सृष्ट्यादिकर्माणि विचित्रकाणि ।
वीर्याणि कंसस्य वधादिकानि कृतानि विष्णोरवतारांश्च नित्यम् ॥ १३१ ॥

यदा प्रहर्षात्पुलकाश्रुगद्गदः प्रोत्कण्ठ उद्गायति रौति नृत्यति ।
कुर्वन्त इत्यादिकमेव केचित् भक्ता न सर्वे बहुभेदयुक्ताः ॥ १३२ ॥

केचिच्च भक्ताश्च हरेर्मुरारेरुद्गानने ह्यान्तरे भक्तिमेव ।
नित्यं कुमाराः प्रकटीकृत्य केचिद् संरोदनाद्यश्रुपाताच्च नित्यम् ॥ १३३ ॥

भक्तश्च कश्चिन्नर्तते चैव दैत्यास्तूष्णीं हरेर्भजने चैव केचित् ।
केचिच्च भक्ता ह्यर्चनेनैव नित्यं केचिच्च विष्णोर्वन्दनाच्चैव ध्यायन् ॥ १३४ ॥

मुहुर्मुहुर्हसनाच्चैव केचित् केचिच्च गात्रैर्वर्धमानैश्च नित्यम् ।
यदा च भक्तिर्वर्धमाना हि नित्यं पदारविन्दे नृहरेश्चापि विष्णोः ॥ १३५ ॥

तदा हि भक्ता मुक्तसंगास्तु बन्धात् सद्भक्तिभावात्कृतचर्यास्तु ते वै ।
निर्दग्धबीजाश्च भवन्ति दैत्याः संस्काररूपा वासनाख्याश्च नित्यम् ॥ १३६ ॥

तन्नाशनान्नष्टसंसारचक्रादानन्दरूपाः प्रभवन्ति नित्यम् ।
अतो भजध्वं हृदये दैत्यवर्या नारायणं दुःखनिवारणं च ॥ १३७ ॥

नृणां यथा जाह्नवीस्नानमेव दुःसाधनं बहुद्रव्यादिजन्यम् ।
को वा प्रयासश्च तथा मुरारेरुपासने वसतो हृत्सु नित्यम् ॥ १३८ ॥

विहाय तं नीतिशास्त्रैः किमेभिः प्रवृत्तिशास्त्रैः कुर्वतः सार्थकं च ।
किं राज्यभोगैश्चश्चलैश्चैव दैत्याः किं वा कलत्रैः पशुभिः सुतैश्च ॥ १३९ ॥

गृहैर्महीकुंजरकोशवित्तैः सर्वैश्च कामैः क्षणभंगुरायुषैः ।
संपादनेनैव गतं हि चायुः वृथैव पुंसां दुर्लभं मर्त्यलोके ॥ १४० ॥

अनर्थभूतैः कोशराज्यादिभिश्च संपादनाद् बहुदुःखं प्रयाति ।
अनर्थभूतैरर्थवद्दृश्यमानैः कण्डूतिवत्सुखरूपैः सुदुःखैः ॥ १४१ ॥

द्रव्यादिकं नैव संपाद्यमेव हरिप्रीत्यर्थं नैव प्रीणाति तेन ।
नारायणप्रीतिकृते कुमारा नैवाचारो नापि बहुज्ञता च ।। १४२ ।।
दानं तपो नैव न चेज्यता च न वै शौचं नापि कृच्छ्रादिकं च
न वै जपो नापि सौन्दर्यमेव बहुज्ञता नाध्ययनादिकं च ।। १४३ ।।
ततो भक्त्या प्रीयते केशवोऽलं ह्यन्यत्सर्वं लोकविडम्बनं च ।
तस्माद्भक्तिं कुरुत दानवेन्द्राः नारायणे सर्वदा वै दयालौ ।। १४४ ।।
मोक्षं गताश्चापि भक्त्या कुमारास्त्रियः शूद्रा यक्षरक्षांसि चैव ।
खगा मृगाः पशवः पापजीवाः दैतेयाश्च वृक्षजीवादयश्च ।। १४५ ।।
कुर्यात्तस्माद्भक्तिरेवं सदैव ह्यनन्तबाहौ दुःखपाशाद्धि मोक्तुम् ।
ते दैत्यपुत्रा वर्णितं तेन सम्यक् श्रुत्वा जगृहुश्चादरेणैव योग्याः ।। १४६ ।।
अवद्यत्वात् गुर्वनुशिक्षितं च नागृह्णंश्च हरितत्त्वैकनिष्ठाः ।
शण्डश्च मर्को दैत्यकुमारकाणां हरौ भक्तिं सुदृढां संस्थिता च ।। १४७ ।।
आलक्ष्य तान् भक्तियुतान् महात्मा शीघ्रं गत्वा राज्ञ आवेदयत्सः ।
श्रुत्वा सर्वं दैत्यवर्यो महात्मा पुत्रं चामुं दुःसहं पापमूढः ।। १४८ ।।
कोपावेशाच्चालयन् गात्रमेव पुत्रं हन्तुं मनसि सन्दधार ।
पुत्रं प्रह्लादं परुषया चैव वाचा संप्रक्षिपन् प्राह सन्दह्यमानः ।। १४९ ।।

**हिरण्यकशिपुरुवाच**

*..............................

तस्माद्ब्रूहि सुबलं तस्य मूढ यस्याश्रयात्त्वं च हीत्थं करोषि ।। १५० ।।

**प्रह्लाद उवाच**

नारायणो मे सर्वदा मूढबुद्धे बलं नित्यं भक्तवर्ये दयालुः ।
न केवलं मे भगवान्वासुदेवः भवतश्चापि स्वमलं सर्वदैव ।। १५१ ।।

---

* अपपाठादिना अस्पष्टः पाठः ।

न केवलं मे भवतश्चापि नित्यं स वै बलं बलिनां चापरेषाम् ।
न केवलं बलिनां चापरेषां त्वद्रुद्रदेवस्य बलं मुरारिः ॥ १५२ ॥

न केवलं रुद्रदेवस्य मूढ पितुः शिवस्यापि बलं बलीयान् ।
न केवलं ब्रह्मणो मूढबुद्धे तस्यैव मातुर्बलमाहुर्हरिं च ॥ १५३ ॥

न तस्याहुर्बलमन्यत्कदापि पूर्णस्य लीला को हि लोके च वेद ।
ब्रह्मादयो ये स्थिरजंगमा हि नारायणेनैव वशं प्रणीताः ॥ १५४ ॥

त्यक्त्वाऽसुरं भावमिमं स्वमात्मनः नारायणं शरमं संव्रज त्वम् ।
तेनैव त्वं चेह परत्र लोके संयास्यसि परमं सौख्यमेव ॥ १५५ ॥

इत्युक्तोऽसौ दैत्यवर्यो महात्मा पुत्रं प्रह्लादं प्राह संक्रुद्ध एव ।
अद्यैव त्वं मर्तुकामोऽसि पुत्र यतोऽस्माकं पुरतो जल्पसीत्थम् ॥ १५६ ॥

मदन्योऽपीश्वरः क्वास्ति दर्शयस्व तवेश्वरम् ।
तस्मिन् संक्रुद्ध एवासौ कृपाणं जगृहेऽसुरः ॥ १५७ ॥

वायुरेव तदाऽऽगत्य पक्षिरूपेण सादरम् ।
हिरण्यकशिपोरग्रे ह्युपविष्टोऽब्रवीद्वचः ॥ १५८ ॥

## पक्ष्युवाच

मूढासुर त्यज दुष्टस्वभावं पुत्रं प्रह्लादं हरिभक्तं सुपुण्यं ।
शरणं व्रज हरिपादारविन्दं भजस्व नित्यमल्पमायुस्तवास्ति ॥ १५९ ॥

यामत्रयानन्तरं मूढबुद्धे मरिष्यसि नात्रविचार्यमस्ति ।
एवं चोक्तःपक्षिणा दैत्यवर्यः दहन्निव क्रूरदृष्ट्या खगं तम् ॥ १६० ॥

भो मूढपक्षिन् मामनादृत्य वाक्य विकत्थसे ह्यतिमात्रं च दुष्टम् ।
न मे शङ्का श्रीपतेर्वै सकाशात् न गन्धर्वान्नापि यमाच्च सूर्यात् ॥१६१ ॥

नाग्नेर्न सोमान्नापि रुद्रादिकेभ्यो शंका च नैवास्ति सदैव पाप ।
सर्वेषां वै जगतां मूढपक्षिन् सुमारकोऽहं नैव मन्मारकोऽस्ति ॥ १६२ ॥

त्वं चाद्य वै मर्तुकामोऽसि पक्षिन् अनादृत्य ह्यतिमात्रं ब्रवीषि ।

**पक्ष्युवाच**

प्रलापयुक्तं वचनं किमर्थं प्रभाषसे त्वं ह्यगणय्य मृत्युम् ॥ १६३ ॥
अशक्यकार्ये चोद्यमं चैव व्यर्थं भजस्व मूढ हरिपादारविन्दम् ।
नो चेत्त्वदीयं गात्रमेवाद्य द्रक्ष्ये रक्तोक्षितं सुनखैर्दारितं च ॥ १६४ ॥
नारायणः स्वस्य चोरौ निधाय नखाङ्कुरैर्हृत्सरोजं तवाद्य ।
खनिष्यति नात्र विचार्यमस्ति सन्द्रक्ष्यसे मृत्युमेवापि मूढ ॥ १६५ ॥
हरिः स्वतन्त्रश्च तदन्यदेवाः सुसेवका एव च रुद्रपूर्वाः ।
मन्मारणे तव शक्तिः क चास्ति कुतस्तरां तव पुत्रस्य मूढ ॥ १६६ ॥
पूर्वप्रयासेन च किं प्रजातं पुनः प्रयासेन च किं भविष्यति ।
शिवोऽहमित्येव तवास्ति बुद्धिः तेनैव त्वं यास्यसि ह्युत्तमं तमः ॥१६७ ॥
मूढासुर यदि लोके हरस्तु सर्वोत्तमो यदि च स्यात्सदैव ।
रुद्रप्रसादाच्च तव प्रयासात् पुत्रो यदा मरणं स्याच्च सत्यम् ॥ १६८ ॥
अयं रुद्रो यदि वायोः सकाशात् यदा भवेदुत्तमो मूढबुद्धे ।
तव प्रयासात् मरणं प्रयातु न चेत् त्वमेव मरणं प्राप्स्यसे च ॥ १६९ ॥
यदा रुद्रस्य तव देवस्य नास्ति तदा तव किमु वक्तव्यमत्र ।
तेनैवमुक्तो दैत्यवर्यो महात्मा हन्तुं वायुं चाददे चापवर्यम् ॥ १७० ॥
सज्जं कृत्वा तत्र बाणं च दिव्यं सन्धाय मूढः कर्णपर्यन्तमेव ।
आकृष्य सम्यक् प्रमुमोच तस्य तदा पक्षी नाप कांचित् क्षतिं च ॥ १७१ ॥
उवाच चैनं दैत्यवर्यं च पक्षी तवेशत्वं भग्नमद्यैव जातम् ।
तवैव बाणस्य ममाद्य पातने शक्तिर्न चैव तव प्रेरितस्य ॥ १७२ ॥
तेनैवमुक्तो प्राह दैत्यो महात्मा हनिष्ये त्वामभिमन्त्र्यास्त्रमग्नेः ।
अग्नेरस्त्रं चाभिमन्त्र्यैव बाणे मुमोच बाणं पक्षिवर्ये महात्मा ॥ १७३ ॥
तदा पक्षी चागतं सन्दहन्तं पपौ बाणं ह्यवदच्चापि तं च ।

तवेशत्वं कुत्र पलायितं च भजेशपालं ब्रह्मदेवादिवन्द्यम् ॥ १७४ ॥
एवं चोक्तो दैत्यवर्यस्तु मूढः संक्रुद्धः सन् पाशुपतास्त्रमाददे ।
संमन्त्रयित्वा शरवर्ये च मूढः मुमोच तस्मिन् प्रापयितुं च मृत्युम् ॥ १७५ ॥
आयान्तमीक्ष्यैव स पक्षिराजो पपौ चास्त्रं वदनेनापि तं च ।
पलायितः कुत्र रुद्रो महात्मा तवेश्वरो भज विष्णुं च देवम् ॥ १७६ ॥
पुत्रं प्रह्लादं च सुभक्तवर्यं संप्रीणयस्व नात्र विचार्यमस्ति ।
अतोऽन्यथा नाशमुपैषि मूढ इत्येवमुक्त्वा प्रययौ च पक्षी ॥ १७७ ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे प्रह्लादचरित्रे पक्षिरूपधारिवायुवाक्ये एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

## ॥ चत्वारिंशोऽध्यायः ॥

### श्रीकृष्ण उवाच

पक्षिणश्च वचः श्रुत्वा कोपाकुलितमानसः ।
मेने विष्णोः प्रतीकानि द्विजगोऽग्निवनानि च ॥ १ ॥

वृन्दावनं च ह्यश्वत्थं शालग्रामादयस्तथा ।
एतेष्वाच्छिद्यमानेषु स्वयं विष्णुर्विनश्यति ॥ २ ॥

एवं विचिन्त्य मनसा दानार्थं चागतं द्विजम् ।
क्रुद्धो जघान तं विप्रं खड्गेन खगसत्तम ॥ ३ ॥

तथा जघान खड्गेन गृष्टिं च स्वगृहे स्थिताम् ।
ताडयित्वा पदा सम्यक् वृन्दावनमपातयत् ॥ ४ ॥

चिच्छेदास्वत्थवृक्षं च ह्यग्निं चाशमयत्प्रभुः ।
शालग्रामं च पाषाणैश्चूर्णयामास मूढधीः ॥ ५ ॥

नारायणोऽपि दैत्यस्य ह्यनयं चासहत्प्रभुः ।
हस्ते गृहीत्वा खड्गं च ह्यूचे वै पुत्रमंजसा ॥ ६ ॥

तव विष्णुः क्व चास्तीति ब्रूहि मे कुलनाशन ।
सर्वत्राधिष्ठितोऽस्तीति यदि त्वं च ब्रवीषि हि ॥ ७ ॥

स्तम्भे न दृश्यते कस्माद्वद मूढ कुलाधम ।
यदि चात्र न दृश्येत शिरः कायाद्धरामि ते ॥ ८ ॥

एवमुक्तस्तु दैत्येन प्रह्लादश्चापि तद्ग्रहः ।
अत्रैव वर्तते विष्णुः स्तम्भे दैत्यकुलाधम ॥ ९ ॥

तवान्तकश्च नृहरिर्भक्तानां परिपालकः ।
एवं दुरुक्तैर्मुहुरर्द्यमानः सुतेन दैत्यो हरिमूषकेण ॥ १० ॥

वरासनादुत्पतितो महासुरः स्तम्भं तताडातिबलः स्वमुष्टिना ।
तदैव तस्मिन्नभवत्सुघोरः शब्दः सुघोराण्टकटाहमस्फुटत् ॥ ११ ॥

श्रुत्वा निनादं च ह्यजादयः सुराः समागमंस्तत्र च द्रष्टुमुत्सवम् ।
दिदृक्षवश्चक्षुरलं नभस्तलं विमानमारुह्य स्वदारपुत्रैः ॥ १२ ॥

प्रह्लादवाक्यं च ऋतं विधातुं व्याप्तिं चस्वस्य ह्यखिलेषु नित्यं ।
अदृश्यतात्यद्भुतरूपमुग्रं स्तम्भे सभायां न मृगं न मानुषम् ॥ १३ ॥

नायं मृगो नापि नरः किमेतन्मीमांसमानः स ययौ समीपम् ।
भयङ्करं रूपमनूपमं च प्रतप्तजाम्बूनदतिग्मलोचनम् ॥ १४ ॥

सुतीक्ष्णदंष्ट्रं च करालजिह्वं करालदंष्ट्रं भ्रुकुटीमुखोल्बणम् ।
दृढोर्ध्वकर्णे गिरिगह्वरास्यवद् व्यात्तास्यनासापुटसंयुतं च ॥ १५ ॥

कपोलतीक्ष्णेन विभीषणं च दिवं स्पृशत्कायभयानकं च ।
अदीर्घग्रीवं पृथुवक्षःस्थलं च सुसूक्ष्मरूपं सुनखायुधं च ॥ १६ ॥

तनूरुहैररुणैश्चैव व्याप्तं व्याप्तैर्भुजैः शतशश्चैव युक्तम् ।
सुदर्शनाद्यैश्च दुरासदं च सुविस्फुलिङ्गांश्च मुखैर्वमन्तं ॥ १७ ॥

विद्राव्यमाणं च नखप्रवेकैर्महासुरान् दानवयूथयूथपान् ।
दृष्ट्वा हरिं दैत्यवर्यो महात्मा ह्ययं च मे प्राणहरो हरिः स्मृतः ॥ १८ ॥

एवं ब्रुवन्नभ्यपतद्गदायुधो महानृसिंहं प्रति दैत्यवर्यः ।
आलक्ष्य दीपं च यथा पतङ्गो यथोरगस्तार्क्ष्यमथागमद् द्रुतम् ॥ १९ ॥

बलादिरूपे च हरौ महात्मनि नैतद्विचित्रं च जगद्विलक्षणे ।
अथाभिपद्याभ्यहनन्महाहरिं महासुरो गदयाऽसौ रुषा च ॥ २० ॥

महासुरं सगदं पोथयन्तं गदाधरो ह्यगृहीन्मृत्युवच्च ।
स तस्य हस्ताद्गलितो महासुरो गरुत्मतो यद्वदहिस्तथैव ॥ २१ ॥

भ्रष्टोऽञ्जसासौ ह्यवमन्यते च ह्यसाध्विदं मरणं मे ध्रुवं च ।
पुनश्चासावसुरावेशतश्च तं मन्यमानो निजवीर्यशङ्कितम् ॥ २२ ॥

पुनश्च युद्धाय स मूढबुद्धिःसन्नद्धोऽभूत्संप्रगृह्याशु खड्गम् ।
तं शीघ्रवेगं प्रचरन्तमाशु तमुल्बणं जगृहे वासुदेवः ॥ २३ ॥

अङ्के निधायैव नखैर्ददार सर्पं यथा गरुडो लीलयैव ।
विवृत्तनेत्रश्च कराललोचनः स्वजिह्वया लेलिहन् दैत्यवर्यम् ॥ २४ ॥

अहन् तथा दैत्यवर्यानुगांश्च नखाख्यशस्त्रैमारितवान् सहस्रशः ।
सटावधूताश्च घनःपरापतन् ग्रहाश्च दृष्ट्या च विनष्टरोचिषः ॥ २५ ॥

श्वासैर्हताः सप्त महासमुद्राः विचुक्षुभुद्दिग्गजास्त्यक्तवन्तः ।
अमुष्य वेगाच्च सुभूधराश्च तदा समुत्पेतुरितस्ततश्च ॥ २६ ॥

देवाः समस्ताश्च तदा निशम्य प्रचण्डवक्त्रं नृहरिं ज्वलन्तं ।
प्रसूनवृष्टिं ववृषुर्मुदा युताः सुरस्त्रियो या हरिभक्तिवर्धिताः ॥ २७ ॥

सुरादिका दुन्दुभयो विनेदिरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ।
ब्रह्मादिदेवा ऋषयो महोरगाः सिद्धाश्च विद्याधरचारणाश्च ॥ २८ ॥

सर्वे ह्युपव्रज्य हरिं च तुष्टुवुः सकिन्नराः किंपुरुषा महर्षयः ।
काला जयाद्या अपि विष्णुपार्षदाः पृथक् स्थिताः संस्तुवन्तः पृथक् च ॥ २९ ॥

आदावजो नृहरिं चैव ईडे बद्धांजलिर्भावविवर्धितात्मा ।

**ब्रह्मोवाच**

नतोऽस्म्यहं त्वच्चरणारविन्दे अनन्तशक्तिश्च तवाद्य दृष्टा ॥ ३० ॥
अनन्तवीर्यं च पराक्रमं ते ह्यनन्तसूर्याधिककान्तिसन्मुखम् ।
त्वद्भक्तवर्यस्य चाभीष्टमेव दत्वा च तं पाहि नृसिंहमूर्ते ॥ ३१ ॥
त्वत्पुत्ररूपाश्च वयं महात्मन् कृपास्पदा एव निरंतरं तव ।
तात्कालिकीं भक्तिमपेक्ष्य देहि यथैव मित्रस्य यथैव भिक्षोः ॥ ३२ ॥

अस्मासु प्रीतिस्तु यथैव चास्ति तथैव ते नास्ति च दैत्यपुत्रे ।
तात्कालिकीं दर्शयितुं च भक्तिं लोके च भक्तं प्रथितं च दर्शय ॥ ३३ ॥

**रुद्र उवाच**

महासुरो ह्यल्पकोपाद्धतश्च युगावसाने ह्युचितोऽयं च कोपः ।
अलङ्कुरु त्वं तनयं भक्तवर्यं पादारविन्दप्रणतं पाहि देव ॥ ३४ ॥

**इन्द्र उवाच**

वयं सुरक्षितास्त्वद्य भवता दैत्यसूदन ।
यज्ञेषु भगवानस्मान् प्रत्यानीतांस्त्वयानघ ॥ ३५ ॥

**ऋषय ऊचुः**

जानीमहे ज्ञानरूपं च ते तध्द्याविष्कृतं च भवतैव जगत्सु व्याप्तम् ।
पुनश्च तं दैत्यवर्येण नष्टं नृसिंहरूपेण पुनः समुद्धृतम् ॥ ३६ ॥

**पितर ऊचुः**

दत्तानि नोऽधिबुभुजे प्रसभं च दैत्यैः
श्राद्धानि तीर्थसमयेऽपि तिलान् सहाद्रिः ।
दैत्यं निहत्य नखरैश्च नृसिंहरूप
श्राद्धानि चाध्यगमयश्च वयं नताः स्मः ॥ ३७ ॥

**सिद्धा ऊचुः**

दैत्यश्च नो योगसिद्धामहर्षी अणीमादींश्च कृच्छ्रचान्द्रयणेन ।
................................................॥ ३८ ॥

**विद्याधरा ऊचुः**

विलक्षणस्यैव हरेरखण्डतपोपासासमलब्धां च विद्याम् ।
न्यषेधदज्ञो बलवीर्यदृप्तो स येन संख्ये पशुवद्धतस्त्वया ॥ ३९ ॥

**नागा ऊचुः**

येनैव पापेन हृतानि नः प्रभो ह्यनर्घ्यरत्नानि हृताः स्त्रियश्च ।
तस्यैव वक्षोऽस्य विपाटनेन देह्यानन्दं सुठु चास्माकमीश ॥ ४० ॥

**मनव ऊचुः**

तवाज्ञाकारिणो नित्यं वयं च मनवः स्मृताः ।
सेवाविघ्नं प्रकुर्वाणः सूदितोऽद्य महाप्रभो ॥ ४१ ॥

**गन्धर्वा ऊचुः**

विष्णो वयं नटा नाट्याः गायकाश्च सदा तव ।
दैत्यवर्यबलादेव तदधीना गता वयम् ॥ ४२ ॥

**चारणा ऊचुः**

घातयित्वा दैत्यवर्यं मोचिताः स्म न संशयः ।
वयं चानन्दसंमग्ना नतोऽस्मोऽद्य दयां कुरु ॥ ४३ ॥

नृसिंह त्वत्पादसरोरुहं च मोक्षाय नित्यं च समाश्रिता वयं ।
तत्रैव विघ्नं ददतं च देत्यं निषूदयित्वाऽभिसंरक्षिताश्च ॥ ४४ ॥

**यक्षा ऊचुः**

दासा वयं ते सर्वदा वाहकाश्च दितेः सुतेन प्रापिता वाहकत्वम् ।
मृतो ह्यद्य नखजालैः सुपाप ह्यानन्दयुक्तास्त्वां स्तुताः स्मोऽद्य हीश ॥ ४५ ॥

**किंपुरुषा ऊचुः**

वयं तु पुरुषाभासा पुराणपुरुषोत्तम
अयं सुपापो नष्टश्च सज्जनैर्निन्दितो यतः ॥ ४६ ॥

**विष्णुपार्षदा ऊचुः**

वयं नृसिंहाद्य ह्यानन्दतृप्तास्त्वया सुधर्मः स्थापितो भूतले च ।
संमारितो दैत्यवर्यस्त्वयैव संपालितो भक्तवर्गो नृसिंह ॥ ४७ ॥

**कृष्ण उवाच**

ब्रह्मरुद्रादिदेवाश्च ऋषयो नारदादयः ।
संस्तुवन्तो हरेर्मन्युं शान्तं कर्तुम् न वै क्षमाः ॥ ४८ ॥

देवाः संप्रेषयामासुर्लक्ष्मीं शमयितुं हरेः ।
देवैः संप्रेषिता लक्ष्मीर्दृष्ट्वा तन्महदद्भुतम् ॥ ४९ ॥

अन्यैः साधारणैर्मर्त्यैर्ह्यदृष्टो ह्यश्रुतो यतः ।

कोपेन शंकिता लक्ष्मीर्नोपयायात्तदन्तिकम् ॥ ५० ॥

प्रेषयामास प्रह्लादं कञ्जयोनिर्महाप्रभुः ।
कुपितं पितरं वत्स मन्युं प्रशमय प्रभो ॥ ५१ ॥

ओमित्युक्त्वा नृसिंहस्य चान्तिकं शनकैर्ययौ ।
अदृष्टाश्रुतपूर्वं तं लक्ष्म्याश्च ब्रह्मणस्तदा ॥ ५२ ॥

नैव सञ्चिन्तनीयं हि नित्यदृष्टौ च तौ स्मृतौ ।
लक्ष्म्या दृष्टं न जानाति ब्रह्मा चैव चतुर्मुखः ॥ ५३ ॥

मोहनायासुराणां च भीत्या तौ न गताविति ।
उभयोर्गमनाभावे हेतुरन्योऽस्ति तच्छृणु ॥ ५७ ॥

भक्तवर्येऽपि प्रह्लादे वात्सल्यं नृहरेरपि ।
तत्कालजं तु ज्ञात्वैव नोपयायाच्चतुर्मुखः ॥ ५८ ॥

नोपायायात्तथा लक्ष्मीः प्रैषयत्तं चतुर्मुखः ।
एतावता च लक्ष्मादि सम्यग्वात्सल्यतां हरे ॥ ५९ ॥

हित्वा दैत्यसुते तच्च बुद्धिवैषम्यमेव हि ।
शंकनीया महाभाग मोहनाय सुरास्तथा ॥ ६० ॥

---

* प्राचीनपुस्तके सम्यङ् न मुद्रितः ।

प्रह्लादोऽपि महाभागो ननाम शिरसा हरिम् ।
मन्युज्वालैर्ज्वलन्तं च नारसिंहं भयङ्करम् ॥ ६१ ॥

तमर्भकं पतितं पादमूले परिप्लुतः कृपया नारसिंहः ।
उत्थाप्य तं कृपय तस्य मूर्ध्नि कराम्बुजं ह्यददाद्वासुदेवः ॥ ६२ ॥

दोर्भ्यां च तं भक्तवर्यं दयालुः प्रेम्णा च तं सस्वजे नारसिंहः ।
हरेः करस्पर्शविधूतपापः नष्टाशुभो व्यक्तस्वयोग्यदर्शनः ॥ ६३ ॥

स विस्फुरज्ज्ञानधनस्वरूपो ह्यस्तौद्गिरा गद्गदया नृसिंहम् ।

## प्रह्लाद उवाच

ये ब्रह्मरुद्रविबुधाः परमर्षयश्चसर्वे हरौ नियतबुद्धियुता हि नित्यं ।

एतादृशस्तु नृहरिस्तु मत्सकाशात् स्तोतुं समर्हति च किं ह्यसुरस्य जातेः ॥ ६५ ॥

नारायणस्य परमस्य तु नैव चान्तं यान्ति स्वतश्च न हरौ प्रवणाश्च नित्यं ।
विद्यावयोद्रविणरूपतपःश्रुतानि चौजःप्रभावबलपौरुषबुद्धियोगाः ॥

एते परस्य न भवन्ति सुतोषणाय भक्त्या तुतोष भगवांश्च यथा गजाय ॥ ६६ ॥

भक्त्योपबृंहितधनादिकमेव सम्यगाराधनाय भवति स्म न चान्यथा हि
दानं च सत्यं च दमः शमश्च ह्यमात्सर्यं ह्रीस्तितिक्षानुसूयाः ॥ ६८ ॥

दानं च यज्ञं च तपः श्रुतं च महाव्रता द्वादश ब्राह्मणस्य ।
एतेभ्य एव प्रवरो द्वादशेभ्यस्तथाऽपि ते न प्रवरा ब्राह्मणस्य ॥ ६९ ॥

एतैर्युताद्ब्राह्मणाद्वै खगेन्द्र नारायणस्य चरणाद्विमुखात्सदापि ।
सद्भक्तियुक्तं श्वपचं परमं वरिष्ठं मन्ये च भक्तिविधुराश्च गुणा वृथैव ॥ ७० ॥

तस्मिन् समर्पितमनोवचनात्मरोहप्राणः पुनाति सकलं मन आदिकं च ।
तदेव भूर्यभिमानयुतं च विप्रं नैवं पुनाति यत एव च भक्तिहीनः ॥ ७१ ॥

स ज्ञानवान् भवति भुक्तियुतेन चेतसा तस्येन्द्रियाणि वशगानि भवन्ति शश्वत् ।
ज्ञानोपदेशोऽनधिकारिणश्च सद्वर्णहीनस्य हरिः सुपूर्णः ॥ ७२ ॥

भक्तस्य पूजां करुणो वृणीते ह्यप्राप्तलाभाय च नैव विष्णुः ।
अनुष्ठितं कर्म भक्तैश्च पश्यन् विनाशित्वात्कृपया नारसिंहः ॥ ७३ ॥

तेषां हरिः फलदानाय नित्यं तत्स्वीकरोति नतु स्वीयार्थमेव ।
अतो हरेः पूर्णकामस्य नित्यं पूजादिकं चोपचारं वदन्ति ॥ ७४ ॥

अतः सदा वासुदेवाय मर्त्यो यद्यत्पूजां प्रकरोत्येव नित्यम् ।
तत्तत्पूजा..............................* ॥ ७५ ॥

यथा मुखश्रीर्दृश्यते दर्पणादौ अलंकृतं चेत्तद्वद्देवेति विद्धि ।
पूजाकाले देवदेवस्य विष्णोः विद्वत्त्वादिकारणं नैव चिन्त्यम् ॥ ७६ ॥

विप्रादित्वं श्वपचत्वं तथैव पूजाकाले भक्तिरेवैकहेतुः ।
विद्वज्जनात् यदि डम्भात्कृता चेत् पूजां नैव स्वीकरोत्येव नित्यं ॥ ७७ ॥

श्वपचेन यदि भक्त्या कृता चेत् पूजां हरिःस्वीकरोत्येव नित्यं ।
डम्भार्थमेव कृतपूजां हरिस्तु न गृह्णाति सर्वदा देवदेवः ॥ ७८ ॥

अतोऽस्म्यहं भक्तवर्येषु चैकः सर्वेश्वरस्याचिन्त्यशक्तेः स्वरूपम् ।
स्तोतुं न शक्नोमि नृसिंहदेव ह्यज्ञोऽहं वै चाल्पशक्तिः कृपालो ॥ ७९ ॥

भक्त्यानुपूर्वेण तु तस्य पुंसः संसारपाशाच्च विमोचनाख्यं ।
फलं भवत्येव न संशयोऽत्र तस्माद्भक्त्या स्तवनं कार्यमेव ॥ ८० ॥

सर्वे ब्रह्माद्या भक्तवर्गाश्च विष्णोस्तिष्ठन्ति नित्यं विधिना चैव देव ।
विशेषो वा तत्र भक्तस्य वर्गे यथा वयं चोद्विजन्तः सदैव ॥ ८१ ॥

तथा ब्रह्माद्यास्तव रूपं च दृष्ट्वा नैवोद्विजन्तश्च यतः प्रधानाः ।
नारायणस्यैव हरेर्मुरारेर्मनोहरैर्नारसिंहादिरूपैः ॥ ८२ ॥

विक्रीडन्तं भक्तवर्गस्य नित्यं सुखाय मोक्षादिप्रयोजनाय ।
तस्मान्नृसिंह मन्युमिमं त्यज त्वं ज्ञानं देहि सुजनस्य सुमन्युरूप ॥ ८३ ॥

नृसिंहरूपेण हतश्च दैत्यो लोकाश्च सौख्ये च रताः समस्ताः ।
यथैव मोदेत च सर्पवृश्चिकात्सुसज्जनो भागवतप्रधानः ॥ ८४ ॥

तथाद्य चाहं हननात् पितुश्च सुसज्जनानां च सुपीडकस्य ।
संसारचक्राच्च यथा बिभेति तथैष रूपान्न बिभेमि नित्यं ॥ ८५ ॥

संसारचक्राच्च यथा बिभेमि तथैव ते जिह्ववक्राच्च नैव ।
संसारचक्राच्च यथा बिभेमि तथाग्निना नैव बिभेमि देव ॥ ८६ ॥

यथैव संसारभ्रमेर्बिभेमि तथैव त्वद्भ्रूभिरथापि नैव ।
संसारदंष्ट्राच्च यथा बिभेमि तथैव ते ह्युग्रदंष्ट्राच्च नैव ॥ ८७ ॥

संसारमालाच्च यथा बिभेमि तथा च ते ह्यान्त्रमाल्याच्च नैव ।
संसारकर्णाच्च यथा बिभेमि तथा च ते शंकुकर्णाच्च नैव ॥ ८८ ॥

संसारनादाच्च यथा बिभेमि तथैव नादान्न बिभेमि नित्यं ।
भार्यानखाग्रच्च यथा बिभेमि तथा च ते क्रूरनखाच्च नैव ॥ ८९ ॥

तस्मान्नृसिंह कृपणवत्सल दुःसहोग्रसंसारचक्रकदनात्प्रबिभेमि नित्यं ।
बद्धः स्वकर्मभिरलं तव पादमूलं संसारचक्रदहने वडवानलं च ॥ ९० ॥

एतादृशं च चरणं शरणं प्रयामि मत्कर्मबीजदहनाय नमो नमस्ते ।
देवादियोनिषु जगत्सु प्रियस्ववस्तुवियोगतश्चाप्रियवस्तुसंगतः ॥ ९१ ॥

तज्जन्यशोकाख्यदवानलेन दिवानिशं दह्यमानो भ्रमामि ।
संसारचक्रपतितस्य दुराशयस्य संवृद्धकोशगृहदाससुतैर्युतस्य ॥ ९२ ॥

सौख्यं च यो वदति तस्य भवेच्च दुःखं संसारगस्य भवतीति च किं नु वाच्यं ।
संसारचक्राख्यसुमृत्युवक्त्रो संदह्यमानस्य दुरन्तचिन्तया ॥ ९३ ॥

कृपौषधं देहि तथा नृसिंह पादारविन्दे तव दास्ययोगम् ।
प्रेमास्पदस्य नृहरेः परदेवताया लीलाकथा अनुदिनं च विरिंचिगीताः ॥ ९४ ॥

अंजस्तराम्यनुगृणन् भवदीयलीला हंसाश्च संगतवतश्च सुदुःखरूपान् ।
भार्यासुताप्तगृहवित्तपशून् शिशूंश्च दुःखादिरूपनरकाणि समस्तजन्तून् ॥ ९५ ॥

त्वत्पादरूपकुसुमे च सुपापतारके भक्तिं प्रदेहि भगवन्न तु काममन्यम् ।
संसारवर्त्मनि सुतीक्ष्णभयंकरे च संभ्रामितश्च सुखलेशमहं न जाने ॥ ९६ ॥

तृष्णाभ्यवर्धत सदा च दुराशयस्य चाशानिवृत्तिमुपयाति कदा हि देव ।
आशा खरा खरतरात्प्रबिभेमि नित्यं छिन्ध्याशु नः सुतकलत्रधनादिकाशाम् ॥ ९७ ॥

संजल्पतस्तव मनूंश्च नृसिंहभूमन् बीजाक्षरैश्च सहितं च सहस्रसंख्यम् ।
हालाहलस्य सुविषस्य न भीतिरस्ति कालानलस्य न तथाच सुमृत्युवक्त्रात् ॥ ९८ ॥

व्यालाच्च नागवृकवृश्चिकफल्गुदुःखात् निर्मुच्यते च किमुतात्र विचार्यमस्ति ।
त्वन्मन्त्रपाठजपतो न तु दुःखलेशो भार्यासुताच्च ह्यपि विश्वत एव नित्यम् ॥ ९९ ॥

यो मन्त्रवर्यमुरुदिव्यमनुत्तमं च सम्यग्विहाय सुरतस्य च दुःखमूले ।
अजितेन्द्रियं च सुविकर्षति श्रीनृसिंह शिश्नोन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ १०० ॥

घ्राणोऽन्यतश्चपलदृक् च तथाननं त्वन्मन्त्रबीजजपतो स्ववशा हि चैते ।
दम्भार्थमेव च सदापि विकुर्वतां च मौनव्रतश्रुततपोऽध्ययनस्वधर्माः ॥ १०१ ॥

व्यर्थं भवेन्ननु कृतं चरितं च सर्वं तस्मात्सुदेहि तव पादसरोजदास्यं ।
एवं च संस्तुतहरिर्भगवान्परेशः सम्यग्जगाद घनगर्जितमेव वाक्यम् ॥ १०२ ॥

## नृसिंह उवाच

प्रह्लाद मे ह्यतिप्रियोऽसि तवाद्य भद्रं कामं वरं च सुवृणीष्व सुशीघ्रमेव ।
एवं सुतीक्ष्णनखरैश्च विराजितेन संश्रावितश्च तमुवाच सुभक्तवर्यः ॥ १०३ ॥

### प्रह्लाद उवाच

विषयेषु रतिर्नित्यं यथा न स्यान्महाप्रभो ।
तथैव मे वरं देहि नान्यथा तु कथंचन ॥ १०४ ॥

### नृसिंह उवाच

मदाज्ञया त्वं राज्यं च प्रकुरुष्व महाप्रभो ।
मदर्पणेन संसारलेपो नैव भवेत्तव ॥ १०५ ॥

एवमुक्तो हृषीकेशस्तत्रैवान्तरधीयत ।
प्रह्लादो हरिमुद्दिश्य राज्यं सर्वमपालयत् ॥ १०६ ॥

वाय्वावेशाच्च प्रह्लादो हरिणा तत्त्वमञ्जसा ।
उपदिष्टो ह्यभूद्वीन्द्र हरिभक्तो महाप्रभुः ॥ १०७ ॥

वाय्वावेशाच्च प्रह्लादो नारदादधमः स्मृतः ।
वाय्वावेशह्रासकाले कर्मदेवसमः स्मृतः ॥ १०८ ॥

तदनन्तरजान्वक्ष्ये श्रुणु पक्षीन्द्रसत्तम ॥

**इति श्रीगरुडपुराणे ब्रह्मकाण्डे प्रह्लादचरित्रे प्रह्लादकृत-नृसिंहावतारस्तुतिवर्णनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥**

## ॥ एकचत्वारिंशोऽध्यायः ॥

### श्रीकृष्ण उवाच

प्रह्लादानन्तरं गंगा भार्या वै वरुणस्य च ।
प्रह्लादादधमा ज्ञेया महिम्ना वरुणाधिका ॥ १ ॥

स्वरूपादधमा ज्ञेया नात्र कार्या विचारणा ।
ज्ञानस्वरूपगं विष्णुं यतो जानाति सर्वदा ॥ २ ॥

अतो गंगेति सा ज्ञेया नात्र कार्या विचारणा ।
भक्त्या विष्णुपदीत्येव कीर्तिता नात्र संशयः ॥ ३ ॥

या पूर्वकाले यज्ञलिङ्गस्य विष्णोः साक्षाद्धरेः विक्रमतः खगेन्द्र ।
वामस्य पादस्य नखाग्रतश्च निर्भिद्य चोर्ध्वाण्डकटाहखण्डम् ॥ ४ ॥

तदुदरमतिवेगात्संप्रविश्यावहन्तीं जगदघततिहन्तुः पादकिंजल्कशुद्धम् ।
निखिलमलनिहन्त्रीं दर्शनात्स्पर्शनाच्च सकृदवगाहात् भक्तिदां विष्णुपादे ॥ ५ ॥

शशिकरवरगौरां मीननेत्रां सुपूज्यां स्मरति हरिपदोत्थां मोक्षमेति क्रमेण ।
रुद्रोऽपि वायुकरमर्दितकालकूटबिन्दुं च प्राश्य शिरसि ह्यतिदह्यमानः ॥ ६ ॥

भागीरथी हरिपदांकमिति स्म नित्यं जानन् महापरमभागवतप्रधानः ।
भक्त्या च क्लिन्नहृदयः परमादरेण धृत्वा स्वमूर्ध्नि परमो ह्यशिवः शिवोऽभूत् ॥ ७ ॥

भागीरथ्याश्च चत्वारि रूपाण्यासन् खगेश्वर ।
महाभिषङ्नरेन्द्रस्य भार्या तु ह्यभिषेचिनी ॥ ८ ॥

द्वितीयेनैव रूपेण गङ्गा भार्या च शन्तनोः ।
सुषेणा वै सुषेणस्य भार्या तु ह्यभिषेचिनी ॥ ९ ॥

मण्डूकभार्या गङ्गा तु सैव मण्डूकिनी स्मृता ।
एवं चत्वारि रूपाणि गङ्गाया इति कीर्तितम् ॥ १० ॥

आदित्येष्वेव गणितः पर्जन्यः समुदाहृतः ।
प्रवर्षति सुवैराग्यं ह्यतः पर्जन्यनामकः ॥ ११ ॥

शरं बाणं पञ्चजन्याच्च पंच हत्वा दग्धा वर्गषट्कं क्रमेण ।
स्वबाणस्य स्वहृदि संस्थितस्य भजेत्सदा नैव भक्तिं विषं च ॥ १२ ॥

लिङ्गं पुष्टं नैव कार्यं सदैव लिङ्गं पुष्टं कार्यमेवं सदाऽपि ।
योनौ सक्तिर्नैव कार्यं सदैव योनौ सङ्गाद्याति मुक्तिं च सुष्ठु ॥ १३ ॥

वैराग्यमेवं प्रकरोति नित्यमतः पर्जन्यसंज्ञकः पक्षिवर्य ।
रामावतारे शरभाख्यो महात्मा सुवानरः स तु पर्जन्य एव ॥ १४ ॥

शरवत्केशा यस्य गात्रे खगेन्द्र संभासन्ते शरभाख्यो यतोऽतः ।
यमस्य भार्या शामला सा खगेन्द्र यस्मात्सदा कलिभार्या प्रियांश्च ॥ १५ ॥

मलान् सम्यक् शमनं संकरोति ह्यतश्च सा शामलासंज्ञकाऽभूत् ।
मलं वक्ष्ये हरिभक्तेर्विरोधि सुलोहपात्रे सन्निधानं च तस्याः ॥ १६ ॥

तद्वैष्णवैस्त्याज्यमेवं सदैव दग्धं वस्त्रं सन्धितनैल्यजन्यम् ।
संकुत्सितं परदुःखं खगेन्द्रं हरेर्भक्तैस्त्याज्यमेवं सदापि ॥ १७ ॥

नोच्चाश्च ये हरिभक्तेर्विहीनास्तेषां सङ्गो नैव कार्यः सदापि ।
पुराणसंपर्कविसर्जितं च पुराणतालं च पुराणवस्त्रम् ॥ १८ ॥

सुजीर्णकन्थाजिनमेखलं च यज्ञोपवीतं कलिभार्याप्रियं च ।
सदा गृहं चोर्णवितानकं च समत्कुणैः पूरितं कुत्सितं च ॥ १९ ॥

कलिप्रियं कलिभार्याप्रियं तन्नैव प्रियं शार्ङ्गपाणेः कदाचित् ।
कांस्ये सुपकं यावनालस्य चान्नं तुषः पिण्याकं बिम्बबिल्वं पलाण्डुम् ॥ २० ॥

दीर्घं तक्रं स्वादुहीनं कदूष्णमेते सर्वे कलिभार्याप्रियाश्च ।
सुदुर्मुखं निन्दनं चार्यजानां सुताडनं चात्मजानां प्रसह्य ॥ २१ ॥

सुपीडनं सर्वदा भर्तृवर्गे गृहस्थितव्रीहिवस्त्रादिचौर्यात् ।
प्रकीर्णभूतान् मूर्धजान् सन्दधानं करैर्युतं देवगृहं कलिप्रियम् ॥ २२ ॥

इत्यादिसर्वं कलिभार्याप्रियं च सुनिर्मलं प्रकरोत्येव नित्यं ।
अतश्च सा शामलेति स्वसंज्ञां अवाप सा देवकी संबभूव ॥ २३ ॥

युधिष्ठिरस्यैव बभूव पत्नी संभाविता तत्र च देवकी सा ।
चन्द्रस्य भार्या रोहिणी वैनतेय ह्यश्विन्यादिभ्यो ह्यधिका सर्वदैव ॥ २४ ॥

आदित्यभार्या संज्ञनाम्नी खगेन्द्र ज्ञेयं च नारायणरूपमेव ॥
जानातीत्येव संज्ञामवाप संज्ञेति लोके सूर्यभार्या खगेन्द्र ॥ २५ ॥

उषा तु या ह्यनिरुद्धस्य भार्या ह्युपास्ते वै षड्गुणं चैव विष्णुम् ।
अतश्चोषानामिका वै खगेन्द्र भार्या चैव ह्यनिरुद्धप्रिया च ॥ २६ ॥

ब्रह्माण्डस्य ह्यभिमानं च देव्या विराडिति ह्यभिधामाप तेन ।
गङ्गादिषट्कं सममेव नित्यं परस्परं नोत्तमं नाधमं च ॥ २७ ॥

प्रधानाग्नेः पुत्रतः पावकाख्यात्सदाऽधमा नात्र विचार्यमस्ति ।
आसां ज्ञानात्पुण्यमाप्नोति नित्यं सदा हरिः प्रीयते केशवोऽलम् ॥ २८ ॥

गङ्गादिभ्यो ह्यवरा चाग्निजाया स्वाहेति नाम्ना द्विगुणेनैव हीना ।
स्वाहाकारो मन्त्ररूपाभिमानी स्वाहेति संज्ञामाप सदैव वीन्द्र ॥ २९ ॥

अग्नेर्भार्यानन्तरं सम्बभूव जलाभिमानी चन्द्रपुत्रो बुधश्च ।
बुद्ध्या हरिं राष्ट्रजातं च सर्वं धृतत्वतो बुधसंज्ञामवाप ॥ ३० ॥

स एवाभूदभिमन्युर्महात्मा सुभद्राया जठरे ह्यर्जुनाच्च ।
कृष्णस्य चेन्द्रस्य यमस्य चांशैः सुसंयुतश्चाश्विनोर्वै हरस्य ॥ ३१ ॥

स्वाहाधमश्चन्द्रपुत्रो बुधस्तु पादारविन्दे विष्णुदेवस्य भक्तः ।
नामात्मिका त्वश्विभार्या ह्युषा नाम प्रकीर्तिता ॥ ३२ ॥

बुधाधमा सा विज्ञेया स्वाहादशगुणाधमा ।
नकुलस्य भार्या मगधस्य पुत्री शल्यात्मजा सहदेवस्य भार्या ॥ ३३ ॥

उभे ह्येते चाश्विभार्या ह्युषापि उपास्ते वै षड्गुणं विष्णुमाद्यम् ।
अतोऽप्युषा संज्ञका सा खगेन्द्र ह्यनन्तरान् श्रुणु वक्ष्ये महात्मन् ॥ ३४ ॥

ततः शनिः पृथिव्यात्मा शनैश्चरति सर्वदा ।
अतः शनैश्चरो नाम ह्युषायाश्च दशावरः ॥ ३५ ॥

कर्मात्मा पुष्करो ज्ञेयः शनेरप्यधमो मतः ।
नामाभिमान्युषसः किंचिदूनो दशगुणाधमः ॥ ३६ ॥

हरिप्रीतिकरो नित्यं पुष्करः क्रीडते यतः ।
अतस्तु पुष्करो नाम्ना लोके स परिकीर्तितः ॥ ३७ ॥

हरिप्रीतिकरान् धर्मान् श्रुणु वक्ष्ये खगाधिप ।
प्रातःकाले समुत्थाय स्मरेन्नारायणं हरिम् ॥ ३८ ॥

तुलसीवन्दने काले श्रीकृष्णं संस्मरेत्खग ।
विण्मूत्रोत्सर्गकाले च ह्यपानात्मककेशवम् ॥ ३९ ॥

त्रिविक्रमं शौचकाले गङ्गाया जनकं हरिम् ।
दन्तधावनकाले तु चन्द्रान्तर्यामिणं हरिम् ॥ ४० ॥

मुखप्रक्षालने काले माधवं संस्मरेत्खग ।
गवां कण्डूयने चैव स्मरेद्गोवर्धनं हरिम् ॥ ४१ ॥

सदा गोदोहने काले स्मरेद्गोपालवल्लभम् ।
अनन्तजन्मार्जितपुण्यसंचयात् सुपक्वकाले च खगेन्द्रसत्तम ॥ ४२ ॥

स्पर्शो गवां चैव सदा नृणां वै भवत्यतो नात्र विचार्यमस्ति ।
यस्मिन् गृहे नास्ति सदोत्तमा गौर्यदङ्गणे श्रीतुलसी च नास्ति ॥ ४३ ॥

यस्मिन् गृहे देवमहोत्सवश्च यस्मिन् गृहे श्रवणं नास्ति विष्णोः ।
तत्संसर्गाद्याति दुःखादिकं च तस्य स्पर्शो नैव कार्यः कदापि ॥ ४४ ॥

गोस्पर्शनविहीनस्य गोदोहनमजानतः ।
गोपोषणविहीनस्य पुनर्जन्म निरर्थकम् ॥ ४५ ॥

गोग्रासमदातुश्च गोपुष्टिं चाप्यकुर्वतः ।
गतिर्नास्त्येव नास्त्येव ग्रामश्चाण्डालवत्स्मृतः ॥ ४६ ॥

वत्सस्य स्तनपाने तु बालकृष्णं च संस्मरेत् ।
दधिनिर्मन्थने चैव मन्थनाधारिणं हरिम् ॥ ४७ ॥

मृत्तिकास्नानकाले तु वराहं संस्मरेद्धरिम् ।
पुण्ड्राणां धारणे चैव केशवादींश्च संस्मरेत् ॥ ४८ ॥

मुद्राणां धारणे चैव शङ्खचक्रगदास्तथा ।
पद्मनारायणीं मुद्रां कृद्धोल्कादींश्च संस्मरेत् ॥ ४९ ॥

श्रीरामसंस्मृतिं चैव सन्ध्याकाले खगोत्तम ।
अच्युतानन्तगोविन्दान् श्राद्धकाले च संस्मरेत् ॥ ५० ॥

प्राणादिपंचकं होमेऽनिरुद्धादींश्च संस्मरेत् ।
अन्नाद्यर्पणकाले तु वासुदेवं च संस्मरेत् ॥ ५१ ॥

आपोशनस्य काले तु वायोरन्तर्गतं हरिम् ।
वस्त्रधारणकाले तु ह्युपेन्द्रं संस्मरेद्धरिम् ॥ ५२ ॥

यज्ञोपवीतस्य च धारणे तु नारायणं वामनाख्यं स्मरेत्तु ।
आर्तिक्यकाले च तथैव विष्णोः सम्यक्स्मरेत् परशुरामाख्यविष्णुम् ॥ ५३ ॥

आपोशने वैश्वदेवस्य काले तदन्यहोमादिषु भस्मधारणे ।
स्मरेत्तु भक्त्या परमादरेण नारायणं जामदग्न्याख्यरामम् ॥ ५४ ॥

त्रिवारतीर्थग्रहणस्य काले कृणं रामं वासुदेवं क्रमेण ।
शङ्खोदकस्योद्धरणं चैव काले मुकुन्दरूपं संस्मरेत्सर्वदैव ॥ ५५ ॥

ग्रासे ग्रासे स्मरणे चैव कार्यं गोविन्दसंज्ञस्य विशुद्धरूपम् ।
एकैकभक्ष्यग्रहणस्य काले सम्यक्स्मरदच्युतं वै खगेन्द्र ॥ ५६ ॥

शाकादीनां भक्षणे चैव काले धन्वन्तरिं संस्मरेच्चैव नित्यम् ।
तथापरान्नस्य च भोगकाले स्मरेत्सम्यक् पाण्डुरङ्गं च विष्णुम् ॥ ५७ ॥

हैयंगवीनस्य च भक्षणे वै सम्यक्स्मरेत्ताण्डवाख्यं च कृष्णम् ।
दध्यन्नस्य भक्षणे चैव काले गोपालकृष्णं संस्मरेच्चैव विष्णुम् ॥ ५८ ॥

दुग्धान्नभोगे च तथैव काले सम्यक्स्मरेत् श्रीनिवासाख्यविष्णुम् ।
सुतैलसर्पिःषु सुपक्वभक्षसंभोजने संस्मरेद्व्यङ्कटेशम् ॥ ५९ ॥

द्राक्षासुजम्बूकदलीरसालनारिङ्गदाडिम्बफलानि चारु ।
स्मरेत्तु रम्भोत्तमनारिकेलधात्रीसुभोगे खलु बालकृष्णम् ॥ ६० ॥

सुपानकस्यैव च पानकाले सम्यक् स्मरेन्नारसिंहाख्यविष्णुम् ।
गङ्गामृतस्यैव च पानकाले गङ्गातातं संस्मरेद्विष्णुमेव ॥ ६१ ॥

प्रयाणकाले संस्मरेत्तार्क्ष्यवाहं नारायणं निर्गुणं विश्वमूर्तिम् ।
पुत्रादीनां चुम्बने चैव काले सुवेणुहस्तं संस्मरेत्कृष्णमेव ॥ ६२ ॥

सुसङ्गकाले स्वस्त्रियश्चैव नित्यं गोपीकुचद्वन्द्वविलासितं हरिम् ।
ताम्बूलभोगे संस्मरेच्चैव विष्णुं प्रद्युम्नाख्यं वासुदेवं हरिं च ॥ ६३ ॥

शय्याकाले संस्मरेच्चैव विष्णुं प्रद्युम्नाख्यं वासुदेवं हरिं च ।
निद्राकाले संस्मरेत्पद्मनाभं कथाकाले व्यासरूपं हरिं च ॥ ६४ ॥

सुगानकाले संस्मरेद्वेणुगीतं हरे हरे प्रवदेत्सर्वदैव ।
श्रीमत्तुलस्याश्छेदने चैव काले श्रीरामरामेति च संस्मरेत्तु ॥ ६५ ॥

पुष्पादीनां छेदने चैव काले सम्यक्स्मरेत्कपिलाख्यं हरिं च ।
प्रदक्षिणे गरुडान्तर्गतं च हरिं स्मरेत् सर्वदा वै खगेन्द्र ॥ ६६ ॥

प्रणामकाले देवदेवस्य विष्णोः शेषान्तस्थं संस्मरेच्चैव विष्णुम् ।
सुभीतिकाले संस्मरेन्नारसिंहं नारायणं संस्मरेत्सर्वदाऽपि ॥ ६७ ॥

पूर्तिर्यदा क्रियते कर्मणां च सम्यक्स्मरेत् वासुदेवं हरिं च ।
एवं कृतानि कर्माणि हरिप्रीतिकराणि च ॥ ६८ ॥

सम्यक् प्रकुर्वन्नेतानि पुष्करो हरिवल्लभः ।
एतस्मादेव पक्षीश कर्मपः समुदाहृतः ॥ ६९ ॥

पुष्कराख्यानमतुलं श्रुणोति श्रद्धयाऽन्वितः ।
हरिप्रीतिकरे धर्मे प्रीतियुक्तो भवेत्सदा ॥ ७० ॥

**इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे कृष्णगरुडसंवादे पुष्करचरित्रे तत्त्वरहस्यं नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥**

**॥ समाप्तमिदं गरुडपुराणम् ॥**

**॥ श्रीमध्वेशार्पणमस्तु ॥**

# ನಮ್ಮ ಪ್ರಕಟನೆಗಳು

| | | |
|---|---|---|
| 1. | ಸಂಧ್ಯಾರಹಸ್ಯ | 10.00 |
| 2. | ಪೂಜಾರಹಸ್ಯ | 60.00 |
| 3. | ಮಾಂಡೂಕೋಪನಿಷದ್ಭಾಷ್ಯಮ್ | 75.00 |
| 4. | ಸಂಧ್ಯಾರಹಸ್ಯ (ತಮಿಳು) | 20.00 |
| 5. | ಪೂಜಾರಹಸ್ಯ (ತಮಿಳು) | 25.00 |
| 6. | ಸುಮಧ್ವವಿಜಯ (ತಮಿಳು) | |
| 7. | ಸದಾಚಾರಸ್ಮೃತಿ | 10.00 |
| 8. | ಶ್ರೀಮದ್ಭಾಗವತಸಾರೋದ್ಧಾರ (ಕನ್ನಡ ಅನುವಾದ) | 50.00 |
| 9. | ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧಾಸ್ತುತಿ | 6.00 |
| 10. | ಶ್ರೀರುದ್ರವ್ಯಾಖ್ಯಾನಮ್ | 30.00 |
| 11. | ಶ್ರೀಮದ್ಭಾಗವತ ನವಮಸ್ಕಂಧ | 75.00 |
| 12. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 1 | 100.00 |
| 13. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 2 | 125.00 |
| 14. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 3 | 65.00 |
| 15. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 4 | 80.00 |
| 16. | ಶ್ರೀಮದ್ಭಾಗವತ ದಶಮಸ್ಕಂಧ ಸಂಪುಟ 5 | 175.00 |
| 17. | ಪ್ರಮೋದ ತರಂಗಿಣಿ (ಕನ್ನಡ) | 30.00 |
| 18. | ಗೀತಾಪ್ರತಿಪದಾರ್ಥಚಂದ್ರಿಕಾ | 75.00 |
| 19. | ಶ್ರೀಸತ್ಯಪ್ರಮೋದವಿಜಯ (ಕನ್ನಡಾನುವಾದ ಸಹಿತ) | 25.00 |
| 20. | ಶ್ರೀಗರುಡಪುರಾಣ- ಬ್ರಹ್ಮಕಾಂಡ | 80.00 |

ಪುಸ್ತಕಗಳು ದೊರೆಯುವ ವಿಳಾಸ :

ವ್ಯವಸ್ಥಾಪಕರು,

ಶ್ರೀಜಯತೀರ್ಥ ವಿದ್ಯಾಪೀಠ, ಶ್ರೀಮದುತ್ತರಾದಿಮಠ,

ಬಸವನಗುಡಿ, ಬೆಂಗಳೂರು - 560 004.